## Authorities consulted (Abbreviations)


1. Bibliotheca Indica, Calcutta (Bib. Ind.).
2. Bhāṣāpariccheda, Muktāvalī, Dinakarī, Rāmarudrī, ed. Lakṣman Śāstrī Draviḍ.
3. Colebrooke's (Col.) miscellaneous Essays, ed. E. B. Cowell.
4. Gobhilagṛhya-sūtra with Bhaṭṭanārāyaṇa's Bhāṣya, ed. Calcutta Sanskrit Series.
5. Journal of the Royal Asiatic Society (J R A S).
6. Khaṇḍanakhaṇḍakhādya, trans. Jhā (Indian Thought).
7. Kiraṇāvalī, ed. Benares, 1884 and 1897.
8. Kusumāñjali, ed. Bibliotheca Indica.
9. Mahābhārata, ed. Bangavasi Office, Calcutta.
10. Mīmāṃsāsūtra of Jaimini, ed. Benares.
11. Müller's Six Systems of Indian Philosophy.
12. Nyāyabhāṣya of Vātsyāyana, ed. Benares, 1896.
13. Nyāyakandalī of Śrīdhara, ed. Benares, 1895.
14. Nyaya Philosophy, Sāḍholal Lectures, by Gaṅgānāth Jhā (Indian Thought).
15. Nyāyamañjarī of Jayanta, ed. Benares, 1895.
16. Nyāyasūtra, ed. and trans. S. C. Vidyābhūṣaṇa, 1909.
17. Nyāyasiddhāntamañjarī of Jānakīnātha (The Pandit, new series).
18. Nyāyasāra of Bhā Sarvajña, ed. Vidyābhūṣaṇa, 1910.
19. Nyāyavārtika of Uddyotakara, ed. Bib. Ind., 1887-1904.
20. Nyāyavārtikatātparyaṭīkā of Vācaspati Miśra, ed. Benares, 1898.

21. Nyāyavārtikatātparyapariśuddhi, ed. Bib. Ind.
22. Praśastapāda's Bhāṣya, ed. Benares, 1895.
23. Parikṣāmukhasūtra of Māṇikya Nandin, ed. Bib. Ind.
24. Sarvadarśanasaṃgraha of Mādhava, ed, Ānandāśrama.
25. Ṣaḍdarśanasamuccaya of Haribhadra with Commentary, ed. Bib. Ind.
26. Saptapadārthī, ed. Benares; ed. V. S. Ghate; ed. Trans. Gurumūrti.
27. Sāṅkhyasūtra, ed. Bib. Ind.
28. Tarkāmṛta of Jagadīśa, ed. Calcutta, 1880.
29. Tarkabhāṣa of Keśava Miśra, ed. Poona, 1894.
30. Tattvacintāmaṇi of Gaṅgeśa, ed., Bib. Ind.
31. Tarkakaumudī of Laugākṣi Bhāskara, ed. M. N. Dvivedī, 1886.
32. Tārkikarakṣā of Varadarāja, ed. Benares, 1903.
33. Tarkasaṃgraha of Annaṃ Bhaṭṭa, ed. Y. V. Athalye, 1897, with preface by M. R. Bodas.
34. Tarkasaṃgraha (TS.) ed. Mehendale.
35. Tarkasaṃgraha, ed. M. M. Kuppusvāmi Śāstri (Primer of Indian Logic).
36. Vaiśeṣikasūtra (V. S.), ed. Bib. Ind.
37. Vaiśeṣikasūtropaskāra of Śaṅkara Miśra, ed. Bib. Ind.
38. Vidyābhūṣaṇa's History of Indian Logic (Calcutta University).
39. Vyomavatī of Vyomaśivācārya, ed. Benares.
40. Yogasūtra of Patañjali, Bombay Sanskrit Series, 1882.

# सप्तपदार्थीसूत्राणां सूची

सूत्राणि — पत्राङ्काः

# सटीक-सप्तपदार्थीग्रन्थगतविषयाणां सूची

ॐ नमः शिवाय

# सप्तपदार्थी

हेतवे जगतामेव संसारार्णवसेतवे।
प्रभवे सर्वविद्यानां शम्भवे गुरवे नमः॥

मितभाषिणी

वेदान्तविज्ञानसुनिश्चितार्थैर्योगीश्वरैर्ध्येयमजं विशुद्धम्।
उमाऽनुमाभ्यामभिगम्यमानं वन्दे महेशं सदनुग्रहेशम्(A)॥
विघ्नेशादीन् नमस्कृत्य माधवाख्यसरस्वती।
शिवादित्य[1]कृते टीकां करोति मितभाषिणीम्॥

वागीश एकः सुरराजवन्द्यः कृत्वा पुरस्तर्कमिहावतीर्णः।
न्यवेशयद् यत्र विभज्य रूपं नाम्ना गुणेनापि समे शिवेन।
फणिभूषण-कामाख्यानाथाख्यं तद् गुरुद्वयम्।
ध्यात्वा सप्तपदार्थीया टिप्पनी क्रियते मया॥

(A) वेदान्तेति। वेदान्त उपनिषत् तद्रूपं यद् विज्ञानं विलक्षणज्ञानसाधनं शास्त्रं तेन शोभनमप्रामाण्यशङ्काविधूननेन दृढतरं यथा तथा निश्चिता अर्था आत्मा तदितरे च यैस्तादृशैर्योगीश्वरैर्युक्तयुञ्जानयोगिभिर्ध्येयम्। ध्येयत्वेन प्राप्तं मूर्त्तिमत्त्वं परिहरति अजमिति, अजं जन्मादिविकारषट्करहितं कूटस्थनित्यम्। तथात्वमेवोपपादयति—विशुद्धमिति, उपाधिरहितमित्यर्थः। अत्रोपाधिशून्यस्य ध्येयत्वं न सम्भवतीत्याशङ्क्य विशुद्धत्वं स्वरूपनिर्देशाभिप्रायेणैवोक्तम्, ध्यानार्थं त्वस्ति कल्पितं रूपमित्याह—उमेति। उमया पार्वत्या अभिगम्यमानं प्राप्यमाणं स्वीकृतार्द्धशरीरम्, एवम्भूतमेव अनुमया अभिगम्यमानम् अनुमित्या विषयीकृतमनुमानप्रमाणगोचरमिति पर्यवसितार्थः। एतेन पूर्वोक्ते निदिध्यासनलक्षणध्यानोपयुक्ते हेतुरुक्तः। तथा च स्मृतिः—'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। मत्वा च सततं ध्येय एते दर्शनहेतवः॥' इति।

1. '-कृतेष्टीकां' ख।

विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकं कर्त्तव्यविघ्नविघातकं परमेश्वर-नमस्कारलक्षणं मङ्गलमाचरन् अर्थाद्विषयप्रयोजने दर्शयति—हेतवे इति ।

ननु नमस्कारादि मङ्गलाचरणं (A)फलप्रमाणयोरभावादयुक्तमिति चेत्—न, फलं तावत् कर्त्तव्यविषयविघ्नध्वंस एव वरीवर्त्ति न त्वभीष्टसमाप्तिः, तत्र[1] मङ्गलस्यान्वयव्यतिरेकाभ्यां व्यभिचारात्,[2] (B)कृतेऽपि मङ्गले कादम्बर्यादौ समाप्त्य-भावात्, अकृतेऽपि मङ्गले प्रमत्त-नास्तिकाद्यनुष्ठितकर्मसमाप्तेः । विघ्नध्वंसे तु नैवम्, यावन्मङ्गलं तावद् विघ्नध्वंसाङ्गीकारात्, विघ्नध्वंस[3]कामानां तादृशाचारानुमित-श्रुत्या 'विघ्नध्वंसकामो नमस्काराद्याचरेत्' इत्येवंरूपया विघ्नध्वंसमङ्गलयोः कार्य-कारणभावावबोधनेनाव्यभिचारात् । समाप्तिस्तु प्रतिबन्धक[4]विघ्नध्वंससहकृत-

---

अत्र य उमयाऽभिगम्यमानो भवति स उमया कथमनभिगम्यमानः स्यादिति अनुमापदे नञस्तदर्थस्य च अभिगमनक्रियायामन्वयस्याऽऽपाततः प्रतीयमानत्वाद् उमाकर्तृकाभिगमव्यक्तौ उमाकर्तृकत्वा-भावावगाहनाद्वा विरोधः, स चानुमापदस्य नञ्शून्यत्वेनार्थान्तरपरतया परिहृतः । यद्वा, उमया अभिगम्यो लभ्यो मानः प्रणयकोपो यस्य, यमवलम्ब्य उमया प्रणयकोपो हृदि ध्रियते इत्यर्थः । अथवा, उमयैव यस्य मानं परिमाणमियत्ता ज्ञायत इत्यर्थः । एवम् अनुमया अभिगम्यम् आभिमुख्ये-नानुकूल्येन प्राप्यं मानं 'तदैक्षते'त्यादि प्रमाणवाक्यं यत्र, तथा च प्रमाणद्वयसंप्लवसत्त्वेन नास्तिकै-र्वैनाशिकैरपि नात्र संशयः कर्त्तव्य इति भावः । एतेन ईश्वरे साधनविशेषवतः प्रत्यक्षविषयत्वं तथा शास्त्रानुमानयोरुपजीव्योपजीवकभावश्च सम्भवतीति प्रदर्शितम् । विशुद्धस्यापि रूपकल्पनोप-पादनायाऽऽह सदिति । सतां साधूनामनुग्रहे शुभोदर्कभोगापवर्गफललाभाय उपायप्रदर्शनादौ ईशं समर्थम् । एतेन 'उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना' इति शास्त्रं प्रमाणीकृतम् । एतादृशं महेशं सर्वशक्तिसम्पन्नमेव तदाख्यं ब्रह्म वन्दे इति वाक्यार्थः । वैशेषिकप्रकरणे व्याख्यातव्ये टीकाकृतो वेदान्तिविशेषत्वेन स्वसम्प्रदायसम्मतमङ्गलाचरणं न दोषायेति विभावनीयम् ।

(A) फलेति । तथा च 'न कुर्यान्निष्फलं कर्मे'ति निषेधसत्त्वेन मङ्गलाचरणं न कर्त्तव्यमित्य-भिप्रायः । ननु सन्ध्यावन्दनादिनित्यकर्मणः फलराहित्येऽप्यस्ति कर्त्तव्यतेत्यत आह—प्रमाणेति । तथा च तत्र 'अहरहः सन्ध्यामुपासीत' इति श्रुतिरस्ति प्रमाणम्, तेन प्रत्यवायानुत्पत्त्यादिरूपं फलमपि सिध्यतीति चेदस्त्यत्रापि अनुमिता श्रुतिः फलं चेति भावः । प्रमाणाभावोऽत्र मङ्गला-चरणस्य कर्त्तव्यतायामेवाशङ्कितो न तु मङ्गलाचरण इति बोध्यम् ।

(B) समाप्तेः फलत्वे अन्वयव्यभिचारं दर्शयति—कृतेऽपीति । व्यतिरेकव्यभिचारमाह—अकृत इति ।

---

1. अतः परं क-पुस्तके 'हि समाप्तौ' इत्यधिकम् । 2. अतः परं क-पुस्तके 'तथा हि' इत्यधिकम् । 3. '-कामनया' ख । 4. '-दुरित-' ख ।

लोकावगतस्वकारणादेव, यथा—(A)कारीरीयागेणा[1]वग्रहध्वंसे वृष्टिः स्वकारणा[2]देव भवति तद्वत्। क्वचित् समाप्त्य[3]भावस्तु विघ्नभूयस्त्वादन्तरोत्पन्नविघ्नान्तराद्वेति। नास्तिकानुष्ठितकर्मसमाप्तिस्तु (B)जन्मान्तरादनुवर्त्तमानविघ्नाभावात्। प्रयोगस्तु—नमस्कारो वेदबोधितकर्त्तव्यताकः अलौकिकाविगीतशिष्टाचारविषयत्वात् दर्शाद्यावारवत्। अस्यार्थः—वेदेन बोधिता कर्त्तव्यता यस्य[4] स तथा। शेषाद् विभाषेति (पा० ५।४।१५४) क-प्रत्ययः। निर्विघ्नसमाप्तिकामो [5]मङ्गलमाचरेदित्याचारानुमितवेदेन कर्त्तव्यता बोध्यते "इति साध्यार्थः"[6]*। [7]ननु समाप्तेरेव काम्यत्वान्मङ्गलफलत्वापत्तिरिति चेत् न, (C)'नागृहीतविशेषणा [8]विशिष्टे बुद्धिरि'ति न्यायेन निर्विघ्नपदवाच्यविघ्नाभावस्यैव [9]फलत्वात्। हेतौ तु आचार[10]विषयत्वादित्युक्ते चैत्यवन्दनादौ व्यभिचारः।

---

(A) कारीरी नाम वृष्टिप्रतिबन्धकनाशको यागविशेषः। 'वृष्टिर्वर्षं तद्विघाते वग्रहावग्रहौ समौ' इत्यमरः।

(B) जन्मान्तरानुष्ठितमङ्गलाचरणबलादिति तूदयनाचार्याः। अन्ये तु अस्ति नास्तिकादीनामपि कायिकं मानसं ग्रन्थबहिर्भावेण वाचिकं वा मङ्गलाचरणमिति व्यभिचारं परिहरन्ति। वयं तु—ईश्वरास्तित्वनिरासार्थं सततं तच्चिन्तापराणां तेषामस्ति आस्तिकेभ्योऽपि गरीयो मङ्गलाचरणमिति परिहरामः। अत एव—'तथाऽपि स्मर्तॄणां वरद परमं मङ्गलमसी'त्युक्तम्। तथा उदयनाचार्या अपि—

इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः।
किं तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक त्वयैव कृपया ते तारणीया नराः॥ इति।

(C) नागृहीतविशेषणा बुद्धिर्विशिष्टे उपजायते इति न्यायेनेत्यर्थः। तथा चात्र अयम्भावः—विशिष्टबुद्धौ विशेषणज्ञानसामग्र्या अन्वयव्यतिरेकौ तावदनुभवसिद्धौ। एवं सत्यपि यथा तस्या विशेषणांशज्ञानसम्पादनेनैव चरितार्थता न तु विशेष्यांशेऽपि तस्याः प्रयोजकत्वमभ्युपेयते, तथा विघ्नविरहवत एव पुरुषस्य कार्यसमाप्तिसम्भवेन समाप्तिद्वारीभूतविघ्नविरहसम्पादनेनैव मङ्गलस्य चरितार्थता अभ्युपेया प्रथमोपस्थितत्वात्, समाप्तौ फलत्वस्वीकारे व्यभिचाराच्चेति।

---

1. '-वग्रहे' ख। 2. ख-पुस्तके 'एव' इति नास्ति। 3. '-भावो विघ्न-' ख। 4. अतः परं क-पुस्तके 'नमस्कारस्य' इत्यधिकम्। 5. 'नमस्कारादि मङ्ग-' ख। 6. 'इत्यर्थः' ख। 7. 'नन्वेवं' ख। 8. 'विशेष्य-बुद्धिः' क। 9. 'फलवत्त्वात्' ख। 10. '-विषया-' ख।

(A)चैत्यं नाम बौद्धानां [1]देवस्थानम्[1]* [2]तद्वन्दनस्यापि[2]* तदाचारविषयत्वं वरीवर्त्ति, न तु वेदबोधितकर्त्तव्यताकत्वम्, अतो विशिनष्टि—शिष्टेति। वेदप्रामाण्याभ्युपगन्ता शिष्टः, तदाचारविषयत्वं चैत्यवन्दनादौ नास्तीति न व्यभिचारः। एवं विश्वामित्रादीनां [3]त्रिशङ्क्वाद्ययाज्ययाजने व्यभिचारः, तस्य शिष्टाचारविषयत्वेऽपि वेदबोधितकर्त्तव्यताकत्वाभावात्, अत उक्तम् अविगीते[4]त्याचारविशेषणम्। अविगीतो धर्मशास्त्राविरुद्धः शिष्टानामाचार इत्यर्थः। विश्वामित्रादीनामयाज्ययाजनादि तु विगीतमिति न [5]तत्र व्यभिचारः। अविगीतेत्याद्युक्ते शिष्टानां भोजनादौ तदाचारविषये व्यभिचारः, भोजनादे रागतः प्राप्तत्वेन वेद[6]बोधितत्वाभावात्, अत उक्तम् अलौकिकेति। अलौकिकत्वं [7]वेदैकविषयत्वम्(B)। भोजनं [8]च प्रत्यक्षसिद्धमिति न तत्र व्यभिचारः। अलौकिकश्चासौ [9]अविगीतशिष्टाचारश्चेति समासः। आचारः प्रयत्नः तद्विषयत्वादिति हेत्वर्थः। (C)दर्शादिः शिष्टाचारविषयो भवति, 'दर्श[10]पूर्णमासाभ्यां [11]स्वर्गकामो[11]* यजेत' इत्यादिवेदबोधितकर्त्तव्यताको भवति, तद्वत् नमस्कारोऽपि व्याप्तिपक्षधर्मताविशिष्टहेतुमत्त्वाद् वेदबोधितकर्त्तव्यताक इति प्रमाणार्थः। अतः प्रमाणफलयोः सत्त्वान्मङ्गलाचरणं युक्तमेवेति मत्वा तदाचचार ग्रन्थकारः।

'हेतवे' इति, 'शम्भवे नम' इत्यन्वयः। 'नमः-स्वस्ती'त्यादिना ( पा० २।३।१६ ) चतुर्थी। शं सुखं भवत्यस्मादिति व्युत्पत्त्या स्रक्[12]चन्दनादेर्नमस्कारः कृतः स्यान्नेश्वरस्य, अत [13]आह—गुरवे इति। हिताहितप्राप्तिपरिहारोपदेष्टा गुरुः, तस्मै इत्यर्थः। स्रगादे[14]स्त्वचेतनत्वेन गुरुत्वाभावात् न तस्य नमस्कारः। गुरुत्वे हेतुमाह—विद्यानां

(A) 'चैत्यमायतने बुद्धबिम्बेऽप्युद्देश्यपादपे' इति रुद्रः।

एको वृक्षो हि यो ग्रामे भवेत् पर्णफलान्वितः।
चैत्यो भवति निर्ज्ञातिरर्चनीयः सुपूजितः॥

( महाभारतम् आदिपर्व अ० १५१, श्लो० ३३ )

(B) अत्र वेदैकविषयत्वं यदि वेदाजन्यज्ञानाविषयत्वे सति तज्जन्यज्ञानविषयत्वरूपम्, तदा पक्षे मङ्गलाचरणे तदसम्भवात् स्वरूपासिद्धिरिति वेदैकगम्यतत्तत्फलजनकत्वकत्वमित्यर्थो बोध्यः। न चैवं भोजने प्रत्यक्षसिद्धत्वकथनं व्यर्थम्, तत्र भोजनजन्यतृप्तौ मानसप्रत्यक्षसिद्धत्वकथने तात्पर्यादिति ध्येयम्।

(C) उक्तयोः साध्यहेत्वोर्व्याप्तिग्रहोपायभूतं सहचारं दर्शयति दर्शादिरिति। उत्तरवाक्ये तद्वदिति दर्शनादत्र यथेत्यर्थतो बोध्यम्।

1. 'स्थानम्' ख। 2. 'तस्यापि' ख। 3. ख-पुस्तके 'आदि'पदं नास्ति। 4. 'आचारविशेषणमि'ति ख-पुस्तके नास्ति। 5. 'तत्र'ेति ख-पुस्तके नास्ति। 6. '-बोधितकर्त्तव्यताकत्वाभावात्' ख। 7. 'ऐहिकगोचरप्रमाणाविषयत्वम्' ख। 8. 'तु' ख। 9. 'अविगीतश्चासौ' ख। 10. '-पौर्ण-' ख। 11. इदं ख-पुस्तके नास्ति। 12. '-चन्दनगीतादेरपि' ख। 13. 'उक्तम्' ख। 14. ख-पुस्तके 'तु' इति नास्ति।

प्रभवे इति। विद्याशब्दो विद् ज्ञाने इत्यस्मात् [1]धातोः 'संज्ञायां समज-निषद्-निपत-मन-विद्-षुञ्-शीङ्-भृञिणः' [ पा० ३।३।९९ ] इति सूत्रेण क्यप्-प्रत्ययान्तो ज्ञानवचनः। तेन तदुत्पादकानि विद्यास्थानानि लक्ष्यन्ते। तानि तु—

पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥
आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थ[2]शास्त्रकम्।

इति स्मृत्युक्तानि। विद्या[3]स्थानानां प्रभुत्वं तद्वक्तृत्वम्, विद्यानां वक्तृत्वाद् गुरुत्व-मित्यर्थः। विद्यानां प्रभवे गुरवे [4]शम्भवे नम इत्युक्तेऽपि न विवक्षितेश्वर-नमस्कारसिद्धिः, योगिनां[5] कतिपयविद्यास्थानवक्तृत्वं[6] सम्भवति, अत उक्तं सर्वेति। सर्वविद्यास्थानानां प्रभुत्वं च न तद्वक्तृत्वमात्रम्, किन्तु स्वतन्त्रवक्तृत्वम्[7]। मुनीनां तु गुरुपूर्वकत्वात् न स्वतन्त्रवक्तृत्वमिति परमेश्वरस्यायं नमस्कारो नान्यस्येति सिद्धम्।

एतत् तु [8]सर्वे शब्दा व्युत्पन्ना[8]* एवेति पक्षमाश्रित्य व्याख्यातम्। वि-प्र-संभ्यो डुसंज्ञायामिति ( पा० ३।२।१८० ) [9]सूत्रे (A)मितद्र्वादिभ्यश्चेति वार्त्तिकेन[10]असंज्ञायां डुप्रत्ययविधानाच्च शम्भुशब्दो यौगिको व्याख्यातः।

[11]अथ पुराणादिप्रसिद्धिबलात् शम्भुशब्दः परमेश्वरे रूढ इति पक्षमाश्रित्येदमेवोत्त-रार्द्धं व्याख्यायते[11]*—शम्भवे परमेश्वराय नम इत्यन्वयः। विद्यारम्भे परमेश्वर एव नमस्कार्यः 'ईशानः सर्वविद्याना'मिति श्रुत्या [12]समस्तविद्यानां प्रभुत्वस्योक्तत्वात् इति सूचयन् तस्य लक्षणमाह—प्रभवे सर्वविद्यानामिति। [13]प्रभुत्वं तत्स्वाम्यं स्वतन्त्र-[14]वक्तृत्वमिति यावत्। तच्च परमेश्वरलक्षणम्, कतिपयविद्या[15]वक्तृव्यावृत्त्यर्थं सर्वेति। योगिव्यावृत्त्यर्थं स्वातन्त्र्यं द्रष्टव्यम्। गुरवे शम्भवे नम इति सामानाधिकरण्येन गुरुदेवतयोरैक्येन चिन्तनं विद्याप्राप्तावन्तरङ्गं (B)तदारम्भे कार्यमिति सूचयाम्बभूव।

(A) 'मितद्र्वादिभ्य उपसंख्यानमि'ति वार्त्तिकसूत्रपाठः।

(B) अन्तरङ्गमिति, तथा च—

1. इदं ख-पुस्तके नास्ति। 2. '-शासनम्' इति ग्रन्थान्तरे पाठः। 3. '-स्थानानि तेषां' क-ख। 4. इदं ख-पुस्तके नास्ति। 5. '-नां मुनीनां च कति-' क*। 6. '-त्वं गुरुत्वं च स-' क। 7. अतः परं ख-पुस्तके 'स्वातन्त्र्यं नाम स्वतः प्रतिभयोपलब्धत्वम्' इत्यधिकम्। 8. 'सर्वशब्दा अव्युत्पन्ना' ख। 9. 'सूत्रेण' ख। 10. अतः परं ख-पुस्तके 'मितद्रुः शम्भुरित्यादिरूपसिद्ध्यर्थम्' इत्यधिकम्। 11. इदं ख-पुस्तके नास्ति। 12. समस्तानां' ख। 13. 'सर्वविद्यानां प्रभुत्वम्' ख। 14. '-प्रणेतृत्व-' ख। 15. '-वक्तृत्व-' ख।

ननु लक्षणं व्यावृत्तिं व्यवहारं वा जनयति न [1]तद् वस्तु साधयत्यतः परमेश्वर-साधनाय प्रमाणं वाच्यमत आह—हेतवे इति। (A)जङ्गम्यन्ते [2]विनाशमिति जगन्ति[3] उत्पत्ति-स्थिति-विनाशधर्मकाणि कार्याणि, तेषां हेतवे निमित्तकारणायेत्यर्थः। जायमानं कार्यं कर्त्तारं विना न सम्भवतीति तमाक्षिपति, स एव परमेश्वर इति प्रमाणं सूचितम्। प्रयोगस्तु—सर्वं कार्यं सहेतुकम्, कादाचित्कत्वात्, यत् सहेतुकं न भवति तत् कादाचित्कमपि न भवति यथा गगनम्, तथा चेदं कादाचित्कं न भवतीति न, तस्मात् सहेतुकं न भवतीति न (B) इति केवलव्यतिरेकी। हेतुशब्देनात्र कर्त्ता विवक्ष्यते, अतोऽदृष्टादिभिर्न सिद्धसाधनम्।

ननु केवलव्यतिरेकी न प्रमाणम्, व्याप्तिपक्षधर्मताविशिष्टलिङ्गाभावात्। तथा हि यो यो धूमवान्[4] सोऽग्निमान् इति महानसादौ व्याप्तस्य धूमस्य पक्षे वह्निव्याप्यधूमवानय-मिति [5]ज्ञानस्यानुमितिजनकत्वं[6]* दृष्टम्, केवलव्यतिरेकिणि तु सहेतुकत्वाभावकादाचित्-कत्वाभावयोर्व्याप्तिः, कादाचित्कत्वस्य [6]तु पक्षधर्मता। अतो व्याप्तिपक्षधर्मताविशिष्ट्यं लिङ्गस्य नास्तीति कथं तद् गमकम्? अथ व्यतिरेकव्याप्तिमत्तया अन्वयव्यतिरेकिवत्

---

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥

इति श्रुत्या यदा गुरौ देववद्भक्तिर्मुक्तिपर्यन्तसाधिकोक्ता तदा का कथा तयोरैक्येन चिन्तनस्य तदुपायभूतविद्यान्तरलाभे हेतुताया इति भावः।

(A) जङ्गम्यन्ते पुनः पुनः प्राप्नुवन्तीत्यर्थः, गत्यर्थधातूनां प्राप्त्यर्थेऽविवादात्। एतेन सृष्ट्यादिप्रवाहस्यानादित्वं लभ्यते। अत एव गत्यर्थेभ्यो वक्रार्थेऽनुशिष्टोऽपि यङ्प्रत्ययो न पौनःपुन्ये विरुध्यते। दुर्विज्ञेयत्वलक्षणस्य कौटिल्यस्य वा योगो वक्तव्यस्तेन नानुपपत्ति-गन्धोऽपि। विनाशपदमत्र अन्यथानुपपत्त्या उत्पत्तिस्थित्योरप्युपलक्षकम्। विनाशपदासत्त्वे तु यथाश्रुत एवार्थः। तेन भूमण्डलस्य वक्रा गतिर्ज्योतिःशास्त्रसिद्धा शिष्येभ्य उपदिष्टा। पृथिव्यादौ क्रिया सर्वसम्मता इति तत्र जगत्पदं यौगिकम्, आकाशादौ तु रूढिरिति ध्येयम्।

(B) एवञ्च 'द्वौ निषेधौ प्रकृतार्थं गमयतः' इति न्यायेन यतः इदं जगत् कादाचित्कम्, अतः सहेतुकमिति प्रकृतार्थे पर्यवसानमिति भावः। हेतौ साध्याभावसमानाधिकरणात्यन्ता-भावाप्रतियोग्यभावप्रतियोगित्वरूपाया व्यतिरेकव्याप्तेरभावचतुष्टयघटिततया अत्र नञ्चतुष्टयोपादान-मिति विभावनीयम्।

---

1. 'तु' ख। 2. ख-पुस्तके 'विनाशम्' इति नास्ति। 3. 'इति जगत्-' क। 4. 'स सोऽग्नि-' क। 5. 'ज्ञानस्य जनकत्वम्' ख। 6. इदं ख-पुस्तके नास्ति।

केवलव्यतिरेकिणोऽपि अन्वयव्याप्तिरनुमीयते [1]इति मन्यसे तर्हि तत्[2]प्रदर्शनेन[2]* विना व्यतिरेकप्रदर्शनादप्राप्तकालता, (A)अवयवविपर्यासवचनमप्राप्तकालमिति सूत्रे अवयव-[3]शब्दस्योपलक्षणतया तदन्यविपर्यासस्यापि तथात्वादिति। अतो न व्यतिरेकी प्रमाणमिति चेत्, मैवं मंस्थाः; केवलव्यतिरेकिण्यपि निरुपा[4]धिककेवलव्यतिरेक-सहचारेण अन्वयव्याप्तिमनुमाय तद्विशिष्टस्य हेतोर्गमकत्वाङ्गीकारात्। न च वाच्यं निरुपाधिककेवलव्यतिरेकसहचार-व्याप्त्योरैक्यत्वात् कथं तेन तदनुमानमुक्तम् आत्माश्रयदोषापत्तेरिति(B), तयोर्भेदात्। तथा हि उभयोः सामानाधिकरण्यं सहचारः[5]। साधनसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यवत्त्वं(C) हेतोर्व्याप्तिरित्यतो नाप्राप्त-कालता अन्वयव्याप्तेरेव प्रथमं प्रदर्शनात्, अतो न केवलव्यतिरेकी[6] अप्रमाणम्।

नन्वभावयोः सहचारेण अन्वयव्याप्त्यनुमाने अतिप्रसङ्गः धूमवह्निसहचारेण घटपटयोरपि व्याप्तिमत्त्वप्रसङ्गादिति चेत्, मैवम्; ययोरभावयोः सहचारः तत्प्रति-योगिनोरेव व्याप्तिरिति प्रतियोग्यनुयोगिभावस्य नियामकत्वात्[7]।

ननु [8]घटादौ हेतुसाध्ययोः सत्त्वादन्वयव्यतिरेक्येवायं न केवलव्यतिरेकी। अथ सर्वस्य पक्षी[9]कृतत्वेन पक्षाति[10]रिक्तस्य सपक्षस्याभावात्[10]* [11]नान्वयव्यतिरेकित्व-मिति मनुषे, तदपि न; निश्चितसाध्यवतो हि सपक्षत्वं न तु पक्षातिरिक्तत्वे सतीत्यपि, गौरवेण व्यर्थत्वात्। तथा च किरणावलीकारः पृथिवी[12]निरूपणे आह स्म—समस्तपृथिव्या इतरभेदे साध्ये घट एव दृष्टान्तोऽस्तु किं व्यतिरेकिणा इति। अतोऽन्वयव्यतिरेकित्वमेवास्येति चेत्, सत्यमाह भवान्, [13]तथापि(D) अन्वय-

(A) 'अवयवविपर्यासवचनमप्राप्तकालम्' इति न्यायसूत्रम्। (५अ० २आ० ११सू०)।

(B) इति न च वाच्यमित्यन्वयः।

(C) साध्यवत्त्वं साध्यसामानाधिकरण्यम्, तेन पूर्वं कृताया ऐक्यशङ्काया नानुपपत्तिः। सहचाराद् व्याप्तेर्भेदस्तु अप्रतियोगित्वान्तेनेति बोध्यम्।

(D) तथाऽपीति, अत्रत्यहेतोरन्वयव्यतिरेकित्वसम्भवेऽपीत्यर्थः। अत्र पञ्चम्यर्थद्वयस्य प्रथमान्तपदार्थसाकाङ्क्षतया हेतोः केवलव्यतिरेकित्वमपि न विरुध्यते इत्यध्याहारेणान्वयो द्रष्टव्यः। लिपिकृत्प्रमादेन त्रुटितोऽत्र कश्चिदंश इति प्रतिभाति।

1. 'इति चेत्' ख। 2. 'कथमनेन' ख। 3. '-शब्दोप-' क। 4. '-धिक व्यति-' ख। 5. अतः परं क-पुस्तके 'साध्यवत्त्वमित्युक्ते अयं प्रदेशो धूमवान् वह्निमत्त्वादित्यादावव्याप्तिः तदर्थम्' इत्यंशोऽसार्वत्रिकतयोक्तः। 6. अत परं क-पुस्तके 'प्रमाणं नापि' इत्यधिकं दृश्यते। 7. अतः परं क-पुस्तके 'व्यतिरेकिसंज्ञा तु अस्य निरुपाधिकव्यतिरेके सहचारादेव' इत्यधिकम्। 8. 'पटादौ' ख। 9. '-कृतत्वे' ख। 10. '-रिक्तसपक्षाभावात्' क। 11. 'अन्वय-' ख। 12. '-प्रकरणे' ख। 13. 'तथा हि' क।

व्याप्तिवद् व्यतिरेकव्याप्तेरपि गमकत्वावधारणात्, अन्वयव्याप्त्यप्रतिसन्धाने व्यतिरेक-[1]प्रयोगसम्भवात्[1]* । यद्वा, पक्षातिरिक्त एव सपक्ष इति मतमाश्रित्यायं प्रयोगो द्रष्टव्यः, बहुवादिसम्मतत्वात्, प्रमाणवतो गौरवस्यापि [2]न्याय्यत्वादिति । अत एवाह स्म आचार्यस्तत्रैव सिद्धान्ते—आस्तां तावत् सुहृदुपदेशो व्यतिरेक्यनुमानं [3]तु निर्व्यूढमिति ।

अथवा सहेतुकमिति साध्यस्थाने सर्वविद्धेतुकमिति कर्त्तव्यम्, तथा च [4]नान्वयित्वाशङ्का(A) । नन्वत्र सर्वविद्धेतुकस्याप्रसिद्ध्या (B)अप्रसिद्धविशे[5]षणः पक्षः । को दोष इति चेत्—अयं दोषः, व्यतिरेकिसाध्याप्रसिद्धौ तन्निरूपणाधीन (धीना ?)साध्याभावसाधनाभावयोर्व्याप्तिर्न(C)निरूप्येत (D)[6]सामान्यज्ञानाभावेन पक्षे[6]* साध्यसन्देहानुपपत्तौ सन्दिग्धसाध्याभाववतः पक्षस्याभावापत्तिः, [7]तथा साध्यलक्षणविशेषणज्ञानाभावात् साध्यविशेषणकपक्षविशेष्यकानुमित्यनु[8]पपत्तिः(E) । तथा च अप्रसिद्धविशेषणत्वे दोषत्रयम्,—व्याप्त्यनिरूपणाद् व्याप्यत्वासिद्धिः, पक्षानिरूपणात् (F)आश्रयासिद्धिः, अनुमित्यनुदयाद् बाधश्चेति । तस्मात् सर्वविद्धे[9]तुकत्वस्य प्रसिद्धिर्वाच्येति चेत् सत्यम्, अस्त्यत्रापि सामान्यतः प्रसिद्धिः । तथा हि [10]किञ्चिज्ज्ञ-

(A) नान्वयित्वाशङ्केति । कादाचित्कत्वहेतोः सर्वविद्धेतुकत्वेन साध्येन समं सामानाधिकरण्यस्य क्वापि अगृहीततया अन्वयव्याप्तिग्रहासम्भवादिति भावः ।

(B) अप्रसिद्धेति । पक्षविशेष्यकानुमाने विशेषणीभूतं साध्यम्, तत्र साध्यतावच्छेदकधर्माभावे पक्षविशेषणमेवाप्रसिद्धमित्यभिप्रायः । नवीनानान्तु साध्याप्रसिद्धिनाम्नैवात्र व्यवहारः ।

(C) तथा च व्याप्तिग्रहासम्भवः प्रथमो दोष इति भावः । परामर्शानुपपत्तिदर्शनमत्राभिप्रेतम् ।

(D) सामान्यज्ञानं साध्यतावच्छेदकविशिष्टसाध्यज्ञानम्, तदसम्भवेन पक्षतारूपस्य अनुमितेः कारणान्तरस्याप्यभाव इति द्वितीयदोष इति हृदयम् ।

(E) अतः परमादर्शपुस्तके दृश्यमानः 'विशेषणज्ञानकारणाभावात्' इत्यंशः 'विशेषणज्ञानाभावात्' इत्यस्यैव व्याख्यानरूपः लिपिकृत्प्रमादेन टीकायामन्तर्भूत इति बुद्ध्या परित्यक्तः । विशिष्टबुद्धिमात्रं प्रत्येव विशेषणज्ञानं कारणमिति स्थिते साध्यात्मकविशेषणज्ञानरूपं यत् कारणं तस्याभावादिति तदर्थः ।

(F) आश्रयासिद्धिरिति, साध्यसन्देहविशेष्यत्वं पक्षत्वमिति पक्षलक्षणे कृते—एतादृश-

1. '-प्रयोगासम्भवात्' क । 2. 'न्यायोपपन्नत्वादिति' क । 3. 'तु' नास्ति ख । 4. 'नान्वयित्वशङ्का' ख । 5. '-षणकः' ख । 6. 'साध्यसामान्यमानाभावेन पक्ष-' ख । 7. 'तथा च' ख । 8. '-नुत्पत्तिः' ख । 9. '-तुकस्य' क । 10. 'किञ्चिज्ज्ञानहेतुकत्वं' ख ।

हेतुकत्वम् अहेतुकव्यतिरिक्तनिष्ठात्यन्ताभावप्रतियोगि व्यतिरेकिधर्मत्वात् [1]घटादिवत् । प्रमेयत्वादौ व्यभिचारवारणाय व्यतिरेकीत्युक्तम् । आकाशादिनिष्ठात्यन्ताभावप्रतियोगितया सिद्धसाधनतावारणाय अहेतुकव्यतिरिक्त[2]निष्ठेत्यत्यन्ताभावविशेषणम् । तथा च किञ्चिज्ज्ञहेतुकत्वं यतो व्यावर्त्तते तदेव सर्वविद्धेतुकं प्रसिद्धम् । [3]तत्तु वस्तुगत्या पक्ष एव । तत्र केवलव्यतिरेकिणा तद् विशेषतः साध्यत इति नाऽप्रसिद्धविशेषणः पक्षः । तस्माज् जगतां हेतवे इत्यनेन ईश्वर[4]साधकं व्यतिरेक्यनुमान[5]मसूचयत् ।

[6]यद्वा अन्वयव्यतिरेक्यनुमानमेव असूचयत् । तथा हि—गिरिदरीविवरवर्त्तिनोऽङ्कुराः सकर्त्तृकाः कार्यत्वाद् घटवदिति । नन्वयं सन्दिग्धानैकान्तिकः, क्षित्यादौ सन्दिग्धसाध्यवति हेतोः सत्त्वात् । न च निश्चितसाध्याभाववति (A)हेतुसन्देहे सन्दिग्धानैकान्तिकता, (B)अत्र साध्यस्यैव सन्देहो न हेतोरिति वाच्यम्, हेतुः साध्याभाववद्गामी न वेति(C) सन्देहे सन्दिग्धानैकान्तिकता, स च सन्देहः साध्याभाववति हेतुसन्देहात्, हेतुमति वा साध्यसन्देहात् । तदत्र क्षित्यादौ कार्यत्वहेतो[7]र्निश्चयेऽपि साध्यसन्देहात् हेतोः साध्याभाववद्गामित्वे सन्देहोऽस्त्येव । किं चेदं सकर्त्तृकत्वम् ? कर्त्रा सह वर्त्तमानत्वं कर्त्तृजन्यत्वं वा ? नोभयथाऽपि, सिद्ध-

---

साध्यसन्देहस्य उक्तरीत्याऽसम्भवात् पक्षत्वाभिमते पक्षतावच्छेदकरूपाभावरूपा आश्रयासिद्धिरित्यर्थः । अनुमित्युद्देश्यत्वमिति पक्षलक्षणाभिप्राये तु पक्षतारूपकारणविरह एव दोषः पूर्वोक्तो बोध्यः ।

(A) हेत्विति । हेतुसन्देह एवेत्यवधारणाभिप्रायेणेदम्, अन्यथा प्रकृतदूषणासङ्गतिरिति बोध्यम् ।

(B) अत्रेति, इतः पूर्वं पूर्वग्रन्थस्य नियमपरत्वसूचकं 'एवं चे'त्यादिकमर्थतो बोध्यम् । एवं 'न हेतोः' इत्यतः परं 'तथा च नायं सन्दिग्धानैकान्तिकः' इत्यपि, अन्यथा विधेयानिर्देशात् न्यूनता स्यात् इति ।

(C) 'न वा' इत्यन्तो ग्रन्थः कार्यभूतं विलक्षणमेव सन्देहं प्रकाशयति तेन तत्कारणतया उत्तरत्र द्विविधसंशयप्रदर्शनं न विरुद्धम् । एवं 'सन्देहे' इत्यतः परं ज्ञापकत्वबोधको हि-कारोऽपि द्रष्टव्यः ।

---

1. 'घटत्वादिवत्' ख । 2. '-निष्ठात्यन्ता-' क । 3. 'तद् वस्तु-' ख । 4. '-बोधकं' ख । 5. '-मसूचि' ख । 6. 'यद्वानेन' ख । 7. '-र्निश्चित्वेऽपि' ख ।

साधनात्। तथा हि (A)जीवानां विभुत्वेनाङ्कुराणां तैः सह वर्त्तमानत्वात्, (B)भोजकादृष्टजन्यत्वेन जीवजन्यत्वाच्च सिद्धसाधनम्। अथोपादानगोचरापरोक्षज्ञान-चिकीर्षा-कृतिमज्जन्यत्वं सकर्त्तृकत्वम्। उपादानं[1] समवायिकारणम्, तद् गोचरो विषयो यासामपरोक्षज्ञान-चिकीर्षा-कृतीनां(C) तास्तथा। इदमस्य उपादानमिति लिङ्गाद्यजन्यं ज्ञानम् अपरोक्षम्, इदं करिष्यामीति कर्त्तुमिच्छा चिकीर्षा, कृतिः प्रयत्नः, एता यस्यासौ तद्वान्, तेन जन्यत्वमिति विवक्षितम्। एतच्च नास्मदादीनामिति न सिद्धसाधनमिति चेत्—मैवम्, सिद्धसाधनत्वादेव, अस्मदाद्यपरोक्षज्ञानादेरप्यदृष्टद्वारा अङ्कुराद्युपादानगोचरत्वात्। तथा हि इष्टसाधनताज्ञानस्य परोक्षत्वेऽपि यागादिसाधनद्रव्यादौ [2]प्रवृत्तिविषयेऽपरोक्षज्ञानमस्त्येव, [3]ततस्तत्र चिकीर्षाप्रयत्नौ ; ततो यागादिना अदृष्टं जायते, तेन च भोजकादृष्टेन तत्तदुपादानसहितेनाङ्कुरादि जन्यते ; अतोऽस्मदादिनैव सिद्धसाधनमिति दुष्टमिदमनुमानमिति चेत्—मैवं वादीः ; न तावत् सन्दिग्धानैकान्तिकः, साध्यसन्देहवति निश्चितस्य हेतो[4]स्तथात्वाभावात्, अन्यथा सर्वेषां हेतूनां पक्षे सन्दिग्धसाध्यवति वृत्तेर्दुष्टत्वप्रसङ्गात्। तथा च सकलानुमानो[5]च्छेदप्रसङ्गः*। अत एव सिद्धान्तप्रवादोऽपि—न हि पक्षे पक्षतुल्ये [6]वा व्यभिचार इति। अपि च [7]पक्ष-पक्षसमव्यतिरिक्तघटादौ कार्यत्वहेतोः सकर्त्तृकत्वेन [8]सह व्याप्त्यवधारणात्, [9]स हेतुः क्षित्यादौ [10]पक्षसमेऽङ्कुरे (D)पक्षे वर्त्तमानः सममेवोभयत्र साध्यं साधयेदिति निश्चितव्याप्तेर्हेतोः सन्दिग्धसाध्यवति वर्त्तमानस्य साध्यसाधकत्व[11]नियमात्(E)। सकर्त्तृकं(F) चेदं विवक्षितम्—अदृष्टाद्वारकोपादानगोचरापरोक्षज्ञान-

(A) कर्त्रा सह वर्त्तमानत्वमिति प्रथमकल्पे दूषणमाह—जीवानामिति।

(B) कर्त्तृजन्यत्वमिति चरमकल्पे दूषणमाह—भोजकेति।

(C) अत्र उपादानेऽपरोक्षज्ञानविषयत्वं साक्षात्, चिकीर्षाकृतिविषयत्वं तु परम्परया इति बोध्यम्।

(D) पक्ष इति। अतः परं समुच्चयार्थ'श्च'कारो बोध्यः।

(E) अत्र 'नियमादि'त्यस्य साधयेदित्यत्र तथा 'अवधारणादि'त्यस्य निश्चितव्याप्तेरित्यत्र योजना कर्त्तव्या। इति-शब्दश्च वाक्यसमाप्ताविति द्रष्टव्यम्।

(F) 'सकर्त्तृकत्वञ्च इत्थम्' इति पाठाश्रयणे अर्थः स्फुटो भवति।

1. '-दानं नाम' ख। 2. 'प्रकृति-' ख। 3. 'न सतत' क। 4. '-ताद्धेतो-' ख। 5. '-च्छेदः स्यात्' ख। 6. 'वा' नास्ति ख। 7. 'पक्षव्यतिरिक्त- ख। 8. 'सह' नास्ति ख। 9. 'स च' क। 10. 'पक्ष' नास्ति क। 11. '-नियामकत्वात्' क।

चिकीर्षा-कृतिमज्जन्य[1]त्वम्। अदृष्टं धर्माधर्मौ द्वारं व्यापारो न विद्यते यासां ता अदृष्टा-[2]द्वारिकाः, अदृष्टा[3]द्वारिकाश्च ता उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतयश्च तद्वता जन्यत्वं सकर्त्तृकत्वमित्यर्थः। तथा च नास्मदादिना सिद्धसाधनम्, अस्मज्ज्ञान-चिकीर्षा-कृतीनामदृष्टद्वारं विना उपादानगोचरत्वाभावेन अदृष्टाद्वारकत्वाभावात्। भोक्तृज्ञान-मदृष्टद्वारा हेतुः कर्त्तृ[4]ज्ञानं चिकीर्षाद्वारा, कृतिः शरीरादिचेष्टाद्वारा[4]*। तथा च अत्र (A) अदृष्टाद्वारकविशेषणेन भोक्तृजन्यत्वे निवारिते कर्त्तृजन्यत्वेन पर्यवस्यदीश्वर-जन्यत्वमेव सिध्यति। अतो न कश्चिद्दोष इति सिद्धम्।

ननु तथाऽपि [5]प्रध्वंसस्य कार्यत्वेऽपि[5]* उपादानकारणाभावेन तद्गोचर-ज्ञानादिमतोऽभावात् तज्जन्यत्वं नास्तीति हेतुरनैकान्तिक इति चेत्—मैवम् प्रागभावप्रतियोगित्वे सति [6]समवेतत्वादिति हेत्वर्थस्य विवक्षितत्वात्[6]*। तदयं संक्षेपः—[7]अङ्कुरा अदृष्टाद्वारकोपादानगोचरापरोक्षज्ञान-चिकीर्षा-कृतिमज्जन्याः प्रागभाव-प्रतियोगित्वे सति समवेतत्वात्, यद् उक्तसाधनं तद् उक्तसाध्यं यथा [8]पट इत्युपरम्यते विस्तरात्।

'जगतामेव' इत्येवकारः कात्स्नर्यवाची अव्ययानामनेकार्थत्वात्। तथा चायमर्थः—समस्तस्य कार्यस्य हेतुः परमेश्वरो न तु कुलालादिवत् कतिपयकार्यस्येति, बहुवचनस्य (B)कपिञ्जलाधिकरणन्यायेन त्रित्वेनापि सम्भवात्। अथवा एवकारो भिन्नक्रमः (क्रमे ?) हेतव एवेति। [9]तत्र च अयोगव्यवच्छेदार्थः, जगतां हेतुत्व-मीश्वरस्य [10]सदा वर्त्तते [11]न तु कदाचिन्नास्तीति[11]*। एवं च क्षणिकः सर्वज्ञो

(A) भावार्थे तात्पर्यात् अदृष्टाद्वारकत्वरूपेण विशेषणेनेत्यर्थः।

(B) कपिञ्जलाधिकरणं मीमांसादर्शने एकादशेऽध्याये प्रथमपादे अष्टात्रिंशत्तमसूत्रतः पञ्चचत्वारिंशत्तमसूत्रपर्यन्तं निरूपितम्। पादानुक्रमणेन सप्तममिदमधिकरणम्। माधवाचार्य-कृतं तदधिकरणं तु—

कपिञ्जलेषु त्रित्वाद्या ऐच्छिकाखिलत्वमेव वा।
आद्यो बहुत्वसाम्येन त्रित्वेनैव कृतत्वतः॥ इति।

1. '-त्वमिति' ख। 2. '-द्वारका:' ख। 3. '-द्वारका-'। 4. '-ज्ञानं च चिकीर्षाकृतिशरीरचेष्टा-द्वारा' ख। 5. 'उत्पद्यमानकार्यत्वेऽपि' क। 6. 'समवेतत्वस्य हेत्वर्थत्वात्' ख। 7. 'गिरिदरीविवरा-वर्त्तिनोऽङ्कुराः' ख। 8. 'घट' ख। 9. 'स च अयोगान्ययोग-' क। 10. 'सर्वदा' ख। 11. 'एव न तु कदाचित्नाऽस्तीति' ख।

जगद्धेतुः, कपिलादिर्वेदादिहेतुः, हिरण्यगर्भ एव स्वतन्त्रो जगद्धेतुः, प्रधानं जगद्धेतुरित्यादिमतानि निराकरिष्यन्ते ।

यद्वा हेतवे निमित्तकारणायैव, न तु (A)वेदान्तिवदुपादानकारणायाऽपीति सूचितम्, उपादानत्वे कार्यस्यापि (B)सचेतनत्वप्रसङ्गादिति । संसारस्थितिहेतुत्वेनापि परमेश्वरः सिध्यतीति प्रमाणान्तरं [1]बाहुल्यसूचनायाऽऽह—संसारार्णवसेतवे इति । संसार एकविंशतिप्रकारदुःखसम्बन्धः, स एवार्णवो [2]दुस्तरत्वात्, अनादित्वेनागाधत्वाच्च[*], तस्य सेतवे विधारकाय । यथा सेतुर्जलादेराधारस्तथा संसारिणां जगतामाधारः स्थितिहेतुरित्यर्थः, 'स एष सेतु[3]र्विधरणम् एषां लोकानामसम्भेदाये'ति श्रुतेः(C) । सेतुशब्देन सेतु[4]गतं विधरणत्वं लक्ष्यते । प्रयोगस्तु—जगतां धृतिः साक्षात् परम्परया वा प्रयत्नसाध्या धृतित्वात् गगनतलवर्त्तिखग[5]शरीरधृतिवत् तद्वद्नगतमांसधृतिवत्[*] ।

यद्वा, एतच्छास्त्रप्रतिपाद्यमोक्षकारणत्वेन [6]ईश्वरं दर्शयन् मोक्षप्रयोजनत्वं[*] शास्त्रस्य दर्शयति—संसारेति । संसारार्णवस्य दुःखसमुद्रस्य पारप्रापकः यथा सेतुः पारा[7]वारवर्त्ती पारं प्रापयति तथा अयमीश्वरोऽपि संसारपारस्य मोक्षस्य प्रापक इत्यर्थः ।

एवं मनोवाक्कायकर्मभिः क्रियमाणं त्रिविधं प्रह्वीभावलक्षणं मङ्गलाचरणं शिष्य[8]शिक्षायै निबबन्ध ग्रन्थे[*] । मङ्गलाचरणव्याजेन च अर्थाद् विषय-प्रयोजन-सम्बन्धाधिकारिणः समसूचिषत ।

---

(A) विवर्त्तवादिभिरीश्वरस्य उपादानत्वं निमित्तत्वञ्च 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्', ( ब्रह्मसूत्रं—१अ० ४ पा० २३ सू० ) 'तदनन्यत्वमारम्भणशब्दादिभ्यः' ( ब्रह्मसूत्रं २अ० १पा० १४ सू० ) इत्युभयत्र भाष्ये प्रतिपादिते ।

(B) दोषोऽयं 'महद्दीर्घवद् वा ह्रस्वपरिमण्डलाभ्याम्' ( ब्रह्मसूत्रं, २अ० २पा० ११ सू० ) इत्यनेन परिहृतः ।

(C) बृहदारण्यकोपनिषदि चतुर्थेऽध्याये चतुर्थब्राह्मणे द्वाविंशकण्डिकायां 'स वा एष महानज आत्मा योऽयं विज्ञानमय' इति प्रकृत्य पठ्यते—'एष सेतुर्विधरण एषां लोकानामसम्भेदाय तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादि ।

---

1. 'तद्बाहुल्य-' ख । 2. 'दुस्तरत्वादनादित्वेनागाधत्वाद्वा' ख । 3. '-र्विधारणम्' ख । 4. '-गतविधारकत्वं' ख । 5. '-शरीरतद्वदनगतमांसधृतिवदिति' ख । 6. 'ईश्वरदर्शनान्मोक्षप्रयोजनत्वं' क । 7. '-वारवती' ख । 8. '-शिक्षार्थं ग्रन्थे निबद्धम्' ख ।

# प्रमितिविषयाः पदार्थाः ॥ १ ॥

ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥(A)

इति न्यायेन श्रोतॄणां सुखप्रवृत्तये ग्रन्थादावनुबन्धचतुष्टयस्य अवश्यं वक्तव्यत्वात् तदुच्यते । [1]काणादशास्त्रस्येदं प्रकरणम्, अतस्तदीयानुबन्धचतु[2]ष्टयेनैवास्यापि तद्वत्त्वम् । [3]तत्र परमेश्वरो महान् विषयः, [4]मोक्षश्च महत् प्रयोजनम्[4]*, पदार्था अवान्तर[5]विषयः, [6]तत्त्वज्ञानमवान्तरप्रयोजनम्, विषयशास्त्रयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः, विषय-प्रयोजनयोर्विषयविषयिभावः सम्बन्धः, शास्त्रप्रयोजनयोः साध्यसाधनभावः [7]सम्बन्धः, प्रयोजनकामोऽधि[8]कारी । नन्वेवं शास्त्रप्रकरणयोः को भेद इति चेत्—

शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम् ।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ॥

इति लक्षणकृतो भेदो[9]ऽस्ति । अतो[9]* बाल[10]बोधनमवान्तरप्रयोजनम् ।

अथेदानीं चिकीर्षितं ग्रन्थमारभमाणः पदार्थसामान्यं स्वरूपतो निर्दिशति—प्रमितिविषयाः पदार्था इति । पदार्था इति सामान्येनोद्देशः, तेषां स्वरूपम्—प्रमिति-विषया इति । प्रमितिर्यथार्थज्ञानम्, तस्य विषयाः प्रमेया इत्यर्थः । प्रमेयत्वमेव पदार्थ-[11]शब्दस्य प्रवृत्तिनिमित्त[12]मित्यनेन दर्शितम्, न तु प्रमितिविषयत्वं पदार्थसामान्यलक्षणम्, केवलान्वयित्वेन प्रमेयत्वस्य लक्षणत्वायोगात्, केवलव्यतिरेकी हेतुविशेषो लक्षण-मिति [13]तल्लक्षणस्याभिधास्यमानत्वात् । नन्वत्रापि भ्रमविषयो [14]व्यावर्त्योऽस्तीति चेत्—न, तस्यापि कदाचित् प्रमेयत्वात्, शुक्तिर्वा रजतं वा तादात्म्यं वा भ्रमविषयो रजतत्व-संसर्गो वा[15] एते सर्वे प्रमेया एव । (B)[16]इदानीं प्रमाविषयो न भवतीति चेत्, तर्हि पदार्थाना-मपि स्मृतिविषयतासमये अपदार्थत्वापत्तिः, कदाचित् ते प्रमेया एवेति यदि, भ्रमविषयोऽपि

(A) श्लोकवार्त्तिके प्रथमसूत्रस्य सप्तदशोऽयं श्लोकः । तत्र 'सिद्धार्थमि'ति श्लोकादौ विशेषः ।

(B) इदानीमिति भ्रमदशायामित्यर्थः ।

1. 'कणाद-' ख । 2. '-ष्टयादेवा-' क । 3. 'तत्र च' ख । 4. अयमंशः ख-पुस्तके नास्ति । 5. '-विषयाः' ख । 6. 'तत्त्व-' ख । 7. 'सम्बन्धः' नास्ति ख । 8. '-कारीति' ख । 9. अयमंशः ख-पुस्तके नास्ति । 10. '-लावबोधनं वा' ख । 11 '-शब्दप्र-' ख । 12. '-मित्यप्यनेन' ख । 13. 'तत्'-पदं नास्ति क । 14. 'व्यावर्त्तो-' क । 15. 'ते' क । 16. 'तदानीं' ख ।

ते च द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाभावाख्याः सप्तैव ॥ २ ॥

तर्हि तथेति तुल्यम्। किं च पदार्थशब्दो यौगिको रूढो वा? आद्ये भ्रमविषयस्यापि पदार्थत्वात् 'तद्व्यावर्त्तनमयुक्तं स्यात्; लक्षणेन हि लक्ष्यादन्यद् व्यावर्त्तते, न तु लक्ष्यमेव, भ्रमविषयश्च पदार्थशब्दवाच्यत्वात् लक्ष्यादनन्य एव। न द्वितीयः, रूढिर्हि सप्तपदार्थ्यामेव, सैव च² भ्रमस्यापि विषयः, अन्यथा अन्यथाख्यात्यनुपपत्तेः; ³अन्यत्र सदेव अन्यत्र⁴* भातीत्यन्यथाख्यातिः। तथा च द्वितीये पक्षेऽपि सप्तपदार्थ्येव भ्रमविषय इति तस्यापि लक्ष्यत्वात् तद्व्या'वर्त्तनं पुन'*र्व्यर्थमेव; प्रमेयत्वं व्यतिरेकिधर्म इति च⁵ वदतो वैशेषिकस्यापसिद्धान्तश्च, आ ⁶कणादात् मुनेरा यावत् प्रमेयत्वाभिधेयत्वादि-धर्मः केवलान्वयीति सिद्धान्तप्रवादस्य ⁷प्रवहमाणत्वात्। अथ ग्रन्थकार एव 'पदार्थसामान्यलक्षणं तूक्तमेवे'ति वक्ष्यति, अतस्तद्विरोध इति चेत्—न, तत्र हि तस्य गतिं वक्ष्यामः। ननु भ्रमस्यापि प्रमितिविषयत्वे कथं तस्य भ्रमत्व⁸सिद्धिरिति चेत्—शृणु—इदन्त्व-रजतत्वयोर्व्यधिकरणयोरिदं रजतमिति सामानाधिकरण्येन विषयी-करणाद् व्यधिकरणप्रकारत्वेन भ्रमत्वमिति। ⁹तत् स्वरूपकथनं ¹⁰प्रवृत्तिनिमित्तकथनं चातिसूक्ष्ममिति ॥ १ ॥

(A)के पदार्थाः कियन्त इति जिज्ञासायामाह—ते चेति। ते पदार्थाः सप्तैवेति सम्बन्धः। द्रव्यस्य (B)सर्वपदार्थाधारत्वेन समवायिकारणत्वेन च प्राधान्यात्

(A) अत्र 'के ते पदार्थाः कियन्त एव' इति क-पुस्तकधृतपाठान्तरस्य लिपिकृत्प्रमाद-कृतत्वमङ्गीकृत्य 'के त पदार्थाः कियन्तो वा' इति पाठग्रहणे अर्थस्य स्फुटता पदन्यूनतापरि-हारश्च भवत इति विभावनीयम्।

(B) सर्वपदार्थेति, पदार्थविभाजकतावच्छेदकीभूता ये ये धर्माः प्रत्येकं तत्तद्धर्मवदाश्रय-त्वेनेत्यर्थः। तेन गुणत्वादिजातेः द्रव्यत्वसत्ताद्यभावस्य च तत्रासत्त्वेऽपि न क्षतिः, सामान्यत्वा-वच्छिन्नस्य द्रव्यत्वादेः अभावत्वावच्छिन्नस्य कर्मत्वाभावादेश्च तादृशस्य तत्र सत्त्वादिति ध्येयम्।

1. ख-पुस्तके 'तद्' इति नास्ति। 2. 'च' नास्ति ख। 3. 'अन्यत्र दोषाद्' ख। 4. '-र्त्तने पूर्ववद्' ख। 5. 'च' नास्ति ख। 6. 'कणादमुने-' ख। 7. 'प्रतीय-' क। 8. '-प्रसिद्धि-' ख। 9. 'ततश्च' ख। 10. 'शब्दप्रवृत्ति-' ख।

तत्र द्रव्याणि पृथिव्यप्-तेजो-वाय्वाकाश-काल-दिगात्म-मनांसि नवैव ॥३॥

प्रथममुद्देशः। गुणजातीयस्य 'सर्वद्रव्यवृत्तित्वात् उत्पत्त्युत्तरक्षणमेवोत्पन्नत्वेनातिसान्निध्याच्च गुणस्य तदानन्तर्यम्। कर्मजातीयस्य तद्वैपरीत्यात् जात्याधारत्वाच्च तदानन्तर्यम्। सामान्यस्यानु²वृत्तत्वेन त्रितयगतत्वेन च³ बहुविषयत्वात् तदानन्तर्यम्। विशेषस्य समवेतत्वात् (A)सामान्यप्रतियोगिकत्वाच्च तदानन्तर्यम्। एतेषां पञ्चानां सम्बन्धत्वेन समवायस्य तदानन्तर्यम्। षण्णां निषेधरूपत्वेनाभावस्य तदानन्तर्यम्। इत्युद्देशक्रमः(B)। एवमुत्तरत्राप्यूहनीयम्, विस्तरभयात् (C) नातिप्रयोजनाच्च नोच्यते। एवकारोऽयोगान्ययोग⁴व्यवच्छेदार्थः। अत्र एतावदस्त्येव न न्यूनमिति तावदयोगव्यवच्छेदः, अन्यस्यात्र सम्बन्धो नास्तीत्यन्ययोगव्यवच्छेदः। तथा च शङ्खः पाण्डुर एवेतिवत् पदार्थाः सप्तैवेति वचनव्यक्त्या संख्याया विशेषणसङ्गत एवकारोऽयोगं व्यवच्छिनत्ति। यदा तु पार्थ एव धनुर्धर इतिवत् सप्तैव पदार्था इति विशेष्यसङ्गत एवकारस्तदा अन्ययोगं व्यवच्छिनत्ति इत्युभययोगव्यवच्छेदसिद्धिर्यथावस्थितेन एवकारेण भवति। एवमग्रेऽप्येवकारो ⁶बोद्धव्यः। चकारो जिज्ञासानिवृत्त्यर्थः। (D)संख्याशब्दो विभागसिद्धामेव संख्यां स्फुटयति ॥२॥।

द्रव्याणि संचष्टे—तत्रेति, तत्र सप्तसु मध्ये इत्यर्थः ॥३॥

(A) अत्रेदं चिन्तनीयम् विशेषस्य सामान्यप्रतियोगिकत्वं कीदृशमिति। क्षित्यादयो द्रव्यविशेषा इत्यादौ हि द्रव्यत्वरूपसामान्यसहितं यद् द्रव्यवृत्तिभेदप्रतियोगितावच्छेदकत्वं तदात्मको विशेषः क्षित्यादावक्गाहते, एवमेव सामान्यप्रतियोगिकत्वं विशेषस्यान्यत्रापि। प्रकृते तु नित्यद्रव्यमात्रवृत्तीनां विशेषाणां नास्ति जात्यादिसामान्यधर्मयोगः नापि ते नियतसम्बन्धिपदार्थनिरूपणाधीननिरूपणका इति।

(B) अत्र उक्तानां हेतूनामेव अन्यत्रापि उद्देशक्रमनियामकत्वमिति भ्रमो न कार्यः, किन्तु तत्र तत्र तत्तद्विशेषं मनसिकृत्यैव ग्रन्थकृताऽनेन क्रमेणोद्देशः कृत इति बोध्यम्।

(C) नातिप्रयोजनादिति, अतिप्रयोजनाभावादित्यर्थः। अभावार्थे अव्ययीभावः, विभक्तेर्मकारविधायकसूत्रे पञ्चमीवर्जनात् न ङसेर्मः।

(D) संख्याशब्दः संख्याविशेषवाचक'सप्त'पदमित्यर्थः। तथा च गणनयैव सप्तत्वलाभे सप्तपदं 'कर्मसामान्य' विशेषसमवायः' इत्याद्याकारेण गणनीयविषयभ्रमनिरासार्थमिति भावः।

1. ख-पुस्तके 'सर्व' इति नास्ति। 2. '-वृत्तित्वेन' क। 3. 'च' नास्ति ख। 4. '-व्यावृत्यर्थः' ख। 5. 'विशेषणसङ्गत' ख। 6. 'द्रष्टव्यः' ख।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१ २२ २३ २४

गुणास्तु रूप-रस-गन्ध-स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग--विभाग--परत्वापरत्व-बुद्धि--सुख--दुःखेच्छा-द्वेष-प्रयत्न-[1]गुरुत्व-द्रवत्व-स्नेह-संस्कार-धर्माधर्म-शब्दाश्चतुर्विंशतिरेव ॥४॥

कर्माणि उत्क्षेपणा(A)पक्षेपणाऽऽकुञ्चन[2]प्रसारण-गमनानि पञ्चैव ॥५॥

सामान्यं परम् अपरं परापरं चेति [3]त्रिविधम् ॥६॥

---

'[4]गुणान् विभजते—गुणास्त्विति[4]'* । तु-शब्दः पूर्वापेक्षया वैलक्षण्यद्योतनार्थः । गुणेषु यद्यपि गुणानङ्गीकारात् चतुर्विंशतिरित्ययुक्तं तथाऽपि संख्यागुणयोरेकार्थसमवायसम्बन्धादुपचारेण तत्र संख्याव्यवहार इति न दोषः ॥४॥

कर्माणि विशेषत उद्दिशति—"[5]कर्माणीति[5]"* । ननु संयोग-[6]विभाग-परापर-[6]* व्यतिरेकेण कर्मैव न पश्याम इति चेत्—न, न ह्ययं स्थाणोरपराधो [7]यदेनमन्धो न पश्यति, चलतीत्येवमाकारेण (B)[8]संयोगादिविलक्षणस्य प्रत्ययस्य[8]* सर्वजनीनत्वात् । न चेदं प्रत्यक्षमिति चेत्—न, तत्राप्यनुभव एवोत्तरम्, चलनं साक्षात्करोमीत्यनुभवात् । भ्रमण-रेचन-स्यन्दन-नमनोन्नमनानां गमनेऽन्तर्भावात् नावधारणानुपपत्तिः । संख्या [9]चौपचारिकी, उपचारस्तु संख्याकर्मणोरेकद्रव्याश्रितत्वम् ॥५॥

सामान्यं त्रेधा विविनक्ति—"[10]सामान्यम् इति[10]"* ॥६॥

---

(A) कारिकावल्यादौ तु 'अपक्षेपण'स्थाने 'अवक्षेपणमि'ति पठ्यते ।

(B) संयोगादिविलक्षणस्येति संयोगादिप्रत्ययविलक्षणस्येत्यर्थः, प्रत्यये संयोगादिभेदस्य सिद्धतया तदुक्तेरकिञ्चित्करत्वात् । चलतीत्यादिप्रत्यये संयोगादिप्रत्ययवैलक्षण्योक्तौ च ज्ञानानां वैलक्षण्यं विषयवैलक्षण्यमन्तरेण अनुपपन्नमिति कर्मसु संयोगादिभिन्नत्वं सिध्यतीति बोध्यम् ।

---

1. 'गुरुत्व-लघुत्व-द्रवत्व-' ख । 2. 'प्रसरण-' ख । 3. इदं नास्ति ख । 4. इदं नास्ति ख । 5. इदं नास्ति ख । 6. '-विभागादेव परम्परा-' ख । 7. 'यदेन-' क । 8. 'संयोगादिविलक्षण-प्रतायस्य' ख । 9. 'त्वौप-' ख । 10. इदं ख-पुस्तके नास्ति ।

## विशेषास्तु यावन्नित्यद्रव्यवृत्तित्वादनन्ता एव ॥ ७ ॥

विशेषाणां विभागाभावे हेतुमाह—[1]'विशेषास्त्विति'[1]* । अनन्ता असंख्याताः । तत्र हेतुः—यावन्नित्यद्रव्यवृत्तित्वादिति, यावन्ति नित्यद्रव्याणि—गगनादिपञ्चकम्, चतुर्विधाः परमाणवः ( च ) तत्र वृत्तिर्येषां तेषां भावस्तत्त्वं तस्मात् । नित्यद्रव्याणामसंख्यातत्वात् तदाश्रिता विशेषा अप्यनन्ता इत्यर्थः ।

ननु [2]'नित्यगुणेषु किमिति विशेषा नाभ्युपेयन्ते ? जात्या तद्व्यावृत्तिसम्भवान्नाभ्युपगम इति चेत्—हन्त, तर्हि जातिगुणक्रियाभिर्नित्यद्रव्याणामपि व्यावृत्तिसम्भवात् तत्रापि [3]'तदभ्युपगमो न'[3]* युक्तः । अथ ते द्रव्येऽभ्युपेयन्ते ? तर्हि गुणेष्वप्यभ्युपेयन्तामिति चेत्—मैवम्, नित्यगुणा हि जलपरमाण्वादिगता रूपादयस्तेषां व्यावर्त्तका रूपत्वावान्तरशुक्लतमत्वादयः सम्भवन्ति । (A)अवान्तरजातीयव्यक्तिष्वपि विशेषाश्रिताश्रयविशेषेण तद्व्यावृत्तिः सम्भवति । गगनात् कालदिशोः, तयोश्च परस्पर( रं ? ) मुक्तात्मनां च मिथः, मनसां चेतरे[4]'तरं व्यावृत्तिर्विशेषपदार्थान्तरं विना (B)अयोगिनां न सम्भवति, परमाणुष्वपि सत्ता-द्रव्यत्व-पृथिवीत्वादिव्यतिरिक्तावान्तरजातेरभावात्, तेष्वपि समानजातिगुणकर्मसु मिथो व्यावृत्तबुद्धेर्विशेषपदार्थं विनाऽसम्भवात् तत्रापि तत्सिद्धिः । कुतः परमाणुषु नावान्तरजातिरिति चेत्—शृणु ; [5]'परमाणुवृत्तिजाते'[5]*रन्त्यकार्यवृत्तित्वदर्शनात् पृथ्वीत्वादिवत्, साऽपि जातिर्घटादावपि वर्त्तेत, तथा च नावान्तर[6]'जातिमत्त्वमिति । तस्मान्नित्यद्रव्येष्वेव विशेषपदार्थाङ्गीकारो [7]'नान्यत्र नित्येष्विति साधूक्तम्—यावन्नित्यद्रव्यवृत्तित्वादनन्ता एवेति ॥ ७ ॥

---

(A) अवान्तरेति, तत्तच्छुक्लादिरूपव्यक्तिष्वित्यर्थः । विशेषेति, विशेषेण उद्देशक्रमप्राप्तपञ्चमपदार्थेन विशेषनाम्ना आश्रितो य आश्रयविशेषस्तेन, तत्तत्परमाण्वादिनेत्यर्थः । तथा च तत्तद्रूपाणां व्यावृत्तिस्तेषामाश्रयद्वारैव सिध्यति, तदाश्रयाणां व्यावृत्त्यर्थं तु विशेषनाम्ना पदार्थान्तरमवश्यमभ्युपेयमिति हृदयम् ।

(B) योगिनो हि योगमहिम्नैव करामलकवत् सकलं पदार्थजातं तद्गतधर्मांश्च प्रत्यक्षीकर्त्तुमर्हन्तीति तदर्थं विशेषस्वीकारो नातिप्रयोजनक इति, अत उक्तम् अयोगिनामिति ।

---

1. 'किं च' ख । 2. 'निते।'ति नास्ति क । 3. 'तदनभ्युपगमो' ख । 4. '-तरव्या-' ख । 5. 'परमाणुषु जाते-' क । 6. '-जातित्वमिति' ख । 7. 'नान्यत्रानित्येष्विति' क ।

समवायस्त्वेक एव ॥ ८ ॥

अभावस्तु प्रागभावप्रध्वंसा[1]भावान्योन्याभावात्यन्ताभावलक्षण[1]*श्चतुर्विधः ॥ ९ ॥

पृथिवी नित्या अनित्या च । परमाणुलक्षणा नित्या, कार्यलक्षणा त्वनित्या । साऽपि शरीरेन्द्रियविषयरूपा । शरीरमस्मदादीनां प्रत्यक्षसिद्धम्, इन्द्रियं गन्धव्यञ्जकम् [2]घ्राणम् ; विषयो घटादिः ॥ १० ॥

---

समवायविभागाभावे हेतुमाह—[3]"समवायस्त्वेक एवेति"[3]* । इह तन्तुषु पटः, [4]इह शौक्ल्यम्, इह चलनम्, [5]इह [6]पटत्वमित्यादिषु द्रव्य-गुण-कर्म-सामान्यप्रत्यया विशेषणविशेष्यसम्बन्धनिमित्ताः अबाधितेहप्रत्ययत्वात् इह कुण्डे [7]बदराणीतिप्रत्ययवदित्यनुमानेन लाघवतर्कसनाथेन एक एव सिध्यति । एकेनैव सर्वत्र व्यवहारोपपत्तौ तद्[8]नेकत्वकल्पनायां गौरवादिति समवायैकत्वसिद्धिः ॥ ८ ॥

अभावं विभजते—[9]"अभावस्त्विति"[9]* । इह [10]पटो भविष्यतीत्यत्र प्रागभावः प्रतीयते । स नष्ट इति [11]प्रध्वंसः । घटः पटो न भवतीत्यन्योन्याभावः । (A)प्रतियोगिसम[12]वायिव्यतिरिक्तस्थले[12]* इह घटो नास्तीत्यादिनिषेधस्त्रैकालिकोऽत्यन्ताभावः ॥ ९ ॥

सम्प्रति पृथिवीं पृथक् करोति—[13]"पृथिवीति"[13]* । परमाणुसद्भावे प्रमाणम्—त्रसरेणुः सावयवावयवारब्धः जन्यमहत्त्वाधिकरणत्वात् घटवदिति ; [14]त्रसरेणोरवयवे सावयवे सति योऽवयवः स एव[14]* परमाणुः । सोऽपि चेदनित्यः स्यात् तस्यापि हेतुपरम्परानुसारेण अनवस्था स्यात् । तथा च [15]अनवधिकमनेकावयवारब्धं सर्वं कार्यं

---

(A) नव्यास्तु प्रतियोगिसमवायिनि कपालादावपि घटादेरत्यन्ताभावमङ्गीकुर्वन्तीति सिद्धान्तलक्षणदीधितावनुसन्धेयम् । प्रतियोगिसमवाय्यवृत्तित्वविवक्षणे च अन्योन्याभावव्यवच्छेदः कुतो भवति कपालं घटो नेति प्रतीतेरिति ध्येयम् ।

---

1. '-भावात्यन्ताभावान्योन्याभावलक्षण-' ख । 2. 'घ्राणम्' इति नास्ति क । 3. नास्ति ख । 4. 'इह पटे' ख । 5. 'इह' नास्ति ख । 6. 'पटत्वं च इत्या-' ख । 7. 'वदरमस्तीति' ख । 8. '-नेककल्प-' ख । 9. नास्ति ख । 10. 'घटो' ख । 11. 'प्रध्वंसाभावः' ख । 12. '-वायातिरिक्त' ख । 13. इदं नास्ति ख । 14. 'त्र्यणुकस्यावयवे द्व्यणुकस्यावयवे सति स एवावयवः' ख । 15. 'अनधिकानेका-' ख ।

अपो[1]ऽपि द्विविधाः, नित्या अनित्याश्च। परमाणुलक्षणा नित्याः। कार्यलक्षणास्त्वनित्याः। ता अपि शरीरेन्द्रियविषयरूपाः। शरीरं वरुणलोके। इन्द्रियं रसव्यञ्जकं [2]रसनम्*। विषयः [3]सरित्समुद्रादिः ॥११॥

(A)तेजोऽपि नित्यमनित्यं च। परमाणुलक्षणं नित्यम्, कार्यलक्षणमनित्यम्। तदपि शरीरेन्द्रियविषयरूपम्। शरीरमादित्यलोके। इन्द्रियं रूपव्यञ्जकम्। विषयो भौम-दिव्यौ-दर्याकरजरूपः ॥१२॥

---

[4]कल्प्यमिति मशकमातङ्गयोरपि तुल्यपरिमाणत्वापत्तिः। तस्मात् सर्वकार्य[5]द्रव्यावधित्वेन नित्यः परमाणुः सिध्यतीति नित्यपृथ्वीसिद्धिः। द्व्यणुकमप्यनेनैव सिध्यति। एवमग्रेऽपि परमाणु[6]साधनप्रमाणं[6]* द्रष्टव्यम्। [7]अनित्यायास्त्रैविध्यमाह—[8]साऽपीति। शरीरमिन्द्रियं [9]विषयश्च रूपं यस्याः सा[10]। पार्थिवशरीरादित्रयसिद्धौ प्रमाणमाह—[11]शरीरमिति। गन्धव्यञ्जकपदेन [12]घ्राणस्य पार्थिवत्वे[12]* प्रमाणं सूचितम्। 'घ्राणं पार्थिवं रूपादिषु पञ्चसु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात् वायूपनीतसुरभिचम्पकभागवत्' इति घ्राणस्य पार्थिवत्वं [13]सिद्धम् ॥१०॥

अपो विभागं प्रापयति—आपोऽपीति। वरुणलोक इति आगम[14]सिद्धे इति[14]* शेषः। रसव्यञ्जकमिति रसनेन्द्रियस्याऽऽप्यत्वे मानम्। रसनेन्द्रियम् आप्यम् रूपादिषु पञ्चसु मध्ये रसस्यैवाभिव्यञ्जकत्वात् [15]लालावदिति प्रयोगः ॥११॥

तेजो विभजते—तेजोऽपीति। अत्रापि आदित्यलोके इत्यनन्तरं [16]पुराणादिप्रसिद्धे इति[16]* शेषः। इन्द्रियमिति, चक्षुः तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैवाभिव्यञ्जकत्वात् [17]आलोकवदिति[17]*। मनो[18]व्यावृत्त्यर्थमेव[18]*कारः। असिद्धिवारणाय

---

A. इतः प्रभृति ख-पुस्तके मूलभागो न लिखितः।

---

1. 'अपि द्विविधाः' इति नास्ति क। 2. नास्ति क। 3. ख-पुस्तके 'सरित्' इति नास्ति। 4. 'तुल्य-' ख। 5. '-द्रव्यारम्भकत्वेन' ख। 6. '-साधन' ख। 7. 'अनित्यास्त्रै-' ख। 8. नास्ति ख। 9. 'विषयस्वरूपं' ख। 10. 'सा तथा' ख। 11. नास्ति ख। 12. नास्ति ख। 13. नास्ति ख। 14. '-सिद्धमिति' ख। 15. 'लाला-' ख। 16. 'तत् पुराणादिसिद्धमिति' ख। 17. 'आलोकवत्' ख। 18. '-व्यावर्त्तनाय एव-' ख।

वायुरपि नित्योऽनित्यश्च। परमाणुलक्षणो नित्यः। कार्यलक्षणोऽनित्यः। कार्यरूपः शरीरेन्द्रिय-विषय-प्राण-लक्षणः। शरीरं वायुलोके। इन्द्रियं स्पर्शव्यञ्जकम्। विषयो वृक्षादिकम्पजनकः। प्राणस्तु शरीराभ्यन्तरचारी वायुः, स एव क्रियाभेदादपानादिसंज्ञां(A) लभते। स्तिमित-वायुस्तु परमाणुसमूह एवानारब्धद्रव्यः ॥१३॥

---

रूपादिष्विति, अन्यथा रूपत्व[1]स्याभिव्यञ्जकत्वादसिद्धिः[1]*स्यात्। विषयस्य चातुर्विध्यमाह—विषय इति।

नन्वाकरजं सुवर्णं[2] पार्थिवं नैमित्तिकद्रवत्वाधिकरणत्वात् लाक्षा[3]वदिति, (B)पीतिमगुरुत्वाधि[3]*करणत्वात् पीतपटवदिति वा[4] सुवर्णस्य पार्थिवत्व[5]सिद्धौ कथं तैजसत्वमिति चेत्—मैवम्, तस्य पार्थिवत्वे अत्यन्तानलसंयोगे सति द्रवत्व-विनाशापत्तेः, [6]द्रवपार्थिवत्वेन घृतवद् भौमानलेन्धनत्वापत्तेश्चेति [7]बाधकतर्कपराहत-मनुमानम्। तैजसत्वे [8]तु एतत् तर्कसहकृतमनुमानम्—सुवर्णम् [9]अपार्थिवम् असति विरोधिद्रवद्रव्यसम्बन्धे अत्य[10]न्तानलसंयोगे सति अनुच्छिद्यमानद्रवत्वा-धिकरणत्वात् आप्यपरमाणुवद् इति पार्थिवव्यतिरेकसिद्धौ नैमित्तिकद्रवत्वेन जलव्यतिरेकसिद्धौ [11]रूपवत्त्वेन परिशेषात् तैजसत्वसिद्धिः ॥१२॥

वायुं विविनक्ति—वायुरपीति। इन्द्रियमिति, त्वगिन्द्रियं वायवीयं रूपादिषु

---

(A) प्राणादीनां विवरणमुक्तं सदानन्दकृते वेदान्तसारे—'प्राणो नाम प्राग्गमनवान् नासाग्रस्थानवर्त्ती। अपानो नाम अवाग्गमनवान् पाय्वादिस्थानवर्त्ती। व्यानो नाम विष्वग्गमनवान् अखिलशरीरवर्त्ती। उदानो नाम कण्ठस्थानीय ऊर्ध्वगमनवानुत्क्रमणवायुः। समानो नाम शरीरमध्यगताशितपीतान्नादिसमीकरणकरः' इति।

(B) अत्र गुरुत्वाधिकरणत्वमात्रं जले व्यभिचारीति पीतिमपदम्। तथा च पीतत्वगुरुत्वो-भयाधिकरणत्वं जले नास्तीति न जले व्यभिचारः। नन्वेवं पीतिमाधिकरणत्वमात्रं हेतुरस्तु

---

1. '-स्यापि व्यञ्जकत्वेनासिद्धिः' ख। 2. '-र्णं तत् पा-' ख। 3. '-वत् पीतमगुणत्वाधि-' ख। 4. नास्ति ख। 5. '-सिद्धिः' ख। 6. 'द्रवत्पा-' ख। 7. '-बाधतर्क-' ख। 8. 'चैतत्' ख। 9. 'न पार्थिवम्' ख। 10. '-न्ताग्निसं-' ख। 11. 'रूपत्वेन' ख।

आकाशस्तु घटाकाशादिभेदभिन्नोऽनन्त एव ॥ १४ ॥
कालस्तु उत्पत्तिस्थितिविनाशलक्षणस्त्रिविधः ॥ १५ ॥

पञ्चसु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात् 'देहसङ्गि'[1]*सलिलशैत्याभिव्यञ्जकव्यजनवातवदिति त्वगिन्द्रियस्य वायवीयत्वे मानम्। कम्पजनक इत्यनेन वायोरतीन्द्रियत्वात् कम्प-स्पर्श-शब्द-लिङ्गगम्यत्वं सूचयामास(A)। प्रयोगस्तु—'प्रयत्नाद्यभावे[2] सति शाखाकम्पः स्पर्शवद्द्रव्यजन्यः कम्पत्वात् शरीरादिजन्यकम्पवदिति परिशेषाद् 'वायुः सिध्यति'[3]*। शरीराभ्यन्तरचारी श्वासोच्छ्वासरूपः। प्राणवदपानादीनामाधिक्यमाशङ्क्याह—स एवेति। प्राण एव अपान-'व्यानोदान-समान'[4]*संज्ञां लभते इत्यर्थः। ननु पञ्चमो वायुः स्तिमितोऽस्तीत्यत आह—स्तिमित इति। ननु स्तिमितो वायुः परमाणु[5]समूहरूप इत्युक्तेऽपि[5]* पञ्चविधकार्यत्वेऽपि न दोषः कार्यस्यापि परमाणुरूपत्वसम्भवात् परमाणूनामेव परम्परया कार्यावयवत्वात्, अत आह—अनारब्धद्रव्य इति। अनारब्धं द्रव्यं येन स तथा। यद्यपि स्तिमितवायोः परमाणुरूपत्वेन व्यजनादिव्यापारानन्तरं तदीयस्पर्शो न गृह्येत परमाणुस्पर्शस्यातीन्द्रियत्वात् तथाऽपि तदीयस्पर्शानुपलम्भेऽपि (B)व्यजनादिव्यापाररूपनिमित्तसहकारि[6]लाभात् तदारब्धकार्यस्य स्पर्शोपलम्भाददोषः। तस्मात् नित्यवायावेव[7] तस्या[7]*न्तर्भाव इति नाधिकत्वम् ॥१३॥

आकाशस्य स्वत एकत्वेऽपि औपाधिको विभागो भविष्यतीत्याशङ्क्य तदभावे हेतुमाह—घटाकाशादीति। उपाधीनामनन्तत्वेन औपाधिको विभागो न सम्भवतीत्यर्थः ॥ १४ ॥

कालस्यौपाधिकं विभागमाह—उत्पत्तीति। पदार्थानामुत्पत्ति-स्थिति-विनाशै-

---

किं गुरुत्वनिवेशेनेति चेत् न, हेतुद्वये तात्पर्यात्। न चैवं गुरुत्वस्य हेतुत्वपक्षे प्रागुक्तो व्यभिचारो दुर्वार इति वाच्यम्, निःस्नेहत्वे सतीति विशेषणेन तस्य वारणीयत्वात् सुवर्णस्य तैजसत्वं बहुभिर्हेतुभिः साधयितुं शक्यते इति बालानां दिग्दर्शने ग्रन्थकृतोऽभिप्रायाच्च सर्वं समञ्जसम्।

(A) तथा च वायुनिरूपणे प्रशस्तपादाचार्याः—"विषयस्तूपलभ्यमानस्पर्शाधिष्ठानभूतः स्पर्श-शब्द-धृति-कम्प-लिङ्गस्तिर्यग्गमनस्वभावको मेघादिप्रेरणधारणसमर्थः" इति।

(B) व्यजनादिव्यापाररूपं यन्निमित्तकारणं तद्रूपस्य सहकारिणो लाभादित्यर्थः।

---

1. 'आसङ्गि-' ख। 2. 'प्रयत्नाभावे' ख। 3 'वायुसिद्धिः' ख। 4. '-समानव्यानोदान-' ख। 5. '-समूह इत्युक्ते' ख। 6. '-लाभादारब्ध-' 7. '-वेतस्या-' ख।

**दिग् ऐन्द्री आग्नेयी याम्या नैर्ऋती वारुणी वायवी कौवेरी ऐशानी नागी ब्राह्मी रौद्री चेत्येकादशविधा(A) ॥ १६ ॥**

**आकाशादित्रयं तु वस्तुत एकमेव उपाधिभेदान्नानाभूतम् ॥ १७ ॥**

---

लक्ष्यते इति उत्पत्ति-स्थिति-विनाशलक्षणः। उत्पत्त्या [1]भविष्यन्, स्थित्या वर्त्तमानः, विनाशेन भूतकालो लक्ष्यते इति [2]त्रिविधः ॥ १५ ॥

[3]दिशमुपाधिना[4]विभजते—दिगिति। सर्वत्र देवतार्थे इदमर्थे वा तद्धितः। टिड्ढाण[5]ञित्यादिना (पा० ४।१।१५) ङीप्[6] अग्नेर्ढग् (पा० ४।२।३३) [5]यमात् ण्यदिति[5] विशेषः। रौद्री अन्तरिक्ष[6]प्रदेशः ॥ १६ ॥

[7]आकाशादीनां [8]स्वभावतो भेदाभावे हेतुमाह—आकाशादीति। आकाशं तावत् शब्दलिङ्गकम्, शब्दाश्च सर्वे समानाधाराः। तथा हि विवादाध्यासिताः शब्दाः श्रूयमाणशब्दाधारसमवेताः शब्दत्वात् श्रूयमाणशब्द[9]वत्। न च श्रूयमाणशब्दत्वमुपाधिः श्रूय[10]माणविशेषणस्य साधनव्याप्तिपरिहारार्थत्वेन (B)पक्षेतरत्वात् श्रूयमाणशब्दा-

---

(A) इदं तु न प्रशस्तपादाचार्यसम्मतम्। तथा च भाष्यम्—'ततो भक्त्या दश दिशः सिद्धाः। तासामेव देवतापरिग्रहवशात् पुनर्दशसंज्ञा भवन्ति, माहेन्द्री वैश्वानरी याम्या नैर्ऋती वारुणी वायव्या कौवेर्यैशानी ब्राह्मी नागी चेति' इति।

(B) पक्षेतरत्वादिति। इदमत्राकूतम्—शब्दे श्रूयमाणत्वविशेषणमुपाधेः साधनाव्यापकत्वरक्षार्थं सप्रयोजनकम्, श्रूयमाणशब्ददृष्टान्तेन च इह अश्रूयमाणशब्दा एव पक्षीकृताः, तथा च श्रूयमाणशब्दाः पक्षाद्भिन्ना इति स्फुटमेव। सति चैवं श्रूयमाणशब्दत्वरूप उपाधिरपि पक्षभेदान्नातिरिक्तोऽभ्युपेतव्यः, भावातिरिक्तस्याभावस्यानभ्युपगमात्। एवं च सर्वानुमानोच्छेदप्रसङ्गेन पक्षभेदस्योपाधित्वासम्भवात् श्रूयमाणशब्दत्वं नोपाधिरिति। अथोच्येत उक्तदोषेण पक्षतावच्छेदकावच्छिन्नप्रतियोगिताक एव पक्षभेद उपाधिर्मा भूत्, स च प्रकृते शब्देतरत्वमेव ; न च श्रूयमाणशब्दत्वं शब्देतरत्वरूपात् पक्षभेदान्नातिरिच्यते। एवं च यत्र पक्षप्रतियोगिकस्यापि भेदस्योपाधित्वं विपश्चिद्भिरङ्गीकृतं तत्र का कथा जातिरूपतया भेदानात्मकस्य श्रूयमाणशब्दत्वस्योपाधित्वे इति तदवितथम्, एतदस्वरसेनैव श्रूयमाणेत्यादिदोषप्रदर्शनादिति। श्रवणेन्द्रिय-

---

1. 'भविषत्' ख। 2. 'त्रिविध इत्यर्थः' ख। 3. 'दिशामुपाधीन्' ख। 4. '-ञीति ङीप्' ख। 5. 'यमात्याय इति' ख। 6. '-प्रभेदः' ख। 7. 'गगनादीनां' ख। 8. 'स्वभावभेदा-' ख। 9. '-वदिति' ख। 10. '-माणस्य वि-' ख।

धारसमवेतसंयोगादौ(A) साध्याव्यापकत्वाच्च। दिक्कालयोरपि परत्वापरत्वानुमेयत्वेन सिद्धौ एकत्वसिद्धिः। तथा हि तरणिपरिस्पन्दनलक्षणाहोरात्रा[1]ल्पबहुत्वाभ्यां[1]* विशिष्टे पिण्डे परापरबुद्धिर्जायते। तरणिपरिस्पन्दस्य च सूर्यसमवेतत्वेन स्वतः पिण्डसम्ब[2]न्धाभावात्, सूर्यस्य च मूर्त्तत्वेनाश्रयद्वाराऽपि सम्बन्धाभावात्। न च पृथिव्यादीनां तत्सम्बन्ध[3]घटकता मूर्त्तत्वात्, (B)आत्माकाशयोश्च विशेषगुणवत्त्वेन घटादिवत् तदघटकत्वात्। ततस्तरणिपरिस्पन्दपिण्डसम्बन्धघटकतया सिद्धं यद् व्यापकं द्रव्यं स एव कालः। (C)पिण्डस्य[4] तरणिपरिस्पन्देन[5] संयुक्तसमवायलक्षणः सम्बन्धः।

दिगप्यनियतपरत्वापरत्वाभ्यां प्रमातृविप्रकृष्टसन्निकृष्टदेशवर्त्तिपिण्डसमवेताभ्यामनुमीयते। तथा हि—कालस्य [6]ज्येष्ठकनिष्ठत्वादिनियत[7]परापरबुद्धिहेतुत्वेन[7]* सिद्धस्या(D)-नियत[8]परापरबुद्धिहेतुत्वासम्भवात्, [9]तत्साधनत्वेन सिद्धं यद् द्रव्यं सा दिक्, दिक्काल[10]योश्चैक[10]*त्वेनैव व्यवहारोप[11]पत्तौ [12]अनेकत्वकल्पनायां[13] प्रमाणाभावात्(E) ॥१७॥

---

तत्तत्परमाण्वादिसंयोगादौ श्रूयमाणशब्दाधारसमवेतत्वं साध्यमस्ति न च तत्र श्रूयमाणशब्दत्वमिति साध्याव्यापकत्वात् नेदमुपाधिरिति भावः।

(A) अत्र 'श्रूयमाणशब्दाधाराऽसमवेतत्वं योगादौ' इति क-पुस्तकपाठः, तथा तत्रैव पाठान्तरतया धृतः 'शब्दाधारसमवेतत्वे' इति पाठश्च अर्थासङ्गतेः प्रामादिक इति बुद्ध्या परित्यक्तः।

(B) इह आत्माकाशादीनां सम्बन्धाघटकत्वे 'आकाशदिगात्मनां विनिगमनाविरहेणातिरिक्तैककालस्य तथात्वा'दिति हेतुर्मुक्तावलीप्रकाशे उक्तः।

(C) मुक्तावलीप्रकाशे तु स्वाश्रयतपनसंयोगिसंयोग एवेह सम्बन्ध उक्तः।

(D) अनियतेति। यो यदपेक्षया ज्येष्ठः स तदपेक्षया न कदाचित् कनिष्ठः, एवं यो यदपेक्षया कनिष्ठः स कनिष्ठ एव न कदाचिज्ज्येष्ठ इति कालिकपरत्वापरत्वे नियते, दिक्कृते तु नैवम्, यो यदपेक्षया यं प्रति दूरः, गमनादिना तं प्रति तदपेक्षयैव तस्य नैकट्यसम्भवादिति ते अनियते इति बोध्यम्।

(E) अत्र पञ्चम्यर्थान्वयाकाङ्क्षापूरकपदाभावात् 'प्रमाणाभाव' इति प्रथमान्तपाठो युक्ततया प्रतिभाति।

---

1. '-दिबहुत्वाल्पत्वाभ्यां' ख। 2. '-न्धत्वाभावात्' ख। 3. 'घटता' ख। 4. '-स्य च' ख। 5. '-न स्वह संयुक्तसंयुक्त-' ख। 6. 'ज्येष्ठत्वक-' ख। 7. '-परत्वापरत्वबुद्धिहेतुकत्वत्वेन' ख। 8. '-परत्वापरत्वबुद्धिहेतुकत्वास-' ख। 9. 'तस्मात् साधकत्वेन' क। 10. '-योर्वैकक-' ख। 11. '-पत्तौ कल्पभेदेन वाच्यव्यवहारभेदेन वा' ख। 12. 'अनेकक-' ख। 13. '-यां माना-' ख।

**आत्मा तु परमात्मा क्षेत्रज्ञश्चेति द्विविधः। परमात्मा ईश्वर एक एव। क्षेत्रज्ञा अस्मदादयोऽनन्ता एव ॥१८॥**

आत्मपदार्थं विभजते—आत्मा त्विति। नन्वष्टद्रव्यातिरिक्त [1]आत्मा पदार्थ एव नास्तीति कथमयं विभागः? तथा हि कायाकारपरिणतं [2]पृथिव्यादिचतुष्टयमेव आत्मपदार्थः, तत्रैव चैतन्यम्। ननु यदि भूतेषु चैतन्यं तर्हि घटादेरपि चेतनत्वापत्तिरिति चेत्—[3]मैवं भाषिष्ठाः[3]* मदशक्तिवदविरोधात्; यथा क्रमुकफल[4]चूर्णखदिरेषु[4]* प्रत्येकं मदजनकत्वाभावेऽपि समुदाये तज्जनकत्वं पश्यामः, तथा घटाद्याकारे तदभावेऽपि शरीराकारपरिणते भूतचतुष्टये चैतन्योपपत्तेः। प्रमाणं च—अहं स्थूलः [5]कृशः कृष्णो गौर इति शरीरसमानाधिकरणं प्रत्यक्षमेव, ततः पृथि[6]व्यादिष्वन्तर्भावात् आत्मपदार्थस्यातिरिक्तविभागो न युक्त [7]इति, तदसारम्; [8]शरीरस्यात्मत्वे बाल्ये दृष्टं कौमारादौ न स्मरेत् बाल्यकौमारादिशरीराणां यावद्द्रव्यभाविपरिमाणभेदेन भेदात्, अन्यानुभूतस्यान्येनास्मरणात्, न हि चैत्रेणानुभूतं मैत्रः स्मरति। तदुक्तमुदयनाचार्यैः—

नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात्।
वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरे॥ इति।

(कुसुमाञ्जलिः, स्तवकः १, श्लो० १५)।

अपक्रमो विनाशः। वासना संस्कारः। किं च शरीरं नात्मा रूपादिमत्त्वात् घटवत्। न चाचेतनत्वमुपाधिः, रूपादिमत्त्वेनैव शरीरस्याप्यचेतनत्वेन उपाधेः साधनव्यापकत्वात्। [9]हेतावनुकूलतर्कस्तूक्त एव बाल्ये दृष्टमित्यादिना। समानाधिकरणप्रत्ययश्च भ्रान्तः, [10]यौक्तिकस्य बाधस्य सद्भावात् मम शरीरमिति भेदप्रत्ययाच्च। तस्मात् न शरीरमात्मा। तथाऽप्यतिरिक्तात्मसद्भावे किं मानमिति चेत्—एकस्तावदुक्त एव परिशेषः(A), अपरं [11]चानुमानम्[11]*, इच्छा क्वचिदाश्रिता गुणत्वाद् रूपवत्, इच्छागुणः विशेषगुण इति वा अनित्यत्वे सत्येकेन्द्रियग्राह्यत्वात् रूपवदिति।

(A) शरीरं नात्मा इत्यादिक्रमेण पुत्रदेहेन्द्रियमनःप्रभृतिषु व्यावृत्तेषु यः शिष्यते स एवात्मेति परिशेषत्वं बोध्यम्।

1. 'आत्मपदार्थ' ख। 2. 'भूतचतु-' ख। 3. 'न' ख। 4. 'पर्ण-चूर्णेषु' क। 5. नास्ति क। 6. '-व्यायत्त-' ख। 7. 'इति चेत् त-' ख। 8. 'शरीरात्मत्वे' क। 9. 'हेतोरनु-' ख। 10. 'यौक्तिकबाधसद्-' ख। 11. 'च मानम्' ख।

# मनस्तु प्रत्यात्मनिष्ठत्वादनन्तम् ॥ १६ ॥

जन्येच्छायाः पक्षीकृतत्वात् नेश्वरेच्छायां व्यभिचारः। (A) आत्मनो नित्यत्वात् (B) प्रभायाश्च गुणत्वात् [1]न व्यभिचारः। [2]प्रभाया द्रव्यत्वे [3]च (C) अचाक्षुषप्रत्यक्षविषयत्वादिति विशेष्यं कर्त्तव्यम्, तदा रसवदिति दृष्टान्तो [4]विधेयः। [5]सा तु न भूतपञ्चकगुणः, नापि दिक्कालमनसाम्, मनसैव ग्राह्यत्वात्, विशेषगुणत्वाद् वा इत्यु[6]त्तरत्रैव हेतुः। एवमितर[7]बाधसहकृतेन सामान्यतो दृष्टेन व्यतिरिक्तात्मसिद्धिः। [8]यद्वा इतरबाधप्रदर्शनानन्तरम् इच्छा अष्ट[9]द्रव्यातिरिक्तद्रव्याश्रिता अष्टद्रव्यानाश्रितत्वे सति गुणत्वात्, यन्नैवं तन्नैवं यथा रूपादि, इति व्यतिरेकिणा आत्मसिद्धिरिति युक्त एव तस्य विभागः। क्षेत्रज्ञानां विभागा[10]करणे हेतुमाह—अनन्ता एवेति। ॥ १८ ॥

मनसो विभागाकरणे हेतुमाह—प्रत्यात्मेति। [11]आत्मनः प्रतिशरीरं भिन्नत्वेनानन्तत्वात् तन्निष्ठं मनोऽप्यनन्तमित्यर्थः। ननु [12]मनसः स्पर्शरहितद्रव्यत्वेन विभुत्वात् कथमात्मनिष्ठत्वमिति चेत् [13]न, (D)युगपज्ज्ञानानु[14]त्पत्तिलक्षण[15]धर्मिग्राहकमानेन अणु[16]त्वस्यैव सिद्धेः ॥ १९ ॥

(A) हेतौ सत्यन्तस्य फलमाह—आत्मन इति। आत्मनि यथोक्तो हेतुर्नास्तीति न व्यभिचार इति भावः।

(B) भवतु प्रभा हेत्वधिकरणम्, साध्यमपि तत्रास्तीति न व्यभिचार इत्यर्थः।

(C) अचाक्षुषेति। ननु तथाऽपि अनित्यत्वे सत्यचाक्षुषप्रत्यक्षविषयत्वस्य स्पार्शनप्रत्यक्षविषये वायौ सत्त्वाद् व्यभिचारस्तदवस्थ एवेति चेन्न, एतन्मते वायोः प्रत्यक्षानभ्युपगमात्। अथ अचाक्षुषप्रत्यक्षविषयत्वं यदि चाक्षुषान्यप्रत्यक्षविषयत्वं तदा त्वाचप्रत्यक्षविषये घटादौ व्यभिचारः, तद्वारणाय चाक्षुषप्रत्यक्षविषयत्वाभाववत्त्वादित्यर्थोऽभ्युपेयते तदा पुनरपि वायौ व्यभिचार इति चेन्न, एकेन्द्रियग्राह्यत्वस्यापि वक्तव्यत्वात्। दोषान्तरवारणप्रकारस्तु स्वयमूहनीय इति संक्षेपः।

(D) 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमि'ति न्यायसूत्रम्। बृहदारण्यकेऽपि 'कामः संकल्प' इति प्रकृत्य श्रूयते 'अन्यत्रमना अभूवमिति नाश्रौषम् अन्यत्रमना अभूवमिति नाद्राक्षम्' इत्यादि।

1. 'न व्यभि-' ख। 2. 'प्रभाया' इति नास्ति क। 3. 'वा' ख। 4. 'विधेय' इति नास्ति ख। 5. इतः पूर्वं ख-पुस्तके 'तदन्यत्वे सतीति विशेषणीयम्' इत्यधिकम्। 6. '-त्तरत्र हेतुः' ख। 7. '-बाधक-' ख। 8. 'यदितर-बाधक-प्र-' क। 9. '-रेकेणात्म-' क। 10. '-म-करणे' ख। 11. 'आत्मनां' ख। 12. 'मनसः सर्वदा स्पर्श-' ख। 13. 'न' नास्ति ख। 14. '-नुपपत्ति-' क। 15. 'धर्मि' नास्ति ख। 15. '-त्वसिद्धिः' ख।

आकाशादिपञ्चकं नित्यमेव अपरं (A)नित्यानित्यं च ॥२०॥

रूपं सित-लोहित-पीत-कृष्ण-हरित-कपिश-चित्रभेदात् सप्तविधम् ॥२१॥

रसोऽपि मधुर-तिक्त-कटु-कषायाम्ल-लवण-चित्रभेदात् सप्तविधः ॥२२॥

गन्धोऽपि द्विविधः, सुरभिरसुरभिश्चेति। स्पर्शस्तु शीतोष्णानुष्णाशीतभेदात् त्रिविधः। संख्या एकत्व-द्वित्व-बहुत्वभेदात् त्रिविधा। (B)परिमाणम् अणु-महद्-दीर्घ-ह्रस्वभेदाद् विविधम्। पृथक्त्वम् एकानेकवृत्ति। संयोगोऽपि द्विविधः, कर्मजः संयोगज-

---

नवानामप्यपरं विभागमाह—आकाशादीति। नित्यानित्यमिति, परमाणु[1]कार्यभेदादित्यर्थः[1]* ॥२०॥

रूपादीनामवान्तरविभागं दर्शयति—रूपमिति। सितादीनामाश्रयव्याप्यवृत्तित्वेन अव्याप्यवृत्तित्वायोगात्, चित्रः पट इत्याद्यनुभवाच्च सप्तमं रूपमास्थेयमिति मत्वाह—चित्रभेदादिति। तत्रापि जले शुक्लमेव रूपम्, शुक्लभास्वरमेव तेजसि, इतराणि तु भूमावेव, पाकजानि च ॥२१॥

रसोऽपीति। मधुरः शर्करादौ, तिक्तो निम्बादौ, कटु[2]र्मरिचादौ, कषाय आमलक्यादौ, [3]अम्ल आम्रादौ[3]*, लवणः प्रसिद्धः। षड्रसा हरीतकीति चित्ररसानुभवमवलम्ब्याह—चित्रभेदादिति। तत्रापि जले मधुर एव रसो हरीतक्या[4]ऽभिव्यङ्ग्योऽपाकजः। इतरे तु भूमावेव, पाकजाश्च[5] ॥२२॥

[6]गन्धोऽपीति। सुरभिश्चन्दनादौ। असुरभिर्मद्यादौ। [7]स्पर्शस्त्विति। शीतः

---

(A) अत्र क-पुस्तके 'नित्यानित्यरूपम्' इति पाठान्तरत्वेनाधो धृतम्।

(B) यद्यप्यादर्शपुस्तके संयोगनिरूपणात् परमेव 'परिमाणम् अणु-महद्-दीर्घ-ह्रस्वभेदाद् विविधम्' इति ग्रन्थो मुद्रितो दृश्यते तथाऽपि तत्र लेखकप्रमाद एव हेतुरिति मत्वा उद्देशक्रमरक्षार्थमेवं विपर्ययः कृतः।

---

1. '-कार्यकारणभेदात्' ख। 2. '-मरीचादौ' ख। 3. नास्ति क। 4. '-क्यादभि-' ख। 5. 'च' नास्ति ख। 6. 'गन्धेति' ख। 7. 'स्पर्श इति' ख।

श्चेति। विभागोऽपि द्विविधः, कर्मजो विभागजश्च। परत्वं कालकृतं दिक्कृतं च। अपरत्वमपि दिक्कृतं कालकृतं च ॥२३॥

बुद्धिरपि स्मृतिरनुभवश्च। अनुभवोऽपि द्विविधः प्रमाऽप्रमा च। अप्रमाऽपि संशयो विपर्ययश्च। प्रमा प्रत्यक्षमनुमितिश्च। प्रत्यक्षं सप्तप्रकारम्। (A)तच्च ईश्वर-घ्राण-रसन-चक्षु-स्त्वक्-श्रोत्र-मनोलक्षणम् ॥२४॥

---

स्पर्शो जले, उष्णस्तेजसि, अनुष्णाशीतो वायौ, भूमौ[1] स एव पाकजः। परिमाणमिति, अणुत्वं ह्रस्वत्वं च परमाणुद्व्यणुकयोः, महत्त्वदीर्घत्वे आकाशघटादौ। कुवलयामलकयादौ अणुह्रस्वादिव्यवहारो गौणः। पृथक्त्वमिति, अनेकवृत्ति [2]द्विपृथक्त्वादि। संयोग इति (B)तत्रापि कर्मजो द्विविधः, अन्यतरकर्मज उभयकर्मजश्च। स्थाणुश्येनयोरन्यतरकर्मजः, मल्लयोर्मेषयोर्वा[3] उभयकर्मजः। [4]तन्तुकेशसंयोगात् पटकेश[5]संयोगः संयोगजः। तथाहि पटारम्भकतन्तुकेशसंयोगः कर्मजः, ततः पटोत्पत्तौ केशपटसंयोगो न कर्मजः, उभयत्र अन्यतरत्र वा कर्माभावात्, [6]किं तु[6]* तन्तुकेशसंयोग एव हेतुः। विभागोऽपि संयोगवदेव [7]ज्ञेयः। [8]परत्वमिति, वृद्धतरुणयोः परत्वापरत्वे कालकृते। सन्निकृष्टेऽपरत्वं विप्रकृष्टे परत्वं च दिक्कृतम्। तयोर्दिक्कालजन्यत्वं पुरस्तादेव प्रासाधि ॥२३॥

बुद्धि[9]भेदानाह—बुद्धिरपीति। प्रमानिरूप्यत्वात्( पणात् ? ) परस्तात् (C)विभक्तामप्यप्रमां सूचीकटाहन्यायेन प्राग् विभजते—अप्रमाऽपीति।

ननु सर्व-ज्ञानानां यथार्थत्वात् संशयविपर्ययाभावात् कथं तद्विभाग इति प्रभाकरः। मानं च—ज्ञानत्वं यथार्थमात्रवृत्ति ज्ञानमात्रवृत्तित्वात् प्रमात्व[10]वत्। यथार्थत्वं [11]च

---

(A) प्रत्यक्षस्य सप्तविधत्वमुपपादनीयम्, तच्च तदयोगव्यवच्छिन्नत्वलक्षणकारणभेदेनैव सम्भवतीत्यत ईश्वरोऽपीह उपात्त इति ध्येयम्।

(B) अयमंशः क-पुस्तके पाठान्तररूपेण गृहीतः।

(C) विभक्तामिति विभागार्थमुद्दिष्टामित्यर्थः।

---

1. अतःपरं क-पुस्तके 'च' इत्यधिकम्। 2. 'द्विबहुपृथक्त्वादि' क। 3. 'वा' इति नास्ति ख। 4. 'तन्तुसंयोगात्' ख। 5. '-संयोगो न तन्तुकेशसंयोगात् पटकेशसंयोगः। ततः' क। 6. नास्ति ख। 7. 'उन्नेयः' क। 8. 'परत्वम्' नास्ति क। 9. '-भेदमाह' ख। 10. '-वदिति' ख। 11. 'च' नास्ति ख।

**अनुमितिरपि त्रिविधा लिङ्गस्य त्रैविध्यात्, केवलान्वयि केवलव्यतिरेकि अन्वयव्यतिरेकि चेति। तदपि स्वार्थं परार्थं च ॥२५॥**

---

तद्वति तत्प्रकारकज्ञानत्वम्। तच्छब्देन ज्ञानविषयवृत्ति घटत्वादिकमुच्यते, तेन घटत्ववति घटे 'घटत्वप्रकारं ज्ञानं'[1]* यथार्थमित्यर्थः। भ्रमे तु नैवम्, पुरोवर्तिनि शुक्तिकाशकले रजतत्वस्याभावेन रजतत्ववति रजतत्वप्रका[2]रकत्वाभावात्, किं तु रजतत्वाभाववति शुक्तिकाशकले रजतत्वप्रकारकत्वम्। ततो यथार्थ[3]त्वलक्षणं भवदभ्युपेतं भ्रमं न व्याप्नोति। हेतौ तु(A) प्रमेयत्वादौ[4] व्यभिचारवारणाय मात्रपदम्। तस्मादयुक्तो विभाग इति चेत्—उच्यते, प्रत्यक्षविरुद्धं तावदनुमानम्, 'अहमत्र संशये', 'ममात्र संशयः समजनी'ति संशयानुभवात्; तथा 'शुक्तिकामिमामहमेतावन्तं कालं रजतमित्यज्ञासिषम्' इति विपर्ययानुभवात् च[5]; तथा च कालात्यया[6]पदिष्टम्। तथाऽप्ययथार्थसद्भावे किं प्रमाणमिति चेत्—एकं तावद् [7]दर्शितमेव प्रत्यक्षम्, अपरं [8]तावदनुमानम्—ज्ञानत्वम् अयथार्थवृत्ति सकलज्ञानवृत्तित्वात् सत्तावत्। न च साध्यवैकल्यम् [9]दृष्टान्तस्य अयथार्थव्यवहारे गुरुमते[10]ऽपि सत्तासद्भावेन संप्रतिपन्नत्वात् साध्यस्य। न च [11]यथार्थानुभवत्वादौ व्यभिचारः [12]तस्य सकलज्ञानवृत्तित्वाभावात्। न च [13]ज्ञानान्यवृत्तित्वमुपाधिः स्मृतेरयथार्थाया अपि सद्भावेन स्मृतित्वस्यायथार्थवृत्तित्वेऽपि ज्ञानान्यावृत्तित्वेन साध्याव्यापकत्वात्। तस्मादयथार्थज्ञानसत्त्वाद् युक्तोऽयमप्रमाविभागः। प्रमां विभजते—प्रमेति। (B)सप्तविधत्वं च ईश्वरादिभेदेनेति वक्ष्यति ॥२४॥

लिङ्गस्य त्रैविध्यमाह—केवलान्वयीति। क्रमेणोदाहरणानि[14]—(C) शब्दोऽभि-

---

(A) अत्र 'तु'कारः पक्षान्तरं सूचयति, तथा च 'सिद्धसाधनवारणाय साध्यांशे मात्रपदम्' इत्यंशोऽत्र स्वाभिमतो न वेत्यनुसन्धेयम्।

(B) प्रत्यक्षाणां षाड्विध्यप्रवादस्तु जन्यप्रत्यक्षापेक्षयेति हृदयम्।

(C) केवलान्वयिनं प्रदर्शयति शब्द इति। 'अत्यन्ताभावाप्रतियोगिसाध्यसाधकं केवलान्वयी'ति लक्षणम्। अत्र साध्यस्याभिधेयत्वस्य अत्यन्ताभावाप्रतियोगित्वात् लक्षणसमन्वयः।

---

1. 'घटाकारज्ञानं' क। 2. '-रत्वाभावात्' ख। 3. '-र्थत्वं भव-' ख। 4. '-त्वादिवार-' क। 5. 'च' नास्ति क। 6. '-पदिष्टमनुमानम्' ख। 7. 'उक्तमेव' ख। 8. 'चानुमानम्' ख। 9. 'दृष्टान्तस्य' नास्ति क। 10. 'अपि' नास्ति क। 11. 'अनुभव-' क। 12. 'तेषां' क। 13. 'ज्ञानायमुपाधिः' ख। 14. '-णानि दर्शयति शब्दो-' ख।

**परार्थाङ्गानि प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि । उभयाङ्गानि पक्षधर्मत्वम् सपक्षे सत्त्वम् विपक्षाद् व्यावृत्तिरबाधितविषयत्वम् असत्प्रतिपक्षितत्वं चेति ॥२६॥**

---

धेयः प्रमेयत्वाद् घटवत्, (A)जीवच्छरीरं सात्मकं प्राणादिमत्त्वात्, न यदेवं न तदेवं यथा पाषाण इति, (B)'शब्दोऽनित्यः'[1]* कार्यत्वात् [2]'यद् यत् कार्यं तत्तदनित्यं यथा घटः'[2]* यदनित्यं न भवति तत् [3]'कार्यमपि न'[3]* भवति यथा गगनमिति। त्रिविधस्यापि द्वैविध्यमाह–तदपीति । यत्र स्वयमेव [4]'लिङ्गं दृष्ट्वा'[4]* लिङ्गिनं जानाति तत् स्वार्थम्, यत्र स्वयम् [5]एव निश्चित्य परबोधनाय पञ्चावयववाक्यप्रयोगः तत् परार्थम् ॥२५॥

पञ्चावयवानाह—परार्थाङ्गानीति । क्रमेणोदाहरणानि—पर्वतोऽयं वह्निमान्, धूमवत्त्वात्, (C)महानसवत्, [6]'तथा चायं'[6]* धूमवान्, (D)तस्माद् वह्निमानेवेति । स्वार्थपरार्थाङ्गान्याह—उभयाङ्गानीति । पक्षे [7]वर्त्तमानत्वं पक्षधर्मत्वम्, सपक्षे [8]व्यापक(कैक?)-देशे वा सत्त्वं सपक्षे सत्त्वम्, विपक्षे सर्वस्मिन्नवर्त्तमानत्वं विपक्षाद् व्यावृत्तिः । पक्षे साध्यस्य प्रमाणान्तरेण बाधविरहोऽबाधितविषयत्वम् । असन् प्रतिपक्षो यस्य तस्य भावस्तत्त्वं साध्याभावसाधकप्रत्यनुमानरहितत्वमिति यावत् ॥२६॥

---

(A) केवलव्यतिरेकिणं दर्शयति जीवदिति । व्यतिरेकव्याप्त्या साध्यसाधकं केवलव्यतिरेकीति लक्षणम् । न यदेवमित्याद्युदाहरणेन व्यतिरेकव्याप्तेर्ग्रहणात् लक्षणसमन्वयः ।

(B) अन्वयव्यतिरेकिणमाह शब्दोऽनित्य इति । अन्वयव्यतिरेकव्याप्तिद्वयग्रहाधीनानुमित्युपधायकत्वमिति तु लक्षणम् । यद् यत् कार्यमित्याद्यन्वयोदाहरणेन अन्वयव्याप्तेः, यदनित्यं न भवतीत्यादिना च व्यतिरेकव्याप्तेर्ग्रहणादत्र लक्षणसमन्वय इति संक्षेपः ।

(C) महानसवदित्युदाहरणं प्राचीनेषु कस्य सम्मतमिति न निर्णयो जातः ; नव्यानां तु 'यो यो धूमवान् स वह्निमान्' इत्युदाहरणवाक्यम् । तत्रापि केचित् उक्तवाक्यं 'यथा महानस-'मित्यादि दृष्टान्तवाक्यसहितमेव उदाहरणमिच्छन्तीति गुरवः ।

(D) धूमवानित्यंशशून्यः 'तथा चाय'मित्याकारक उपनयः प्राचीनसम्मत इति 'चैत्रः पचति घटो नेतराणीति प्रतिज्ञायां साध्यविषयित्वानुयोगित्वयोः सम्बन्धविधयैवानुप्रवेशात् यथोपदर्शितसाध्यगमकतौपयिकव्याप्तिविशिष्टहेतुमत्त्वस्य च पक्षे उपनेयत्वात् तथा चाय-

---

1. 'अनित्यः शब्दः' ख । 2. अयमंशः क-पुस्तके नास्ति । 3. 'कार्यं न' ख । 4. नास्ति क । 5. 'एव' नास्ति क । 6. 'न चायम्' ख । 7. 'व्याप्यवर्तमानत्वं' ख । 8. 'व्याप्यं वादेशे' ख ।

## तदाभासा असिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमाः ॥२७॥

अनुमान[1]शोधनायाह—तदाभासा इति। व्याप्तिपक्षधर्मताविशिष्टो हेतुः सिद्धः, तद्रहितोऽसिद्धः। स च पक्षाभावादाश्रयासिद्धः, पक्षधर्मताऽभावात् स्वरूपासिद्धः, व्याप्त्यभावाद् व्याप्यत्वासिद्ध इति [2]त्रिविधः। क्रमेणोदाहर[3]णानि—गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत्। अनित्यः शब्दः चाक्षुषत्वात् [4]विमतं क्षणिकं[4]* प्रमेयत्वादिति। साध्यसाधनाय प्रयुक्तो हेतुर्यदि तद्विपरीतं साधयति तदा विरुद्धः। यथा शब्दो नित्यः कृतकत्वादिति। (A)[5]अम गतावित्यस्मान्निष्पन्नोऽन्तशब्दो निश्चयवाची, एकेन साध्यरूपेण अन्तः सहचारनिश्चयो न [6]विद्यते [7]यस्यासौ अनै[7]*-कान्तिकः। स च द्विविधः, यथा—नित्यः शब्दः प्रमेयत्वादिति साधारणोऽनैकान्तिकः, (B)नित्या पृथिवी गन्धवत्त्वादित्यसाधारणोऽ[8]नैकान्तिकः सकल[9]सपक्षविपक्ष[9]*-व्यावृत्तत्वात्। सर्वमनित्यं प्रमेयत्वादित्यनुपसंहारी व्याप्त्युप[10]संहाराभावात्। तत्र षड्हेत्वाभासपक्षे असाधा[11]रण एव[11]* अनध्यवसितशब्देनोच्यते। साध्याध्यवसा[12]नाय नालमित्यनध्यवसितः। स च षड्हेत्वाभासानभ्युपगच्छता आचार्येण पृथगुक्तः। उदाहरणं तु पृथ्वी नित्या गन्धवत्त्वात्। अत्र सपक्षादाकाशादेः विपक्षाज्जलादेर्व्यावृत्तत्वेन साध्यस्य निश्चेतुमशक्यत्वादनध्यवसित इत्युच्यते। कालस्यात्यये[13] अपदिष्टो निर्दिष्टः कालात्ययापदिष्टः। यथा—अनुष्णं तेजो वस्तुत्वात् जलवद् इति

मित्याकारकः सुवच एव प्राचामुपनय इत्यवयवदीधितिग्रन्थादवगम्यते। एवं तत्त्वचिन्तामणावपि 'आद्ये तथा चायमिति प्रक्रमात् तथेति हेतुमानित्यर्थ' इति।

(A) 'पुस्तकद्वयेऽपि अमु गताविति पाठदर्शनेऽपि धातुपाठे अम गत्यादिष्विति दर्शनादुपरि तदनुसारेण पाठो धृतः' इति क-पुस्तकसम्पादकाः।

(B) अत्रादर्शपुस्तकद्वये दृश्यमानोऽपि 'नित्या पृथिवी गन्धवत्त्वादित्यसाधारणोऽनैकान्तिकः सकलसपक्षविपक्षव्यावृत्तत्वा'दित्यंशः प्रमादादापतित इति सम्भाव्यते असाधारणस्य अनैकान्ते नान्तर्भाव इत्यस्यानुपदं वक्ष्यमाणत्वात् तस्य चतुर्थहेत्वाभासरूपत्वात्, अनैकान्तद्वैविध्यरक्षणस्य च साधारणानुपसंहारिभ्यामेव सम्भवात्, असाधारणस्यापि तत्र प्रवेशे आधिक्यापाताच्चेति ध्येयम्।

1. '-परिशोध-' ख। 2. 'विधा' ख। 3. '-णानि दर्शयति' ख। 4. 'विवादास्पदं विमतं सर्वं क्षणिकं' क। 5. 'अमु गतौ' ख। 6. 'घटते' ख। 7. 'यस्य सोऽनै-' ख। 8. ख-पुस्तके 'अनैकान्तिकः' इति नास्ति। 9. '-पक्षविपक्षेभ्यो' ख। 10. '-संहारस्थलाभावात्' ख। 11. '-रणानैकान्तिक एव' ख। 12. '-नाय निश्चयाय नाल-' ख। 13. -'त्यये अपगमे अप-' ख।

त- ्स्वभौ [illegible] देव ॥२८॥

---

प्रयोगे वस्तुत्वानुष्णत्वयोर्व्याप्तिग्रहणसमये एव प्रत्यक्षेणानुष्णत्वप्रतियोगितया उष्णत्वं क्वचिदवधारणीयम्, प्रतियोगिनिरूपणं विना अभावनिरूपणासम्भवात्। ततो बलवता व्याप्ति[1]ग्राहकेणैव प्रत्यक्षेण तेजस्युष्णत्वमवधारितम्, तस्यान्यनिष्ठत्वाभावात्। तथा च प्रत्यक्षेण विपरीतत्वनिश्चये सति तद्विरोधेनानुमानकालस्य अत्यये प्रयुक्तत्वादस्य कालात्ययापदिष्टत्वम्।

नन्वयमाश्रयासिद्ध एव, तेजसः साध्याभाववत्त्वेन निश्चितत्वात् सन्दिग्धसाध्यान्वित[2]पक्षत्वासम्भवात् पक्षस्यैव विपक्षत्वेनानै[3]कान्तिक एव वा[4] अतोऽयं न बाधितापरपर्यायः कालात्ययापदिष्ट इति चेत्—सत्यम्, तथाऽपि पक्षे साध्याभावप्रमामन्तरेण असिद्ध्यादेरनवगमात् साध्याभावप्रमारूपबाधस्योपजीव्यत्वात् पृथक्त्वम्।

तथाऽप्यसङ्कीर्णोदाहरणं किमिति चेत् श्रूयताम्—अयं पर्वतो वह्निमान् धूमवत्त्वादित्ये[5]तावद् अनुमानम् (A)। अत्र महानसीयादिर्वह्निः पर्वते बाधादेव न सिध्यति, असिद्ध्यादेस्तत्राभावात्, अतोऽन्यदीयो वह्निरन्यत्र साध्यमानः कालात्ययापदिष्टत्वादेव न सिध्यति (B)। बाधकालात्ययापदिष्टत्वयोः[6] पर्यायतैव साध्याभाववत्तया प्रमिते पक्षे उभयोः प्रयोगात्।

प्रकरणयोः प्रकृतयोः [7]साध्यतदभावयोः[7]* समः प्रकरणसमः साध्यविरोधित्वेन तदभावस्यापि प्रकृतत्वात्। उदाहरणं तु—अनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात्, नित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् सपक्षवदिति (C) ॥ २७ ॥

ननु व्याप्यारोपे व्यापकारोपस्तर्कः। यथा—धूमानुमाने धूमोऽस्तु वह्निर्मा भूदिति[8] वह्न्यभावस्य व्याप्यस्य प्रतिवादिना आरोपे कृते [9]सति 'यद्यनग्निः स्यात् तर्हि निर्धूमो'[10]ऽपि

---

(A) अनुमानमत्र अनुमानप्रयोजकीभूतप्रयोगः, अनुमितिस्तु 'अयं पर्वतो वह्निमान्' इत्याकारिकैव। धूमवत्त्वादित्येतावत्पर्यन्तोक्तिस्तु हेत्वादिज्ञापनद्वारा असिद्ध्यादिदोषान्तरासङ्करप्रदर्शनार्थम्।

(B) नवीनास्तु उत्पत्तिक्षणावच्छिन्नो घटो गन्धवान् क्षितित्वादित्याद्यसङ्कीर्णबाधस्थलमुदाहरन्ति।

(C) अत्रायं विशेषः—विरोधे वाद्युक्तो हेतुरेव साध्याभावसाधकतया उद्भाव्यते प्रकरणसमे तु हेत्वन्तरं तथेति सम्प्रदायः।

---

1. '-ग्राहकेणैव' ख। 2. '-पक्षत्वान्वयासम्भवात्' क। 3. '-कान्त एव' ख। 4. 'वा' नास्ति क। 5. '-तावदेव अनु-'। 6. '-योः अपरपर्या-' क। 7. नास्ति क। 8. '-र्मोऽस्तु' क। 9. 'सति' नास्ति ख। 10. 'अपि' नास्ति ख।

स्यात्' इति धूमाभावस्य व्यापकस्यारोपः, [1]स किमिति नोद्दिष्टः। तथा, स्वप्नो नाम निद्रादुष्टमनोजन्यज्ञानम्, स च कुतो नोद्दिष्ट इत्यत आह—तर्केति। तर्कस्तावत् संशय एव, यद्यग्निस्तर्हि निर्धूम इत्यत्र यद्यालिङ्गि[2]त्वेनाग्निमत्त्वे धूमवत्त्वं सम्भवतीत्यपि प्रतीयते, अतो(A)ऽस्तित्व-नास्तित्वकोटिद्वयविषय[3]त्वस्य स्पष्टत्वात्[8]*। (B)यद्वा दृश्यते च धूमस्तस्मा[4]दग्निरस्त्येवेति विपर्ययपर्यवसा[5]नान्तः(C) तर्कः, तत्र न स्यादस्ति चेति कोटिद्वयविष[6]यत्वात्(D)। स्वप्नस्तु (E)गगनलक्षणाद्यविद्यमानं विद्यमानत्वेन असन्निहितं गजादि सन्निहितत्वेन दर्शयन् विपर्यय एव तल्लक्षणाक्रान्तत्वात् ॥ २८ ॥

नन्वयं घट इति [7]विशिष्टं ज्ञानं सविकल्पकम्[7]*, (F)[8]प्रथमाक्षसन्निपातजं ज्ञानं

(A) अस्तित्वेति। यद्यनग्निः स्यात् तर्हि निर्धूमः स्यादित्युक्तौ 'यदि'-शब्दबलात् अग्न्यभावसत्त्वे धूमाभावस्य अग्निसत्त्वे च धूमस्य सत्त्वमिति भावाभावात्मककोटिद्वयमत्र विषय इति संशयत्वमिति फलितम्।

(B) अत्र व्याप्यारोपाधीनो व्यापकारोपो हि तर्कः, आरोपश्चाहार्यज्ञानम्। तथा च ह्रदो न वह्निमानिति बाधज्ञाने सति ह्रदो यदि धूमवान् स्यात्तदा वह्निमानपि स्यादित्येवं व्याप्तिज्ञानोत्तरं वह्निव्याप्यधूमवान् ह्रद इति परामर्शात्मकव्याप्यारोपात् 'ह्रदो वह्निमान्' इत्येव अनुमितिसमानाकारं ज्ञानं तर्क आपत्तिरिति च व्यपदिश्यते। आपत्तौ बाधस्यानुगुणत्वाच्च आरोपस्य आहार्यत्वं सिध्यति। एवं च 'यदि'पदोल्लेखरहितस्य ह्रदो वह्निमानित्यादितर्कस्य कोटिद्वयावगाहितैव नास्ति भावाभावविषयकत्वं तु सुतरामिति तर्कस्य संशयान्तर्भावपक्षस्य सुदूरपराहतत्वमाशङ्क्याह यद्वेति।

(C) विपर्ययपर्यवसानान्त इति। अन्तशब्दोऽत्र निष्कर्षवाची। तथा च विपर्ययपर्यवसाने विपर्ययाभिधेऽप्रमाभेदे अन्तर्भावे अन्तः निष्कर्षो यस्य तादृशस्तर्क इत्यर्थः। उत्तरत्रोक्तं कोटिद्वयविषयत्वं च ज्ञानभेदमवलम्ब्यैवेति बोध्यम्, तेन च तदभाववति तत्प्रकारकत्वरूपम् अप्रमालक्षणमत्र प्रतिपादितम्।

(D) यद्वेत्यादिः कोटिद्वयविषयत्वादित्यन्तो ग्रन्थः क- पुस्तके असार्वत्रिकतयोक्तः।

(E) इह गगनलक्षणादीत्यत्र प्रकृतपाठोऽनुसन्धेयः। अस्यैव प्रकृतत्वे तु लक्षणपदं स्वरूपपरम्। एवं गगनस्याविद्यमानत्वं स्वप्नदर्शनविषयत्वं च प्रयत्नेनोपपादनीये।

(F) अत्र क-पुस्तकसम्पादकैः आदर्शपुस्तकद्वयेऽपि प्रथमाक्षिसन्निपातेत्यादि पाठं दृष्ट्वाऽपि

1. 'स च' ख। 2. '-त्वेन अनग्निमत्त्वे न धूम-' ख। 3. '-त्वात्' ख। 4. -'दग्निरप्यस्ती-' ख। 5. '-नात्' क। 6. '-यत्वस्य स्पष्टत्वात्' ख। 7. 'विशिष्टं सविकल्पकं ज्ञानम्' ख। 8. प्रथमाक्षि-' ख।

**एवं प्रत्यभिज्ञाहानोपादानोपेक्षाज्ञानानामपि ॥३०॥**

**ऊहानध्यवसाययो(A)स्तु संशय एव ॥३१॥**

---

निर्विकल्पकम्, एतद्द्वयं किमिति नोद्दिष्टमित्यत आह—सविकल्पकेति। रजते एव 'इदं रजत'मिति सविकल्पकं प्रमा, अरजते रजत'ज्ञानमप्रमा[1]*इत्यर्थः। निर्विकल्पकं तु प्रमायामेव अन्तर्भवति, तस्य [2]प्रथमाक्षसन्निपातजस्य वस्तुस्वरूपमात्र[3]विषयकस्य क्वाप्यबाधात्, सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति न्यायात्, निर्विकल्पकस्य च प्रकाराभावात् ॥२९॥

ननु सोऽयं देवदत्त इत्यतीतवर्त्त[4]मानकालविशिष्टविषयकं ज्ञानं [5]प्रत्यभिज्ञा। इष्टे वस्तुनि विषये इदं ग्राह्यमिति ज्ञानमुपादानबुद्धिः। अनिष्टे त्याज्यमिति हेयबुद्धिः। तदुभयरहिते उपेक्षाबुद्धिः। एतच्चतुष्टयं कुतो [6]नोक्तमित्यत आह—एवमिति। प्रमाया-मप्रमायां चान्तर्भाव इत्येवंशब्दार्थः। अप्येवमित्यन्वयः। (B)बाधितायाम् अप्रमायाम् अबाधितायां प्रमायामिति विभागः ॥३०॥

ननु तथाऽपि (C)बाह्यालीप्रदेशे पुरुषेणानेन भवितव्यम् इत्यूहज्ञानम्, किंसंज्ञको-[7]ऽयम् इत्यनध्यवसायज्ञानम्। अनयोः कुतो नोद्देश इत्यत आह—ऊहेति। अन्तर्भाव इति शेषः। [8]ऊहे पुरुषेण भवितव्यमित्यत्र न भवितव्य[9]मित्यपि कोटिः स्फुरतीति संशयत्वं व्यक्तमेव। किंसंज्ञकोऽयमित्यत्रापि चूतः पनसो वेति विकल्पस्फुरणात् अनध्यवसायोऽपि संशय एवेत्यर्थः।

ननु तर्कादीनां यदि संशयेऽन्तर्भावस्तर्हि तल्लक्षणेनैव तेषां लक्षितत्वात् न पृथग् लक्षणाभिधानं युक्तम्। अन्तर्भावनीयतर्कादिज्ञानाय तल्लक्षण[10]कथनमिति चेत्—तर्हि[10]*

---

इन्द्रियसामान्यार्थकमक्षशब्दमन्तर्भाव्य कल्पितः पाठ एव मुद्रितः। चाक्षुषज्ञानस्थले एव उदाहरणदर्शनात् प्रथमाक्षीत्यादिपाठोऽपि नासङ्गतः।

(A) "किमिदमित्यालोचनमात्रमनध्यवसायः। यथा वाहीकस्य पनसादिष्वन-ध्यवसायो भवति" इति प्रशस्तपादभाष्यम्।

(B) अत्र 'बाधितानाम् अप्रमायामबाधितानां प्रमाया'मिति पाठो युक्ततया प्रतिभाति।

(C) बाह्यो य आलीप्रदेशस्तत्रेत्यर्थः। आली सेतुः क्षेत्रद्वयसीमाव्यञ्जकः पन्था वा।

---

1. '-ज्ञानं भ्रमः' क। 2. 'प्रथमाक्षिस-' ख। 3. '-विषयस्य' क। 4. '-मानदेशकालवि-' ख। 5. 'प्रत्यभिज्ञानं' ख। 6. 'न निर्दिष्टमि-' ख। 7. '-ऽयं वृक्ष इ-' क। 8. 'ऊहस्य' क। 9. '-मिति स्फु-' क। 10. '-कथनं चेत्' ख।

सुखं सांसारिकं स्वर्गश्च। दुःखमपि दुःखकारणमात्रप्रभवम्। इच्छाऽपि द्विविधा। साध्यविषया साधनविषया च। द्वेषोऽपि साध्यविषयः साधनविषयश्च(A)। प्रयत्नोऽपि विहितनिषिद्धोदासीनविषयः ॥३२॥

गुरुत्वं समाहाररूपमेकावयविनिष्टं च ॥३३॥

---

ऊहादेरपि तद् वाच्यम्, नार्द्धजरतीन्यायो युक्त इति चेत्—न, ऊहादेरतिस्पष्टत्वेन लक्षणानभिधानात्, तद्विपरीतत्वेन [1]तेषां तदभिधानादिति ॥३१॥

क्रमप्राप्तं सुखं विभजते—सुखमिति। ऐहिकं पारलौकिकं चेति द्विविधमित्यर्थः। सांसारिकशब्देन दुःखमिश्रितत्वोक्तेर्दुःखस्यापि सर्वस्य सांसारिकत्वात् न भेदकथनम्। मात्रेणात्र साकल्यमुच्यते। इच्छाद्वेषयोः सुखदुःखविषयत्वं साध्यविषयत्वम्, स्रक्-चन्दनादि-कण्टकादिविषयत्वं साधनविषयत्वम्[2]। 'विहितम्' अग्निहोत्रादि। 'निषिद्धम्' [3]कलञ(B)भक्षणादि[3]*। 'उदासीनम्' लौकिकं भोजनादि। एतानि विषयो यस्य स तथा, स त्रेधा इत्यर्थः ॥३२॥

समाहारस्य रूपमिव रूपं यस्य [4]तत् तथा, एकैकमाषापेक्षया राशीकृतस्य माषस्य गुरुत्वाधिक्यदर्शनात्, अतः समाहाररूपं गुरुत्वमौपाधिकमित्यर्थः। ननु गुरुत्वमेक-(C)[5]मनेकवृत्ति[5]* द्रव्यसमाहारमात्रादाधिक्योपपत्तेः, [6]इति चेत्—न, व्यासज्यवृत्तित्वानङ्गीकारात्[6]*। 'एकावयविनिष्ठम्' एकद्रव्यनिष्ठम्, अवयविपदेन द्रव्यस्य विवक्षितत्वात्, अन्यथा परमाणुगुरुत्वसंग्रहो न [7]स्यात्। तथा च एकद्रव्य[8]निष्ठमेव[8]* गुरुत्वम्, द्रव्याणामनेकेषां समाहाराद् गुरुत्वमपि समाहृतमिव दृश्यते इति ॥३३॥

---

(A) 'इच्छाऽपि' इत्यादिः 'साधनविषयश्चे'त्यन्तो ग्रन्थः क-पुस्तकेऽसार्वत्रिकतया उल्लिखितः।

(B) कलञ्जः विषदिग्धमांसादिः। ताम्रकूटमिति केचित्।

(C) अनेकवृत्तीति द्वित्वादिवदिति भावः।

---

1. 'अन्येषां' ख। 2. अतः परं क-पुस्तके 'सुखविषयिणीच्छा साध्यविषया' इत्यंशोऽसार्वत्रिकतया गृहीतः। 3. 'कलिङ्गलक्षणादि' ख, 'कलञ्ज' इत्यतः परं '( दग्धान्न )' इत्याकारः क-पुस्तके दृश्यते। 4. 'स' क। 5. '-मनेकद्रव्यवृत्ति-' ख। 6. 'न व्यासज्यवृत्तित्वाङ्गीकारः' क। 7. 'स्यादिति' ख। 8. '-निष्ठ' क।

**द्रवत्वं सांसिद्धिकं नैमित्तिकं च ॥३४॥**

**स्नेहः स्वाभाविक औपाधिकश्चेति ॥३५॥**

**संस्कारो वेगो भावना (A)स्थितिस्थापकश्च ॥३६॥**

**धर्मः प्रवर्तको निवर्तकश्च । अधर्मः फलावसानो नमस्कारादि-नाश्यश्च ॥३७॥**

---

सांसिद्धिकं स्वभाव[1]सिद्धम्, द्रव्योत्पत्तिसमनन्तरमेवोत्पन्नमिति यावत्। तच्च जलनिष्ठम्। नैमि[2]त्तिकम् अग्निसंयोगाज्जायमानं घृतादिपार्थिवनिष्ठं सुवर्णादितैजस-निष्ठं च ॥३४॥

स्वाभाविको जले, औपाधिकस्तैलादौ, जलसम्ब[3]न्धेन प्रतीयमानत्वात् ॥३५॥

वेगः [4]शरादौ। भावना अनुभव[5]जन्या स्मृतिजनिका आत्म[5]*निष्ठा। [6]स्थित-स्थापकः, स्थितस्य पूर्वं विद्यमानस्यावस्थाविशेषस्य स्थापकः, यथा [7]कटादौ वेष्टन-क्रियादिजनकः ॥३६॥

[8]धर्मो द्विविधः[8]*। य इष्टे पुरुषं प्रवर्तयति स प्रवर्तकः (यः) [9]अनिष्टान्निवर्तयति स निवर्तकः। [10]अधर्मो द्विविधः[10]। [11]फलम्(B) अवसानम् अन्तो यस्य स तथा, अकृत-प्रायश्चित्तस्य कर्मणो भोगादेव क्षयात्। नमस्कारेण मङ्गलमुच्यते, तेन प्रतिबन्धक-दुरितरूपाधर्मनाशः। आदिपदात् प्राय[12]श्चित्तादि गृह्यते। कृते प्रायश्चित्ते (C)ब्रह्म-हत्यादिरधर्मो [13]नश्यति ॥३७॥

---

(A) यद्यपि टीकाग्रन्थानुसारेण 'स्थितस्थापक' इत्येवं ग्रहीतुमुचितं तथाऽपि प्रसिद्धिवशात् स्थितिस्थापक इत्येवं मुद्रापितम्, स्थितं स्थितिः, भावे क्तः, तदस्यास्तीति स्थिती स्थित इत्यर्थः। तथा च एतादृशपाठेऽपि टीकाकृता प्रदर्शिता व्युत्पत्तिः सङ्गच्छते इति विभावनीयम्।

(B) फलं दुःखभोगः, अवसानं नाशकमिति यावत्।

(C) ध्वंसविशेषरूपाया ब्रह्महत्याया नाशासम्भवात् प्रकृतानुपयोगाच्च ब्रह्महत्यापदमत्र तज्जन्यादृष्टविशेषपरम्। स एव च अधर्म इति भावः।

---

1. '-सिद्धत्र-' क। 2. '-त्तिक-सं-' ख। 3. '-न्धनात प्र-' क। 4. 'शरीरादौ' क। 5. '-जन्य-स्मृतिजनकात्म-' ख। 6. नास्ति क। 7. 'कराटकादौ' ख। 8. अयमंशः क-पुस्तके असार्वत्रिकतया उक्तः। 9. 'अनिष्टाच्च' ख। 10. इदं क-पुस्तके असार्वत्रिकतयोक्तम्। 11. 'दुःखफलम्' क। 12. '-श्चित्त' ख। 13. 'नाश्यते' क।

**शब्दो वर्णात्मकोऽवर्णात्मकश्च ॥३८॥**

**अत्र गन्ध-संयोग-विभाग-परत्वापरत्व-सुख-दुःख-द्वेष-संस्कार-धर्माधर्म-शब्दा (A)अनित्यैकरूपाः, अन्ये तु नित्यानित्यरूपाः। संयोगादिशब्दान्तास्तु अव्यापका एव। बुद्धीच्छा-प्रयत्ना उभयरूपाः। अन्ये स्वाश्रयव्यापकाः ॥३९॥**

**उत्क्षेपणादयो विहितनिषिद्धोदासीनरूपाः ॥४०॥**

शब्दो द्विविधः। वर्णात्मको गकारादिः। अवर्णात्मको मृदङ्गध्वन्यादिः ॥३८॥

गुणानामनि[1]त्यत्वादिरूपेणापरं विभागमाह—अत्रेति। अन्ये इति, रूप-रस-[2]स्पर्श-संख्यैकत्वपरिमाणैकत्व-पृथक्त्व-*-गुरुत्व-द्रवत्व-स्नेहाः परमाणुगता नित्याः(B), कार्यगता अनित्याः। बुद्धीच्छाप्रयत्ना ईश्वरगता नित्याः, क्षेत्रज्ञगता अनित्या इत्यर्थः। प्रकारान्तरेणापि तेषां विभागमाह—संयोगेति। उभयरूपा इति, ईश्वरे व्यापका अनीश्वरात्मनि अव्यापका इत्यर्थः। अन्ये रूपादयः [3]स्वाश्रयव्यापकाः स्वाधारमभिव्याप्य वर्तन्ते इत्यर्थः ॥३९॥

(C)विहितान्युत्क्षेपणादीनि, [4]अर्थप्रक्षेपादयः, निषिद्धानि सूत्रक्षेपादीनि। उदासीनानि [5]अवक्षेपादीनि ॥४०॥

(A) इह यद्यपि क-पुस्तके 'शब्दाः' इत्यतः परम् 'अनित्यैकरूपा' इत्यादिः 'शब्दान्तास्तु' इत्यन्तो ग्रन्थस्तथा 'अव्यापकाः' इत्यतः परम् 'एव' शब्दो मूले न मुद्रापितः तथाऽपि पाठान्तररूपेण गृहीतः, एवं टीकाऽपि तदनुसारिणीति मूल एवास्माभिर्गृहीतः। एवं पाठान्तरे 'शब्दा नित्यैकरूपा' इत्याकारो दृश्यमानोऽपि अर्थसङ्गत्यनुरोधेन 'अ'कारमात्र-प्रक्षेपेण परिवर्त्तित इति बोध्यम्।

(B) नित्या इति अत्रायं विशेषः, पार्थिवपरमाणौ रूपरसस्पर्शानामप्यनित्यत्वमिति।

(C) अत्र टीकाकृता कीदृशं प्रमाणमवलम्ब्य उत्क्षेपण-सूत्रक्षेपणावक्षेपणादीनां विहित-निषिद्धोदासीनत्वान्युक्तानि, अर्थप्रक्षेपादय इत्यस्य कुत्रान्वयः, तस्य सूत्रक्षेपपदस्य च कोऽर्थ इति सर्वमनुसन्धेयम्।

1. '-त्यत्वरू-' ख। 2. '-स्पर्शाः संख्यैकत्वं परिमाण-पृथक्त्व-' क। 3. 'आश्रय-' क। 4. 'अर्थ्यप्र-' ख। 5. 'ग्राव-चं-' ख।

**सामान्यं जातिरूपमुपाधिरूपं च। जाति[रूपं](A)सत्ताद्रव्य-गुण-कर्मत्वादि। उपाधिरूपं पाचकत्वादि ॥४१॥**

**प्रागभावादयः प्रतियोगिभेदादनन्ता एव ॥४२॥**

**मध्यत्वं परत्वापरत्वाभावः ॥४३॥**

**अन्धकारोऽप्यभावः ॥४४॥**

सामान्यस्यानुक्तविभागमाह—सामान्यमिति। तत्र सत्ता जातिः परैव व्यापकत्वात्, द्रव्यत्वादीनि घटत्वाद्यपेक्षया पराणि, गुणत्वादीनि नीलत्वाद्यपेक्षया पराणि, कर्मत्वादीनि स्वावान्तरजात्यपेक्षया पराणि, सत्तापेक्षया एतान्यपराणि। [1]ततो द्रव्यत्वादीनि परापररूपाणि[1]* घटत्वादीन्यपराण्येव [2]तद्व्याप्याभावात्[2]* अतः सत्तादीनि जातिरूपाणीत्यर्थः। कर्मत्वादीत्यादिपदात् पृथ्वीत्वादि गृह्यते। पाकादिक्रिया-सम्बन्धात् पाचकत्वादि औपाधिकमित्यर्थः ॥४१॥

प्रागभावादीनां विभागाभावे हेतुमाह—प्रतियोगीति। प्रतियोगिनामनन्तत्वात् प्रागभावादयोऽप्यनन्ता [3]एव ॥४२॥

ननु मध्यत्वं नाम पदार्थान्तरं कुतो नोद्दिष्ट[4]मत आह—मध्यत्वमिति। (B)[5]सन्निकृष्टत्वविप्रकृष्टत्वयोः[5]*परापरबुद्धिकरणयो[6]रभावे मध्यत्वबुद्धे[6]*र्जायमानत्वात्, तस्याभावेऽन्तर्भाव इत्यर्थः ॥४३॥

नन्वन्धकारः पदार्थान्तरं [7]वरीवर्त्तीति। [8]स तावत् न[8]* गुणादिषट्कं रूपवत्त्वात्

(A) सत्तेति। द्रव्यं च गुणश्च कर्म च तेषां भावा द्रव्यगुणकर्मत्वानि, द्वन्द्वात् परमित्यादि-न्यायाद् द्रव्यत्वगुणत्वकर्मत्वानीति तदर्थः। ततः सत्ता च द्रव्यगुणकर्मत्वानि च इति द्वन्द्व-स्ततो बहुव्रीहिः।

(B) यद्यपि क-पुस्तके 'अभावमध्यबुद्धे'रिति 'अभावत्वबुद्धे'रिति च पाठान्तरद्वयमुल्लिख्य तत्रासङ्गतिभिया 'सन्निकृष्टविप्रकृष्टयोः परापरबुद्धिकरणयोरभाववत्त्वबुद्धेर्जायमानत्वा'दिति पाठः सङ्गततया परिगृहीतस्तथाऽपि नासौ मनोरम इति ख-पुस्तकपाठ एव किञ्चित् परिवर्त्यास्माभि-र्गृहीतः। तथा चायं भावः—मध्यत्वबुद्धिर्हि सन्निकृष्टतरवस्त्वन्तरापेक्षया असन्निहिते विप्रकृष्टतर-वस्त्वन्तरापेक्षया चाविप्रकृष्टभूत एव वस्तुनि जायते एवं च अभ्युपगतपरत्वापरत्वा-भावयोरेव मध्यत्वधर्मकल्पनोचिता इति।

1. इदं क-पुस्तके नास्ति। 2. इदं क-पुस्तके नास्ति। 3. 'इत्यर्थः' ख। 4. '-मित्यत' ख। 5. 'सन्निकृष्टविप्रकृष्टयोः' क। 6. '-रभावे मध्यत्वं बुद्धे-' ख। 7. 'वर्त्तीति' क। 8. 'न तावत्' ख।

क्रियावत्त्वाच्च(A) गुणादीनां तदभावात्। तदुक्तं प्रशस्तपादभाष्ये—गुणादीनां निर्गुणत्वनिष्क्रियत्वे इति। नाप्याकाशादिपञ्चकं तत एव[1]। नापि पृथिव्यादिचतुष्टयं स्पर्शरहितत्वात्। न च अनुद्भूतस्पर्शः कल्प्यः, कल्पकाभावात्। न च रूपवत्त्वमेव कल्पकम्, रूपवतः पृथ्वीत्वादिजातीयस्य(B) [2]उद्भूतस्पर्शवत्त्वनियमात् तमसि च क्वापि स्पर्शाननुभवात् (C)अननुभूत[2]*स्पर्शस्य (D)अनुद्भूतत्वकल्पनाऽयोगात्, तस्माद् दशमं द्रव्यमन्धकारः स कुतो नोद्दिष्ट इत्यत आह—अन्धकारोऽपीति। अयमाशयः—यद्यन्धकारो भावरूपः स्यात् तदा आलोकनिरपेक्षचक्षुर्ग्राह्यो न स्यात् (E)न च तेजसस्तेजोऽन्तरानपेक्षत्वेऽपि चाक्षुषत्वात् तत्र व्यभिचारः, तत्राप्यवयविग्रहे चक्षुषा तदवयवापेक्षणात्। त्र्यणुके तदभाव इति चेत् तत्रापि जाला[3]न्तरसौरकिरणापेक्षणात्। अतो (F)यश्चाक्षुषो भावरूपः स आलोकनिरपेक्षचक्षुर्ग्राह्यो न भवति 'यथा घटादि[4]* इत्यापाद्यापादकयोर्व्याप्ति[5]ग्रहः। तस्मादालोकाभाव एवान्धकारः। प्रमाणं तु—अन्धकारः अभावः आलोकनिरपेक्षचक्षुर्ग्राह्यत्वात् आलोकाभाववत्। नन्व[6]भावत्वेऽपि घटाभाववद्[6]*

(A) क्रियावत्त्वाच्चेति, तदुक्तमभियुक्तैः—

'तमः खलु चलं नीलं परापरविभागवत्।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति॥' इति।
'तमस्तमालवर्णाभं चलतीति प्रतीयते।
रूपवत्त्वात् क्रियावत्त्वाद् द्रव्यं तद्दशमं तमः॥' इति च।

(B) पृथ्वीत्वादिजातीयस्येत्यतः परं क-पुस्तके दृश्यमानोऽपि 'क्वापि' इत्यंशः अन्वयबोधे निराकाङ्क्षतया परित्यक्तः।

(C) ननु रूपवत्त्वेन यदि तमसि स्पर्शवत्त्वं सिद्धम्, तदा तत्र स्पर्शस्यानुभवायोग्यत्वसम्पादकमनुद्भूतत्वमभिभवो वा कल्प्यतामित्यत आह अननुभूतस्पर्शस्येति।

(D) अनुभूतत्वकल्पनाऽयोगादिति क-पुस्तकपाठः प्रामादिकः। तत्रैव पाठान्तरतया धृतः अभिभूतत्वकल्पनाऽयोगादित्यपि विजातीयगुणान्तरेणाभिभवस्वीकारे कथञ्चित् सङ्गच्छते इति ध्येयम्।

(E) 'यो भावः स न आलोकनिरपेक्षचक्षुर्ग्राह्य' इति—व्याप्तिशरीरमिहाभिप्रेतमिति बोध्यम्।

(F) यश्चाक्षुषो भाव इति। अत्र आपादके चाक्षुषत्वोपादानात् 'यः चाक्षुषो भावः स

1. अतः परं ख-पुस्तके 'मनोव्याप्तिस्तु रूपत्वा(वत्त्वा ?)देव' इत्यधिकम्। 2. अयमंशः ख-पुस्तके नास्ति। 3. '-न्तरे सौर-' क। 4. नास्ति क। 5. '-ग्रहणम्' ख। 6. '-भावेऽपि घटाद्यभाववत्' ख।

शक्तिर्द्रव्यादिकस्वरूपमेव ॥४५॥

वैशिष्ट्यं तु विशेषणविशेष्यभावः सम्बन्ध एव ॥४६॥

आलोकनिरपेक्षचक्षुर्ग्राह्यत्वं न स्यादिति चेत् [1]न, अभावग्रहे प्रतियोगिसत्त्वस्यान[2]पेक्षत्वात्, (A)[3]प्रत्युत प्रतियोगिनि सति तदभावग्रह एव तत्र न स्यात्, न हि घटे सति तदभावो गृह्यते, अत आलोकस्यान्धकारप्रतियोगित्वात् (B)तदभावत्वेऽपि तमसश्चाक्षुषत्वं न दोषाय, रूपं तु इन्द्रनीलादिगतं [4]स्मर्यमाणम् आरोप्यते। शुक्लत्वाभाव आरोपे सादृश्यम्। क्रिया च दीपादिगता [5]गृह्यमाणा आरोप्यते। [6]अतस्ताभ्यां न [7]द्रव्यत्वसिद्धिः ॥४४॥

ननु शक्तिः पदार्थान्तरम्। तत्र प्रमाणम्—अयं वह्निर्दाहानुकूलातीन्द्रियाह्निनिष्ठधर्मसमवायी दाहजनकत्वात् यदेवं तदेवं यथा आत्मा। न च साध्यवैकल्यं दृष्टान्तस्य, एवंविधस्यादृष्टस्य तत्र समवायात्। स्थितिस्थापकोष्णस्पर्शादि-(C)[8]संयोगे सिद्धसाधनतावारणाय दाहानुकूलेत्यादि[9]विशेषणानि(D)। (E)अतीन्द्रियप्रतिबन्धकाभावेन सिद्धसाधनतावारणाय समवायीति। एवं मानसिद्धा शक्तिः कुतो नोद्दिष्टा [10]तत्राह—शक्तिरिति। वह्न्यादिकारणस्वरूपमेव न पदार्थान्तरमित्यर्थः। अनुमाने चात्मत्वमुपाधिः ॥४५॥

ननु अघटं भूतलमित्यादि विशिष्टज्ञानं विशेषणविशेष्यसम्बन्धजन्यं विशिष्टज्ञानत्वात्

आलोकसहकारेणैव चक्षुर्ग्राह्य इत्यत्र तात्पर्यं बोध्यम्, अन्यथा पौनरुक्त्यं हेतौ चाक्षुषत्वोपादानवैयर्थ्यं च स्यादिति विभावनीयम्।

(A) इतः पूर्वं क-पुस्तके दृश्यमानं वैपरीत्येनेति पदं 'प्रत्युत' पदस्यैव व्याख्यानं प्रमादात् टीकायामन्तर्भावितमिति धिया परित्यक्तम्।

(B) अत्र अर्थसङ्गत्यनुरोधेन 'तदभावेऽपि' इति क-पुस्तकपाठः परिवर्त्तितः।

(C) क-पुस्तके 'स्पर्शात्मादिसंयोगे' इत्युपेक्ष्य तत्रैव पाठान्तरतया धृत आत्मपदशून्यः पाठोऽत्र गृहीतः।

(D) तथा चात्र दाहानुकूलपदं स्थितिस्थापकेन, अतीन्द्रियपदमुष्णस्पर्शेन, अह्निनिष्ठपदं संयोगेन प्रसक्तं सिद्धसाधनतादोषं वारयतीति बोध्यम्।

(E) अतीन्द्रियेति, अतीन्द्रियो यः प्रतिबन्धकीभूतोऽभाव इत्यर्थः।

1. 'न' नास्ति क। 2. '-पेक्षितत्वात्' ख। 3. नास्ति ख। 4. नास्ति क। 5. नास्ति क। 6. 'तत-' ख। 7. 'द्रव्यसाधनसिद्धिः' ख। 8. 'संयोगैः' ख। 9. 'विशेषणानि' इति ख-पुस्तके नास्ति। 10. 'इत्यत आह' ख।

**ज्ञातता(A) ज्ञानविषयसम्बन्ध एव ॥४७॥**

**सादृश्यमुपाधिरूपं सामान्यम् ॥४८॥**

**लघुत्वं गुरुत्वाभावः ॥४९॥**

**एवमन्यस्यापि पदार्थस्य सतोऽत्रैवान्तर्भावः, यथा संख्याया एव गुणे(B) ॥५०॥**

---

दण्डीति ज्ञानवदिति परिशेषात् सम्बन्धत्वेन वैशिष्ट्यसिद्धिः, तत् कुतो नोक्त[1]मित्याह[1]* वैशिष्ट्यमिति। अघटं भूतलमित्यत्रापि स्वरूपसम्बन्धस्य विद्यमानत्वात् तेनैव सिद्ध-साधन[2]मनुमान[2]*मित्यर्थः (C)तत्रापि सम्बन्ध एव विशिष्टबुद्धिहेतुर्न तु विशेषणादयः सर्वेऽपि, तथा सति प्रत्येकं[3] विशिष्टबुद्धिप्रसङ्गात् इति ॥४६॥

ननु ज्ञातो घट इत्यादौ ज्ञानजन्यं घटादिविषयनिष्ठं ज्ञातताख्यं पदार्थान्तरमस्ति तद् वक्तव्यमत आह—ज्ञाततेति। ज्ञानविषययोः सम्बन्ध एव ज्ञातता, तदतिरिक्तत्वे मानाभावादित्यर्थः ॥४७॥

ननु गोसदृशो गवय इत्यादौ सादृश्यं पदार्थान्तरमस्ति, तदुद्देश्यमित्यत आह—सादृश्यमिति। गोसादृश्यं गोगतं शृङ्गित्वादि गवयगतं तच्चौपा[4]धिकं सामान्ये-नोद्दिष्टमेवेत्यर्थः[4]* ॥४८॥

[5]ननु लघुत्वं पदार्थान्तरमत आह—लघुत्वमिति ॥४९॥

ननु अन्ये [6]प्रमाणादयः पदार्थाः सन्ति ते[7] कुतो नोक्ता इत्यत आह—एवमिति, तेषामपि बुद्धिद्रव्यादौ यथायथमन्त[8]र्भावात् नाधिक्यमित्यर्थः। नन्वेवमन्तर्भावेऽप-

---

(A) ज्ञानजन्या ज्ञातता अतिरिक्तः पदार्थ इति मीमांसकाः।

(B) 'संख्याया इव गुणे' इति पाठान्तरं क-पुस्तके धृतम्। तत्र यथापदमप्यस्ति न वेत्यत्र सन्देहः। यथाश्रुते तु यथा संख्याया गुण एवान्तर्भावस्तथा अन्येषामिति अर्थः करणीयः।

(C) अत्रैतावता सम्बन्धस्यापि सतो वैशिष्ट्यस्य पृथगुद्देशाभावहेतुः क्लृप्तपदार्थेष्वन्तर्भावो न प्रतिपादित इति नाशङ्कनीयम्, स्वरूपपदस्य क्लृप्तस्वरूप इत्यभिप्रायात्। तस्य च स्वरूप-

---

1. '-मित्यत आह' ख। 2. चिह्नितांशो नास्ति ख। 3. '-त्येक-विशिष्ट-' क। 4. '-धिकसामान्यं तदुद्दिष्टमित्यर्थः' ख। 5. नास्ति ख। 6. 'प्रमाणप्रमेयादयः' ख। 7. नास्ति क। 8. '-र्भाव इति ना-' ख।

एतेषु मध्ये नित्यानां कारणत्वमेव। अनित्यानां कारणत्वं कार्यत्वं च। तच्च समवायिकारणम्, असमवायिकारणं निमित्तकारणं चेति त्रिविधं कारणम्। अपरे भेदाः स्वयमूहनीयाः ॥५१॥

एतेषां तत्त्वज्ञानं निःश्रेयसे हेतुः। तत्त्वमनारोपितं रूपम्, तस्य ज्ञानमनुभवः ॥५२॥

---

सिद्धान्त इत्याशङ्क्य सूत्रकृतोऽपि (सः) सम्मत इत्याह—यथेति। गुणगणनायां (A) रूपरसगन्ध[1]स्पर्शसंख्यापरिमाणानीति संख्याया गुणे अन्तर्भावः सूत्रकृता उक्तः, तद्वदपरेषामपीत्यर्थः ॥५०॥

कारणत्वकार्यत्वाभ्यां विभागमाह—एतेष्विति। 'नित्यानाम्' आकाशादीनाम्। 'अनित्यानाम्' द्व्यणुकादीनाम्। कारणं विभजते—तच्चेति। तच्च कारणं त्रिविधं त्रिप्रकारमित्यर्थः। समवायिकारणं तन्त्वादि। असमवायिकारणं तत्संयोगादि। निमित्तं कुविन्दादि।

ननु मनसा सह पृथिव्यादिचतुष्टयं मूर्त्तम् अन्यत् सर्वममूर्त्तम्, तेषामेव पञ्चानां क्रियावत्त्वमन्येषां निष्क्रियत्वमित्यादयो भेदाः कथं नोक्ता इत्यत आह—अपरे इति ॥५१॥

एवं द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतुरिति (B)सूत्रोक्तपदार्थानुद्दिश्य तत्क्षेपं व्याकरोति—एतेषामिति, उक्तानां पदार्थानामित्यर्थः। तत्त्वपदस्य [2]रूढ्यर्थमाह—तत्त्वमिति। [3]आरोपितशुक्तिरजतादावतिव्याप्तिवारणाय अनारोपितमिति [4]विशेषणम्[4]*; तस्याऽऽरोपितत्वात् नातिव्याप्तिः। ज्ञानपदस्य अनुभवपरतामाह—तस्येति ॥५२॥

---

त्वेन संसर्गता द्रव्यत्वादिना च संसर्गिता, संयोगसमवायातिरिक्तसम्बन्धानामनयैव रीत्या अन्तर्भावस्य एतैरभ्युपगमादिति ध्येयम्।

(A) 'रूप-रस-गन्ध-स्पर्शाः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः'' इति काणादं सूत्रम्। ( सू० ६, आ १. अ १. )

(B) 'धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्' इति काणादं सूत्रम्। ( सू ४, आ १, अ १, )

---

1. '-स्पर्शाः परि-' ख। 2. 'रूढ्मर्थ-' ख। 3. 'आरोपिते शुक्ति-' ख। 4. इदं नास्ति क।

स च श्रवण-मनन-निदिध्यासन-साक्षात्कारलक्षणचतुर्विधः ॥५३॥

निःश्रेयसं पुनस्तत्त्वज्ञानोत्पाद्यमिथ्याज्ञानकारणप्रध्वंससमानाधिकरणतत्कार्यसमस्तदुःखाभावः ॥५४॥

तत्त्वान्तरभेदमाह—स चेति, अनुभव इत्यर्थः। श्रुतिस्मृतीतिहासपुराणेषु शब्दतात्पर्यावधारणं श्रवणम्। असम्भावना-विपरीतभावनानिरासेन युक्तिभिरनुचिन्तनं मननम्। श्रुतस्य मतस्य तथैव ध्यानं निदिध्यासनम्। इदमित्थमेवेति अपरोक्षज्ञानं साक्षात्कारः। एते लक्षणं स्वरूपं यस्यानुभवस्य स तथा ॥५३॥

निःश्रेयसपदार्थमाह—निःश्रेयसं पुनरिति। समस्तानां दुःखानामभावः समस्तदुःखाभावः, तस्य मिथ्याज्ञानस्य कार्याणि तत्कार्याणीति दुःखविशेषणम्। मिथ्याज्ञानं [1]च तदेव कारणं [2]चेति मिथ्याज्ञानकारणम्, तस्य प्रध्वंसः तेन [3]समानम् अधिकरणम् आधारो[3]* यस्य तत्कार्यसमस्तदुःखाभावस्य स तथा। तत्त्व[4]ज्ञानोत्पाद्य[5]*श्चासौ मिथ्याज्ञानकारणप्रध्वंससमानाधिकरणतत्कार्यसमस्तदुःखाभावश्चेति कर्मधारयः। तत्र तत्त्वज्ञानोत्पाद्यसमस्तदुःखाभाव इति निःश्रेयसपदार्थनिरूपणम्, इतरत्तु समस्तदुःखाभावसामग्रीकथनम्। (A)अभावो मोक्षः। तत्र घटा[6]भावे मोक्षत्ववारणाय [6]दुःखेति पदम्। अहिकण्टकादि[7]जन्यदुःखाभावस्य सुषुप्तौ वर्त्तमानदुःखाभावस्य [8]च मोक्षत्वं मा भूदिति समस्तेति पदम्। एवमपि वक्ष्यमाणशरीरादिसमस्तदुःखाभावो विद्यते प्रलये[9], तद्वारणाय तत्त्वज्ञानोत्पाद्येति। प्रलये तु शरीरादेरभावोऽदृष्टादिनिमित्तो न[10] तत्त्वज्ञानोत्पाद्य इति नातिव्याप्तिः।

ननु तत्त्वज्ञानस्य समस्तदुःखाभावोत्पादने किं द्वारमत आह—मिथ्याज्ञानकारणप्रध्वंसेति। तत्त्वज्ञानेन दुःखाभावे जननीये मिथ्याज्ञानप्रध्वंसोऽवान्तरव्यापार [11]इत्यर्थः। कार्यकारणपदाभ्यां मिथ्याज्ञानकारणप्रध्वंसे तत्[12]कार्यस्य मिथ्याज्ञानदुःखस्यावश्यं ध्वंसो भवतीति दर्शयति। देवदत्तमिथ्या[13]ज्ञानध्वंसे यज्ञदत्तसमस्तदुःखा-

(A) 'अभावो मोक्षः' इत्यंशः क-पुस्तकेऽसार्वत्रिकतयोल्लिखितः।

1. नास्ति क। 2. 'इति' पदं क-पुस्तके नास्ति। 3. 'समानाधिकरणम् आश्रयो' ख। 4. '-ज्ञानेनोत्पाद्य-' ख। 5. '-भावस्य' ख। 6. 'दुःखस्येति' ख। 7. '-जनितदुःखा-' ख। 8. नास्ति क। 9. '-लय इति तद्-' ख। 10. 'न च' ख। 11. नास्ति क। 12. '-कार्यमिथ्या-' क। 13. '-ज्ञानकारणध्वंसे' क।

भावो नास्तीति समानाधिकरणेत्युक्तम्। यस्मिन्नात्मनि मिथ्याज्ञानध्वंसः तस्मिन्नेव समस्तदुःखाभाव इत्यर्थः।

ननु कोऽयं समस्तदुःखाभावः? किं प्रागभाव उत प्रध्वंसाभाव 'आहोस्विदन्योन्याभावः किं वा अत्यन्ताभावः। नाद्यान्त्यौ, तयोरनुत्पत्तेरपुरुषार्थत्वात्; पुरुषकृत्युत्पाद्यो हि पुरुषार्थः। (A) किं च दुःखात्यन्ताभावस्य समस्तदुःखप्रागभावस्य च[2] आत्मन्यसम्भवाद् (B) बहूनां दुःखानां तत्र [3]निष्पन्नत्वात्(C)। नापि [4]अन्योन्याभावो मोक्षः संसारदशायामपि दुःखमात्मा न भवतीति [5]तदन्योन्याभावसद्भावेन मुक्तत्वप्रसङ्गात्। नापि दुःखध्वंसो मोक्षः, समस्तशब्देन शरीरादेर्विवक्षितत्वात्, तस्य चातीतस्य स्वत एव [6]ध्वंसेन तत्त्व[7]ज्ञानानपेक्षणात्, वर्त्तमानस्य पूर्ववत् तत्कारणादेव प्रध्वंससम्भवात् आगामिशरीरादेस्त्वनुत्पन्नत्वेन ध्वंसासम्भवात् आगामिशरीरा[8]दिकमुत्पाद्य ध्वंसे तत्त्वज्ञानस्यापि दुःखजनकत्वप्रसङ्गात्। तस्मात् समस्तदुःखाभावो मोक्षोऽनुपपन्न इति चेत्--

अत्रोच्यते—आगामिशरीराद्यनुत्पादरूपदुःखप्रागभाव एव मोक्षः। तत्त्वज्ञाने हि सति आगामिशरीरादिकं नोत्पाद्यते। न च तस्यानुत्पाद्यत्वेनापुरुषार्थत्वं (D)प्रायश्चित्तादिसाध्यदुःखानुत्पादवत् तस्यापि परिपालन[9]रूपसाध्यत्वसम्भवात्। तत्त्वज्ञाने हि सति दुःखकारणमिथ्या[10]ज्ञानध्वंसात् प्रागभावस्योत्तरकालसम्बन्धरूपपरिपालनं

---

(A) अतः परमादर्शपुस्तकयोर्दृश्यमानः 'प्रागभावात्यन्ताभावयोरनादित्वेनानुत्पाद्यत्वात्' इत्यंशः 'तयोरनुत्पत्तेरपुरुषार्थत्वा'दित्यत्रोक्तायामनुत्पत्तौ हेतुप्रदर्शनपरा टिप्पनी लिपिकृत्प्रमादेन टीकायामन्तर्भूतेति प्रतिभाति।

(B) आत्मन्यसम्भव इति प्रथमान्तपाठः समीचीनः।

(C) इदमत्राकूतम्—प्रतियोगिसमवायिव्यतिरिक्तस्थले त्रैकालिकनिषेधस्यात्यन्ताभावत्वं ब्रुवतां प्रतियोगिसमानदेशत्वमत्यन्ताभावस्य नैषां सम्मतमिति प्रागेव प्रतिपादितम्। तथा च कथमात्मनि दुःखात्यन्ताभावः। यानि च दुःखान्यात्मनि उत्पन्नानि तेषां प्रागभावव्यक्तयस्तु तैरेव नाशिताः प्रागभावानां प्रतियोगिनाश्यत्वादिति चिरनष्टप्रागभावव्यक्तिघटितस्य दुःखप्रागभावकूटस्यापि सत्त्वमात्मन्यसम्भावितमेवेति।

(D) ननु प्रायश्चित्तेन पूर्वोत्पन्नमेव पापं नाश्यते ततश्च कारणाभावाद् दुःखानुत्पाद इति

---

1. 'उतान्योन्या-' ख। 2. 'वा' ख। 3. 'निष्पद्यमानत्वात्' ख। 4. 'तदन्योन्या-' ख। 5. 'तत् सद्भावेन' क। 6. 'ध्वंसत्वेन' ख। 7. '-ज्ञानस्य क्षणात्' क। 8. '-दिकं तूत्पाद्य' ख। 9. '-रूपस्य स-' क। 10. '-ज्ञानादिध्वंसात्' ख।

सम्भवति। [1]तत्त्वज्ञानाभावे हि दुःखकारणेन प्रागभाव[2]नाशाद् (A) दुःखोत्पत्तिरेव भवति। अतोऽन्वयव्यतिरेकाभ्यां प्रागभावपरिपालनं साध्यमिति नापुरुषार्थत्वम्। न च समस्तदुःखप्रागभावासम्भवः समस्तपदेन शरीराद्येकविंशतिप्रकारस्य विवक्षितत्वात्, तस्य चागामिनः पूर्वमजातत्वेन प्रागभावसम्भवात्। न च प्रागभावस्य प्रतियोगिजनकतानियमात् मुक्तस्य [3]संसारितापसङ्ग इति [4]वक्तव्यम्, मोक्षशास्त्रविरोधेन मोक्षरूपप्रागभावव्यतिरिक्ते प्राग[5]भावे प्रतियोगिजनकत्वनियमस्य संकोचनात्, अन्यथा प्रायश्चित्तविधेरपि वैयर्थ्यापत्तिः, तद्विनाश्यपापजन्यदुःखप्रागभावस्यापि[6] (B) प्रतियोगिजनकत्वानियमात्। मोक्षशास्त्रं तु[7] (C) न स पुनरावर्त्तते (D)[8]इमं संसारं (?) मानवमावर्त्तं नावर्त्तन्ते[8]* इति च।

(E)यद्वा चरमशरीरादिदुःखध्वंसो मोक्षः। [9]चरमं शरीरादिकं च[10] तत्त्व[11]ज्ञानेन[11]* सञ्चितकर्मक्षयाय भोगार्थं (F) योगजसामर्थ्यगृहीतशरीरमध्ये यदन्तिमं तदेव, (G)इतरेषां

विषमो दृष्टान्त इति चेत् न, आदिपदेन सन्ध्योपासनायाः परिग्रहात्। तस्याश्च यथावदनुष्ठिताया आगामिप्रत्यवायोत्पत्तिप्रतिबन्धकतया दुःखानुत्पत्तिहेतुत्वम् अस्त्येव, तथा च स्मृतिः 'क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते। अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते' इति। एतेन अविनाशी प्रागभाव उक्तः। इदमेव च परिपालनरूपस्य क्षैमिकजन्यत्वस्योदाहरणं वदन्ति।

(A) प्रागभावस्य सामग्रीनाश्यत्वमिति मतेनेदम्।

(B) प्रतियोगिजनकत्वप्रसङ्गादिति युक्तः पाठः।

(C) 'तद्धैतद् ब्रह्म' इति प्रकृत्य पठ्यते 'स खल्वेवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते न च पुनरावर्त्तते' इति (छान्दोग्योपनिषत्, ८, १५, १,)।

(D) 'अथ यदु चैवास्मिन्' इति प्रकृत्य पठ्यते 'तत् पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते' (छान्दोग्योपनिषत्, ४,१५,५) इति। अत्र 'संसार'मिति 'आवर्त्त'पदस्य व्याख्यानं टीकायां प्रमादादन्तर्भूतमिति सम्भाव्यते।

(E) क्षैमिकजन्यत्वानङ्गीकारेऽपि प्रसिद्धं ध्वंसपक्षमाश्रित्याह—यद्वेति।

(F) अत्र 'तत्त्वज्ञानेन सञ्चितकर्मक्षये प्रारब्धकर्मणां क्षयाय भोगार्थम्' इति पाठः समीचीनतया प्रतिभाति।

(G) 'इतरेषां भोगार्थं स्वयमुत्पादितत्वेन चरमत्वाभावात्' इत्यंशो यद्यपि 'शरीरादिकं

1. 'तत्त्वज्ञाने हि' ख। 2. '-नाशात् मिथ्याज्ञानेन दुःखोत्-' ख। 3. 'सांसारिकता-' क। 4. 'वाच्यम्' ख। 5. '-भावे प्रागभावप्रति-' क। 6. 'अपि' नास्ति ख। 7. नास्ति ख। 8. 'इदं मानवमावर्त्तमावर्त्तते' ख। 9. 'चरमश-' ख। 10. नास्ति ख। 11. '-ज्ञाने सति' ख।

दुःखं तु शरीरं षडिन्द्रियाणि तद्विषयाः षड्(A) बुद्धयः सुखं दुःखं चेत्येकविंशतिप्रकारम् ॥ ५५ ॥

इत्युद्देशप्रकरणम् ।

भोगार्थं स्वयमुत्पादितत्वेन चरमत्वाभावात् । (B)अथवा [1]यच्छरीरे तत्त्वज्ञानमुत्पन्नं तदेव शरीरादिकं चरमम् ।

ननु तत्त्वज्ञानं विनाऽपि वर्त्त[2]मानशरीरादिध्वंसः पूर्व[3]वत सम्भवतीति चेत्—न, [4]तदा तस्य[4]* चरमत्वाभावात् । चरमदुःखध्वंसस्त्वन्वयव्यतिरेकाभ्यां [6]तत्त्वज्ञानजन्य एव[6]* । तथा हि तत्त्वज्ञानेन हि मिथ्याज्ञान[7]ध्वंसे तन्मूलरागद्वेषयोरभावात् तदधीन(C)धर्माधर्मसाधनप्रवृत्त्या[8]द्यभावे तद्धेतुकाप्रेतनजन्मादेरभावात् तन्निमित्त-दुःखस्याप्यभावः । तथा च तदेव तत्त्वज्ञानसमानकालीनशरीरादिकं चरमम् । एवं च तत्त्वज्ञानाभावादस्मदादेश्चरमदुःखध्वंसो नाद्याप्यजनि, येषां च[9] शुकादीनां शरीराद्य-नात्मव्यतिरिक्त आत्मेत्येवं साक्षात्काररूपस्तत्त्वावबोधः समभूत् तेषां चरमदुःख-ध्वंसोऽप्यजनिष्टे[10]त्यन्वयव्यतिरेकाभ्यां तस्य कारणता सिध्यति । अतो नात्र कश्चिद्दोषः । मोक्षसाधनं [11]च ज्ञानमेव, 'ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते' इति वचनात् । [12]न तु कर्म, न च[12]* ज्ञानकर्मसमुच्चयः [13]कर्मणां मिथ्याज्ञाननाशकत्वादर्शनात्, तन्नाशमन्तरेण मोक्षासम्भवात्, तत्त्वज्ञानस्य च[14] रज्जुसर्पभ्रमादौ मिथ्याज्ञाननाशकत्वदर्शनात् । न हि तत्र निकटोपसर्पणादिक्रियावतोऽपि रज्जुतत्त्वज्ञानं विना सर्पभ्रमो निवर्त्तते इति सर्वमवदातम् । ५४ ॥

किं तत् समस्तदुःखं यस्याभावो मोक्ष [15]इत्यत आह—दुःखमिति । शरीरं

चरमम्' इत्यतः परमादर्शपुस्तकयोः पठितस्तथाऽपि अर्थसङ्गत्यनुरोधादिह पठितः । एतेन काय-व्यूहनिर्माणमङ्गीकृतम् ।

(A) षडिति काकाक्षिगोलकन्यायेन तद्विषया बुद्धय इत्युभयत्रापि सम्बध्यते । बुद्धीनां चाक्षुषत्वादिभेदेन षड्विधत्वं बोध्यम् ।

(B) तत्त्वज्ञानिनामपि केषांचित् योगजसामर्थ्येन शरीराग्रहणादाह—अथवेति । शरीर-इत्यवच्छेदे सप्तमी ।

(C) अर्थसङ्गत्यनुरोधेन 'धर्माधर्मसाधने प्रवृत्त्याद्यभावे' इत्यादर्शपुस्तकपाठः परि-वर्त्तितः ।

1. 'यत्र शरीरे' ख । 2. '-मानस्वशरी-' ख । 3. '-वदेव स-' ख । 4. 'तदा तत्त्वज्ञाने सति तस्य' ख । 5. 'चरमध्वंस-' ख । 6. 'तत्त्वज्ञानस्य चरमशरीरादिध्वंसस्य कारणत्वस्यावधारणात्' ख । 7. '-ध्वंसे सति तन्मूल-' ख । 8. '-द्यभावात्' क । 9. नास्ति क । 10. '-ष्टेति तत्त्वज्ञान-स्यान्वय-' ख । 11. नास्ति क । 12. 'ननु कर्मवद्द न' क । 13. 'कर्मणि' क । 14. 'एव' क । 15. ख-पुस्तके 'इति' नास्ति ।

**इदानीं लक्षणाधीनत्वात् तत्त्वज्ञानस्य लक्षणमेवोच्यते । तत्र केवलव्यतिरेकी हेतुविशेषो लक्षणम् ॥ ५६ ॥**

---

प्रसिद्धम् । षडिन्द्रियाणि घ्राण-रसन-चक्षुः-श्रोत्र-त्वङ्-मनांसि । तद्ग्राह्या विषयाः षड् गन्ध-रस-रूप-शब्द-स्पर्श-सुखादयः[1](A) । [2]तद्विषयज्ञानानि[2]* षड् बुद्धयः । सुखं दुःखं च प्रसिद्धम् । तत्र शरीरादीनां दुःखसाधनत्वात् , सुखस्य (च) दुःख[3]सम्भिन्नत्वाद् दुःखत्वम्[3]* । दुःखं च[4] मुख्यमेव [5]दुःखमिति दुःखविवेकः ॥ ५५ ॥

[6]माधवाख्यसरस्वत्या[6]* रचिता मितभाषिणी ।
तत्रोद्देशप्रकरणं व्याख्यागोचरतामियात् ॥

---

एवं सूत्रशेषं व्याख्याय इदानीमुत्तरग्रन्थसङ्गतिमाह—इदानीमिति । एवकारेण परीक्षाव्युदासः । लक्षणमेवोच्यते इति, अत्र हेतुमाह—लक्षणेति । लक्षणेन विना पदार्थानामितरेतर[7]व्यावृत्तिरूपतत्त्वज्ञानस्याभावात् आत्मानात्मविवेका[8]सम्भवात् तदर्थं लक्षणमेवोच्यते इत्यर्थः । लक्षणम् [9]एव अधीनं निमित्तं यस्य तस्य भावस्तत्त्वं तस्मादिति विग्रहः । लक्षणज्ञानाय तल्लक्षणमाह—तत्रेति । न चैवमनवस्था, तस्य [10]लक्षणस्य [11]लक्षणान्तराधीनत्वादिति वाच्यम्, इद[12]मेव लक्षणं सर्वस्यापि लक्षणस्य ज्ञानं कुर्वत् स्वस्यापि लक्षणत्वेन सर्वान्तःपातात् स्वज्ञानमपि जनयति (B)अभिधेयप्रमेयादिपदवत् , न तु [13]स्वज्ञानाय लक्षणान्तरमपेक्ष्यते येनानवस्था स्यात् । तथाऽप्यात्माश्रय इति चेत्—न, अव्यवधानेन स्वेनैव स्वज्ञानमात्माश्रयः(C) । अत्र सर्वलक्षणद्वारा स्वस्यापि ज्ञानं जनयतीति [14]व्यवधानात् न दोषः[14]* । तस्मात् लक्षणज्ञानाय लक्षणं वाच्यमिति, तदुच्यते—[15]तत्रेति । तत्र लक्षणानां मध्ये[16] । विशेषपदार्थेऽतिव्याप्तिवारणाय हेत्विति । अन्वयिनि तद्वारणाय व्यतिरेकीति । [17]अन्वयव्यति-

---

(A) अत्र सुखादय इत्यनेन सुखसाधनानामिच्छादीनां परिग्रहः ।

(B) अत्रादर्शपुस्तकयोः सुपठं 'स्वाध्याय'पदं परित्यज्यार्थसङ्गत्यनुरोधेन ख-पुस्तकपत्रैकदेशे लिखितेन अविस्पष्टः 'अभिधेय'पदेन घटितः पाठो गृहीतः ।

(C) स्वग्रहसापेक्षग्रहकत्वमात्माश्रय इति प्राञ्चः ।

---

1. '-दीनि' ख । 2. 'तज्ज्ञानादि' क । 3. '-सम्भिन्नत्वादौपचारिकं तेषां दुःखत्वम्' ख । 4. 'तु' ख । 5. क-पुस्तके 'दुःखम्' इति नास्ति । 6. 'या माधवसरस्वत्या' ख । 7. '-व्यावृत्तिव्यवहाररूप-' ख । 8. '-भावात्' ख । 9. नास्ति क । 10. 'लक्षणज्ञानस्य' क । 11. 'लक्षणाभिधानादिति' ख । 12. '-मेवैकं' ख । 13. 'स्वलक्षणज्ञानाय' क । 14. 'व्यवधानेन स्वज्ञानजनकत्वमिति नात्माश्रयताऽपि' ख । 15. नास्ति ख । 16. 'मध्ये इत्यर्थः' ख । 17. 'एवमपि अन्वय-' ख ।

प्रयोगस्तु—लक्षणमितरेभ्यो भिद्यते (A)केवलव्यतिरेकि-हेतुविशेषत्वात्, यदितरेभ्यो न भिद्यते तत् केवलव्यतिरेकिहेतु-विशेषोऽपि न भवति यथा धूमवत्त्वम्, तथा चेदं केवलव्यतिरेकि-हेतुविशेषो न भवतीति न, तस्मादितरेभ्यो न भिद्यत इति न, किं तु भिद्यत एव ॥ ५७ ॥

---

रेकिणि [1]तद्वारणाय केवलेति। जीवच्छरीरं सात्मकं प्राणादिमत्त्वादित्यादौ तद्वारणाय विशेषपदम्। केवलव्यति[2]रेकिहेतु[3]*विशेषत्वम् "असाधारणधर्मत्वम्"* ॥ ५६ ॥

[4]ननु केवलव्यतिरेकी पञ्चावयवोपपन्नः, लक्षणस्य तदभावात् कथं तत्त्वमित्याशङ्क्यानुमानं रचयति—प्रयोगस्त्विति। लक्षणं पक्षः, इतरेभ्यो भिद्यते इति साध्यम्, लक्षणव्यतिरिक्तसकलप्रतियोगिकान्योन्याभाववदित्यर्थः। व्यतिरेकव्याप्तिमाह—यदिति। धूमवत्त्वस्येतरमध्यपतितत्वात् लक्षणनिष्ठभेदप्रतियोगित्वं न तु भेदाधारत्वम्, अत इतरेभ्यो न भिद्यते इति साध्याभावोऽस्ति हेत्वभावोऽप्यस्तीति व्यतिरेकदृष्टान्तत्वं धूमवत्त्वस्य। व्यतिरेकव्याप्तेर्हेतोः पक्षनिष्ठत्वलक्षणं व्यतिरेकोपनयमाह—[5](B)न च तथेदमिति,[5]* (C)किं तु भवत्येवेत्यर्थः। प्रतिज्ञातार्थविपरीतनिरासफलकं निगमनमाह—तस्मा[6]दिति हेतुमत्त्वादित्यर्थः ॥ ५७ ॥

---

(A) 'केवलव्यतिरेकिहेतुविशेषवचनत्वा'दिति आदर्शपुस्तकपाठोऽर्थासङ्गतिभयेनोपेक्षितः। एवमुत्तरत्रापि 'विशेष'पदद्वयोत्तरं 'वचन'पदद्वयं त्यक्तम्। लिपिकृत्प्रमादबुद्धिरेव तूपेक्षाबीजम्।

(B) अत्र ख-पुस्तकपाठो गृहीतः। तदुपजीव्यमूलादर्शे तु 'तस्मा'दित्यतः पूर्वं पठितो 'न'कार इह योजित इत्येतेनानुमीयते व्यतिरेक्युपनयस्य 'न च तथेद'मित्याकारो युक्तः अन्वय्युपनयस्य 'तथाऽय'मित्याकारकतायाः प्राचीनसम्मतत्वात्। अत एवोक्तमवयवग्रन्थे दीधितिकृता 'तथाऽयमित्याकारकः सुवच एव प्राचामुपनयः' इति। 'न भवतीति' इत्याकारक-क-पुस्तकपाठे तु मध्यभागग्रहणं टीकाकारशैलीविरुद्धमिति दोषः स्फुरतीति बोध्यम्।

(C) 'किं तु भवत्येवे'ति उपनयवाक्यस्थनञ्द्वयस्य फलितार्थकथनम्। एतेन मूले मुद्रितः 'किं तु भिद्यत एव' इत्यंशोऽपि टीकाग्रन्थ एव प्रमादान्मूले अन्तर्भावित इत्याशङ्क्यते।

---

1. 'तद्' इति नास्ति क। 2. '-रेकिणि हेतौ' ख। 3. 'असाधारणधर्मवचनत्वम्' ख। 4. इदं ख-पुस्तके नास्ति। 5. 'न भवतीतीति' क। 6. '-दिति तस्मात् हेतु-' क।

एवं सर्वत्र लक्षणे प्रयोगो द्रष्टव्यः। तत्र पदार्थसामान्यलक्षणं कृतमेव ॥ ५८ ॥

द्रव्यं तु—द्रव्यत्वसामान्ययोगि गुणवत् समवायिकारणं चेति ॥ ५९ ॥

---

सर्वेषु लक्षणेष्वितरभेदसाधनप्रकार एवमेवे[1]त्यतिदिशति—एवमिति। यस्य यद् लक्षणं [2]तदेव हेतुं विधाय लक्ष्यमेव पक्षं कृत्वा इतरभेदसाधनं व्यतिरेकिणा कर्त्तव्यमित्यर्थः। सामान्यलक्षणं विना विशेषलक्षणासम्भवमाशङ्क्य उक्तं स्मारयति—तत्रेति। तत्र लक्षणे वक्तव्ये सति सामान्यलक्षणं कृतमित्यन्वयः। यद्यपि प्रमितिविषयत्वं न पदार्थसामान्यलक्षणं तस्य केवलान्वयित्वेन केवलव्यतिरेकिहेतुविशेषरूपत्वाभावात्, तथाऽपि लक्षणशब्देनात्र पदार्थमात्रवृत्तिधर्मो गौण्या वृत्त्या विवक्षितः। [3]गुणस्तु तन्मात्रवृत्तित्वम्। लक्षणं [4]हि लक्ष्यमात्रे वर्त्तते, प्रमितिविषयत्वमपि पदार्थमात्रे वर्त्तते, अतो गुणयोगात् लक्षणपदं पदार्थशब्दप्रवृत्तिनिमित्ते प्रमितिविषयत्वे वर्त्तते इति द्रष्टव्यम्। ग्रन्थकारोक्तस्यापि मुख्यत्वासम्भवे गौणत्वमाश्रयणीयमेवेति लक्षणशब्दो गौणः प्रयुक्तोऽत्रेति द्रष्टव्यम् ॥ ५८ ॥

इदानीं द्रव्यादीनां क्रमेण लक्षणान्याह—[5]द्रव्यमित्यादिना। सामान्ययोगित्वं गुणादावतिव्यापकमिति द्रव्यत्वेति। ननु द्रव्यत्वं भावरूपं नास्त्येव, "[6]अद्रव्यापोहेनैव"* सकलद्रव्यानुगतेन द्रव्यमिति व्यवहारोपपत्तेरिति वदन्तं बौद्धं निराकर्त्तुं [7]सामान्यपदम्(A)।

[8]अयमत्राशयः—अद्रव्यापोहस्य द्रव्यनिरूप्यत्वात् प्रथमं द्रव्यव्यवहारो वक्तव्यः, स चानुगतद्रव्यत्वसामान्यं विना न सम्भवतीति तत् प्रथममभ्युपेयम्, अन्यथा"[9]ऽद्रव्यत्वज्ञाने सति"* तदपोहेन द्रव्यानुगत-(द्रव्यमित्यनुगत ?)व्यवहारः (B)द्रव्यव्यवहारे च

---

(A) उक्तमिति शेषः।

(B) अत्र 'द्रव्यव्यवहारे च द्रव्यज्ञाननिरूप्याद्रव्यापोहज्ञान'मिति पाठः समीचीनतया प्रतिभाति। द्रव्यव्यवहारे द्रव्यज्ञाननिरूप्यस्याद्रव्यापोहस्य ज्ञानमपेक्षणीयम्, तद्द्रव्यवहारस्तादृशज्ञानं विना नेति अन्योन्याश्रय इत्यर्थः।

---

1. '-त्यादिशति' ख। 2. 'तमेव' क। 3. 'गुणश्च तावन्मात्र-' ख। 4. 'च' ख। 5. 'द्रव्या त्वादिना' ख। 6. 'अद्रव्यव्यावृत्त्यैव' ख। 7. 'सामान्येति पदम्' क। 8. 'अयमाशयः' ख। 9. 'द्रव्यत्वज्ञाने' क।

**गुणस्तु गुणत्वजातियोगी, जातिमत्त्वे सत्यचलनात्मकत्वे सति समवायिकारणरहितश्चेति ॥ ६० ॥**

---

सति [1]द्रव्यज्ञाननिरूप्यद्रव्यापोहज्ञानमिति[1]* इतरेतरा[2]श्रयप्रसङ्ग इति। एतत् सर्वं समानानां भावः सामान्य[3]मिति पदव्युत्पत्त्यैव सूचितम्। एवमग्रेऽपि सामान्यपद-मपोहवादनिरासायेति द्रष्टव्यम्। तदपि सामान्यपदं जातिपरम्। तेन द्रव्यत्वं जातिर्नास्ति व्यञ्जकाभावादिति वदन् प्राभा[4]करो निरस्तो वेदितव्य इति सूचयन् द्रव्यत्वजातिव्यञ्जकमाह— गुणवत् समवायिकारणं [5]चेतीति[5]*। जात्यनाधाराद् व्यावृत्तस्तदाधारगतो धर्मो व्यञ्जकः, यथा गोत्वस्य सास्नादिमत्त्वम्, तथा गुणवत्त्वं [6]समवायिकारणत्वं[6]* च द्रव्यत्वस्य व्यञ्जकम्। यत्र यत्र गुणवत्त्वं तत्र तत्र द्रव्यत्वमित्युपदेशसहकृतेन प्रत्यक्षेण [7]रजतवद् द्रव्यत्वं प्रतीयते इत्यर्थः।

यद्वा एतदपि लक्षणद्वयमेव। न चोत्पन्ने द्रव्ये क्षण[8]मात्रं गुणरहिते गुणवत्त्व-मव्यापकमिति [9]वाच्यं कदाचिद् गुणवत्त्वस्य लक्षणत्वात्। यद्वा गुणात्यन्ताभाव-विरोधिमत्त्वं गुणवत्त्वं विवक्षितम्। गुणात्यन्ताभावविरोधिनश्च गुण-तत्प्राग[10]भाव-तत्प्रध्वंसाभावाः, तद्वत्त्वं लक्षणार्थः। तथा च उत्पत्तिसमयेऽपि गुणप्रागभावो-ऽस्तीत्यतो नाव्याप्तिरित्यर्थः। एवं समवायिकारणेऽपि द्रष्टव्यम्। न चातिव्यापक-मुभयं [11]गुणादौ तदभावात्[11]* ॥ ५९ ॥

गुणत्वजातेर्व्यञ्जकमाह—जातिमत्त्वे इति। जातिमदचलनात्मकासमवायिकारणत्वं गुणत्वजातिव्यञ्जकमित्यर्थः। यद्वा लक्षणान्तरम्। जातिरस्यास्तीति जातिमान्, तस्य भावः तत्त्वम्, तस्मिन् सति, चलनं कर्म तदात्मकं न भवतीत्यचलना[12]त्मकत्वे सति[12]* समवायि[13]कारणम् समवायिकारणत्वम्, [14]धर्मिणा धर्मोऽपि लक्ष्यते, तद्रहित इत्यर्थः। (A)गगनारविन्देऽतिव्याप्तिवारणाय समवायीति। गगनारविन्दं कारणमेव न भवति, गुणस्तु कारणं भवति, समवायिकारणं [15]तु न भवतीत्यर्थः।

---

(A) गगनारविन्दे व्यावृत्तिप्रदर्शनात् तत्र जातिमत्त्वमिति प्रथमदलम् अचलनात्मकमिति द्वितीयदलं चास्तीति एतन्मताभिप्रायः प्रतीयते। गगनारविन्दस्यालीकस्यापि ज्ञानम् 'अत्यन्ता-सत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इत्यादिना प्राचीनै-रुक्तमिति बोध्यम्।

---

1. 'द्रव्यनिरूप्याद्रव्यज्ञानमिति' ख। 2. '-श्रयत्वमिति' क। 3. '-मिति व्युत्-' ख। 4. '-करोऽपि नि-' ख। 5. 'चेति' ख। 6. नास्ति ख। 7. 'रजतवत्' ख। 8. '-मात्रगुण-' ख। 9. 'वक्तव्यम्' ख। 10. '-भाव-प्र-' ख। 11. 'तदुभयाभावात्' क। 12. '-त्मकं तत्त्वे सति' ख। 13. '-कारणे' ख। 14. 'धर्मिणो' ख। 15. इदं नास्ति क।

**कर्म कर्मत्वजातियोगि, आद्यसंयोगविभागयोरसमवायिकारणं चेति ॥ ६१ ॥**

**सामान्यं नित्यमेकमनेकसमवेतम् ॥ ६२ ॥**

समवायिकारणत्वेन रहितं कर्मापि भवति, तद्व्युदासाय अचलनेति, कर्म तु चलनात्मकमिति तद्व्यावृत्तिः। एवमपि सामान्यादौ प्रसङ्गः, तद्वारणाय जातिमत्त्वे सतीति। सामान्यादिचतुष्टयं तु जातिरहितमिति न दोषः। कर्मणि द्रव्ये चातिव्याप्तिवारणाय द्वितीयतृतीयपदे ॥ ६० ॥

कर्मत्वजातेर्व्यञ्जकमाह—[1]आद्येति[1]*। आद्यौ च[2] यौ संयोगविभागौ संयोगजविभागजव्यतिरिक्तौ तयोरसमवायिकारणत्वं कर्मत्वव्यञ्जकमित्यर्थः। [3]"च स्त्वर्थे"[3]* व्यञ्जकाभावशङ्कानिरासाय। यद्वा लक्षणान्तरम्। चः समुच्चयार्थः। कारणमात्रमदृष्टादावतिव्यापकमतोऽसमवायीति। [4]एवं रूपादौ, रूपादेरपि तन्त्वादिगतस्य पटादिगतरूपादिं प्रति असमवायिकारणत्वात्, अत आह—संयोगविभागेति। एवमपि आद्यसंयोगविभागयोरतिव्याप्तिः, तयोरपि संयोगजसंयोग-विभागजविभागौ प्रति असमवायिकारणत्वात्, अत आह—आद्येति। आद्यसंयोगविभागकारणत्वं तदाधारद्रव्येऽप्यस्तीति तद्वारणाय असमवायीति। कारणपदं स्पष्टार्थम्। सामान्यादिषु जात्यभावात् न जातिगर्भं लक्षण[5]मित्येकमेव[5]* लक्षणम् ॥ ६१ ॥

तत्र सामान्यं लक्षयति—नित्यमिति। समवेतमित्युक्ते रूपादावतिव्याप्तिरत आह—अनेकेति। [6]"एतावत्युक्ते"[6]* संयोगेऽतिव्याप्तिरत [7]आह—नित्येति। नित्यमनेकसमवेतं सामान्यमित्युक्ते अनेकेषां विशेषाणामनेकसमवेतत्वं नित्यत्वं चास्तीति तत्रातिव्याप्तिवारणाय एकमिति केचित्। तदपरे न सहन्ते, [8]"एकवचनेनैवानेकत्वनिवृत्तेः"[8]*। अतः [9]स्वरूपकथनायैव एकमिति। यद्वा इदमेकं लक्षणम् [10]इत्येकशब्देनोच्यते। लक्षणान्तरं तु स्वयमूह्यम्। ऊहस्तु (A)भावत्वे सति विशेषसमवायेतरनिःसामान्यं सामान्यमिति ॥ ६२ ॥

(A) अत्र 'भावत्वे सति समवेतं विशेषान्यद् निःसामान्य'मिति क-पुस्तकपाठं प्रामादिकत्वेन परिहृत्य तत्रैव अधो धृतं पाठान्तरमेव साधीयस्तया गृहीतम्। तत्र भावत्वेन अभावानाम्, निःसामान्यत्वेन द्रव्यगुणकर्मणां विशेषसमवाययोश्च साक्षाद् भेदनिवेशेन व्यावृत्तिरित्यतिव्याप्तिशङ्कैव नोदेति।

1. इदं नास्ति ख। 2. इदं नास्ति क। 3. इदं नास्ति क। 4. 'एवं च' ख। 5 '-मित्यकैकमेव' ख। 6. 'तावित्युक्ते' ख। 7. 'उक्तम्' ख। 8. 'नित्यमनेकसमवेतमित्येतावतैव विशेषेष्वतिव्याप्तिनिरासः, प्रत्येकं तेषु तदभावात्' ख। 9. 'स्वरूपसाध्यायैव' क। 10. 'प्रत्येक-' क।

**विशेषस्तु सामान्यरहित एकव्यक्तिवृत्तिः ॥ ६३ ॥**

**नित्यसम्बन्धः समवायः ॥ ६४ ॥**

**प्रतियोगिज्ञानाधीनज्ञानोऽभावः ॥ ६५ ॥**

**पृथिवीत्वसामान्यवती पृथिवी । गन्धवती पृथिवी ॥ ६६ ॥**

---

विशेषलक्षणं एकव्यक्तिवृत्तिरित्युक्ते[1] रसाद्यतिव्याप्तिः, तद्वारणाय सामान्यरहित इति । समवायादौ तद्वारणाय एकव्यक्तिवृत्ति'रिति ।

नन्वनेकव्यक्तिवृत्तेरपि सामान्यस्यैकव्यक्तिवृत्तित्वमस्त्येवेति तत्रातिव्याप्तिरिति चेत्, सत्यम्; (A)एकव्यक्तिमात्र[2]निष्ठत्वस्य तत्समवेतत्वस्य विवक्षितत्वाद् न दोषः ॥ ६३ ॥

समवायलक्षणे संयोगेऽतिव्याप्तिवारणाय नित्येति । गगनादौ तद्वारणाय सम्बन्ध इति । न च आत्मा[3]काशयोः संयोगेऽतिव्याप्तिः तस्य नित्यत्वादिति वाच्यम्, अन्यतर[4]कर्मोभयकर्मणोस्तत्कारणयोरात्माकाशादावभावेन तयोः संयोगाभावात्, तस्य नित्यत्वे माना[5]भावात् । द्रव्यत्वेन संयोगसाधने विभागोऽपि तेनैव सिध्येत् । तथा च [6]तस्य संयोगस्य कुतो नित्यत्वम् इति ॥ ६४ ॥

अभावं लक्षयति—प्रतियोगीति । (B)स्वाभावविरहात्मा प्रतियोगी । प्रतियोगिज्ञानाधीनं ज्ञानं यस्य स तथा । अधीनत्वं जन्यत्वम् । ज्ञानाधीनज्ञानोऽभाव इत्युक्ते समवायेऽतिव्याप्तिः तस्यापि सम्बन्धिज्ञानाधीनज्ञानत्वात्, अत उक्तं प्रतियोगीति(C) ॥ ६५ ॥

इदानीमवान्तर[7]विभागानुक्रमेण लक्षणान्याह—पृथिवीत्वेत्यादिना । पृथ्वीत्वजातिव्यञ्जकमाह—गन्धवतीति । गन्धवत्त्वं पृथिवीत्वस्य व्यञ्जकमित्यर्थः । यद्वा लक्षणान्तरम् । [8]ननु मणिवज्रादावव्याप्तिः, [9]न; पाकजरूपेण [10]तत्रापि गन्धवत्त्वानु-

---

(A) एकव्यक्तिमात्रनिष्ठत्वं तु स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यत्वम्, वृत्तित्वं समवायेन बोध्यम् । अत एवाग्रे सम्बन्धसामान्येन वृत्तित्वमाशङ्क्य तत्समवेतत्वस्येत्युक्तम् । एकव्यक्तिमात्रसमवेतत्वस्येति तदर्थः ।

(B) 'अभावविरहात्मत्वं वस्तुनः प्रतियोगिता' इति कुसुमाञ्जलावुदयनाचार्याः ।

(C) ननु स्तम्भो न पिशाच इत्यनुभवेन प्रत्यक्षाविषयस्यापि पिशाचस्य भेदो ज्ञायते

---

1. '-रित्युक्तम्' ख । 2. '-निर्दिष्टस्य' क । 3. '-काशसंयोगे' ख । 4. '-कर्मणोरुभय-' क । 5. -भावाच्च' ख । 6. 'तस्य' इति ख-पुस्तके नास्ति । 7. '-भेदामुक्त-' क । 8. 'न च' ख । 9. इदं नास्ति क । 10. इदं नास्ति ख ।

अप्त्वजातिमत्य आपः । शीतस्पर्शवत्य आपः ॥ ६७ ॥
तेजस्त्वजातियोगि उष्णस्पर्शवत् तेजः ॥ ६८ ॥
वायुत्वजातियोगी अरूपस्पर्शवान् वायुः ॥ ६९ ॥

---

मानात् । यद्वा मणिवज्रादिभस्मनि गन्धवत्त्वोपलम्भात् तत्परमाणुषु गन्धवत्त्वमनुमीयते, ते एव वज्राद्यारम्भका इति तत्रापि गन्धवत्त्वसिद्धिः । न च जलादावतिव्याप्तिः, तत्र गन्धवत्त्वस्य चम्पकादिपार्थिवोपाधिनिमित्तकत्वात् ॥ ६६ ॥

अथ [1]अप्त्वजातिव्यञ्जकमाह—शीतस्पर्शेति । शीतस्पर्शवत्त्वम् अप्त्वव्यञ्जकमित्यर्थः । यद्वा लक्षणान्तरम् । तत्र स्पर्शवत्त्वं पृथिव्यादावतिव्यापकमत उक्तम्—शीतेति । शीता आप इत्युक्ते सामानाधिकरण्याद् गुणगुणिनोरभेदभ्रमः स्यात् तद्वारणाय स्पर्शेति । [2]एवं च शीतः स्पर्शो यासामिति बहुव्रीहिणा भेदप्रतीतेर्नाभेद*-भ्रमो भवतीति । न च चन्द्रेऽतिव्याप्तिः, तत्र हि चन्द्रमण्डलारम्भकावयवो[3]पष्टम्भकजलावयवगतं शैत्यं [4]संयुक्तसमवायात् प्रतीयते, न तु स्वाभाविकं शैत्यम् । न चोष्णोदके अव्याप्तिः, [5]तत्रापि वह्निस्पर्शेन तस्याभिभवात्, बलवत्सजातीयसम्बन्धस्याभि[6]भावकत्वात् । एवं तेजोलक्षणेऽपि द्रष्टव्यम् । न च तेजोलक्षणं चन्द्रसुवर्णादावव्यापकम्, (A)चन्द्रे जलस्पर्शाभिभूतस्य सुवर्णादौ तु[7] पार्थिवस्पर्शाभिभूतस्य [8]उष्णस्पर्शस्य सत्त्वादिति ॥ ६७-६८ ॥

वायुत्व[9]जातिव्यञ्जकमाह—अरूपेति । अरूपस्पर्शवत्त्वं व्यञ्जकमित्यर्थः । यद्वा लक्षणान्तरम् । तत्र स्पर्शवत्त्वं तेजःप्रभृतिष्वतिव्याप्तमतोऽरूपेति । अरूपत्वमाकाशादावतिव्यापकमतः स्पर्शवानिति ॥ ६९ ॥

---

इत्यभ्युपेयम् । एवं च अन्योन्याभावप्रत्यक्षे अनुयोगिज्ञानमेवापेक्षितमिति प्रतियोगिज्ञानाधीनज्ञानत्वमिति लक्षणमन्योन्याभावेऽव्याप्तमिति चेन्न, तत्रापि प्रतियोगिनः पिशाचस्य शाब्दादिज्ञानापेक्षणात, इतरथा तादृशप्रत्ययस्यैवानुत्पत्तिरिति ध्येयम् ।

(A) चन्द्रस्य तेजस्त्वमौपाधिकमिति ज्योतिर्विदः । तथा च भास्कराचार्याः—
तरणिकिरणसङ्गादेष पीयूषपिण्डो दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति ।
तदितरदिशि बालाकुन्तलश्यामलश्रीर्घट इव निजमूर्त्तिच्छाययैवाऽऽतपस्थः ॥ इति ।

---

1. 'अप्त्वव्य-' ख । 2. इदं क-पुस्तके नास्ति । 3. '-पष्टम्भज-' क । 4. ख-पुस्तके 'संयुक्ते'ति नास्ति । 5. 'तत्र वह्नि-' ख । 6. '-भवत्वात्' क । 7. पदं नास्ति क । 8. 'उष्णस्य' ख । 9. ख-पुस्तके 'जाति'पदं नास्ति ।

शब्दगुणमाकाशम् ॥ ७० ॥

आदित्यपरिवर्त्तनोत्पाद्यपरत्वापरत्वासमवायिकारणाधारः परत्वापरत्वानधिकरणं कालः ॥ ७१ ॥

(A)आदित्यसंयोगानुत्पाद्यपरत्वापरत्वासमवायिकारणाधारः परत्वापरत्वानधिकरणं दिक् ॥ ७२ ॥

---

आकाशादित्रयस्य जातेरभावा[1]देकैकमेव लक्षणमाह—शब्देति । आत्मादावति-व्याप्तिवारणाय शब्देति । शब्दवदित्युक्ते न कोऽपि दोषः, तथाऽपि तस्य भाट्ट[2]मतसिद्ध-द्रव्यत्वनिरासेन गुणत्वसूचनाय गुणपदम् । शब्दो गुणः बहिरिन्द्रियव्यवस्थाहेतुत्वात् रूपवदिति शब्दस्य गुणत्वसिद्धिरि[3]त्यर्थः ॥ ७० ॥

आदित्यपरिवर्त्तनोत्पाद्येति[4] । आदित्यपरिवर्त्तनं सूर्यपरिस्पन्दः, तेन उत्पाद्ये [5]ये परत्वापरत्वे, तयोरसमवायिकारणं कालपिण्डसंयोगस्तदाधार इत्यर्थः । अनधि-करणं काल इत्युक्ते (B) असम्भवः [6]कालस्यापि द्रव्यत्वाधिकरणत्वात् । यद्वा घटत्वा-नधिकरणे पटे अतिव्याप्तिस्तत उक्तं परत्वापरत्वेति । तयोः पिण्डनिष्ठत्वेन कालस्य तदनधि[7]करणत्वमित्यर्थः[7]* । एतावत्युक्ते समवायेऽतिव्याप्तिः, तत आधार इति । एवं च कर्मण्यतिव्याप्तिः, तदर्थं कारणेति । तथाऽप्यनिवृत्तिः, तस्यापि ज्ञानकारण-

---

(A) अत्र 'आदित्यसंयोगोत्पाद्यपरत्वे'त्यादि क-पुस्तकपाठः प्रामादिकः, 'आदित्य-संयोगानुत्पाद्ये परत्वापरत्वे दिक्कृते' इत्युत्तरदर्शनात्, अत्रैव टीकायामादित्यसंयोगानुत्पाद्येति उल्लेखाच्च । दिक्प्रकरणे शङ्करमिश्रैस्तु 'इत इदमिति यतस्तद्दिश्यं लिङ्गम्' इति द्वितीयाध्यायस्य द्वितीयाह्निकसूत्रव्याख्यानावसरे 'ते च सूर्यसंयोगा अल्पीयांसो भूयांसो वा विगुपनेया' इत्युक्तम् । परिष्कारकारैस्तु तद्व्याख्यानावसरे 'सूर्यसंयोगा इत्युत्तरसूत्रयथाश्रुतार्थानुसारेण, मूर्त्तसंयोगा इति तु परमार्थ' इत्यभिहितम् । उत्तरसूत्रं तु 'आदित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताच्च प्राची' इति । तथा च मूर्त्तसंयोगाभिप्रायेण सूर्यसंयोगाभिप्रायेण च आदित्यसंयोगा-नुत्पाद्यादित्यसंयोगोत्पाद्येति पाठभेदौ संजातौ नवेति सुधीभिर्विभावनीयम् ।

(B) अनधिकरणमित्यस्य अधिकरणसामान्यभिन्नम्, यत्किञ्चिदधिकरणभिन्नं वा अर्थः । तत्राद्ये दोषमाह असम्भव इति । द्वितीये दोषस्तु यद्वेत्यादिना दर्शयिष्यते ।

---

1. '-देकमेव' क । 2. '-मते सिद्ध-' ख । 3. ख-पुस्तके 'इत्यर्थ' इति नास्ति । 4. इदं क-पुस्तके नास्ति । 5. क-पुस्तके इदं नास्ति । 6. 'तस्यापि' ख । 7. '-करणत्वम्' ख ।

**आत्मत्वसामान्यवान् बुद्धिगुण आत्मा ॥ ७३ ॥**

**मनस्त्वजातियोगि स्पर्शशून्यं क्रियाधिकरणं मनः ॥ ७४ ॥**

कर्मत्वाधारत्वात्(A) ततोऽसमवायीति। [1]कर्मणस्तु कर्मत्वाधारत्वेऽप्यसमवायिकारणाधारत्वाभावात् न दोषः। असम[2]वायीत्याद्युक्ते गगनादावतिव्याप्तिः, तत उक्तं परत्वेति। एतावत्युक्ते दिशि [3]अतिव्याप्तिः, तत उक्तं—[4]आदित्येति। [5]उत्पाद्याधार इत्युक्ते पिण्डेऽतिव्याप्तिरतः परत्वेत्यादि[5]*। एतच्च परत्वगर्भितम् अपरत्वगर्भितं लक्षणद्वयं द्रष्टव्यम्। एवं दिग्[6]लक्षणेऽपि द्रष्टव्यम्[6]*। एतावांस्तु विशेषः, कालेऽतिव्याप्तिवारणाय—आदित्यसंयोगानुत्पाद्येति ॥ ७१-७२ ॥

आत्मानं लक्षयति—आत्मत्वेति। (B)आत्मवृत्त्यवृत्त्यात्मवृत्त्यत्यन्ताभावाप्रतियोगिद्रव्यत्वान्यजातिरात्मत्वं सामान्यं तद्योगीत्यर्थः। आत्मत्वव्यञ्जकमाह—बुद्धीति। बुद्धिर्गुणो यस्य तस्य भावस्तत्त्वम्, [7]तच्चात्मत्वव्यञ्जकमित्यर्थः। यद्वा लक्षणान्तरम्। तत्र [8]गुण आत्मेत्युक्ते[8]* असम्भवः। गुणवानात्मेत्युक्ते गगनादौ (C)गच्छति, तद्वारणाय बुद्धीति। गुणेति—स्पष्टार्थम्। अथवा बुद्धिरात्मेत्यभिदधद्[9]बौद्धबुद्धिशुद्धये गुणपदम्, [10]तथा सति[10]* आत्मनोऽनित्यत्वप्रसङ्गादिति। यद्वा गुणवदिति [11](D)सामान्यलक्षणद्योतनार्थं गुणपदम् ॥ ७३ ॥

मनसो लक्षणमाह—मनस्त्वेति। (E)गगनावृत्तिस्पर्शवत्त्वात्यन्ताभावाधि-

(A) लौकिकप्रत्यक्षे विषयस्य हेतुत्वेन कर्मत्वप्रत्यक्षे कर्मत्वस्य हेतुत्वमित्यभिप्रायः। तथाऽपि कर्मत्वं नासमवायिकारणं 'गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्व'मित्युक्तेरिति ध्येयम्।

(B) आत्मवृत्त्यवृत्तिरात्मनिष्ठात्यन्ताभावाप्रतियोगिनी च या द्रव्यत्वभिन्ना जातिः सा आत्मत्वमित्यर्थः। तत्र आत्मगुणे बुद्ध्यादौ वर्तमानायाः सत्ताया व्यावृत्त्यर्थम् आत्मवृत्त्यवृत्तित्वमिति बोध्यम्। अन्यत् सुगमम्।

(C) गच्छतीति अतिप्रसङ्ग इत्यर्थः।

(D) सामान्येति, 'द्रव्यं तु द्रव्यत्वसामान्ययोगि गुणवत्समवायिकारणं चे'ति द्रव्यसामान्यलक्षणसत्त्वज्ञानार्थमित्यर्थः।

(E) स्पर्शवत्त्वात्यन्ताभावाधिकरणं यत् क्रियावत् तद्वृत्तिर्जातिः सत्ताऽपि भवतीत्यतस्तद्वारणाय गगनावृत्तिरिति जातिविशेषणम्।

1. 'कर्मणस्तत्-' ख। 2. '-वायीत्युक्ते' क। 3. ख-पुस्तके इदं नास्ति। 4. 'उत्पाद्येति' क। 5. 'आधारान्तं पिण्डेऽतिव्यापकमतोऽग्रे तनपरत्वेत्यादि' ख। 6. '-लक्षणमपि ज्ञेयम्' ख। 7. 'आत्मव्य-' ख। 8. 'गुणात्मेत्युक्ते' ख। 9. '-बौद्धबुद्धि-' क। 10. 'तथात्वे' ख। 11. 'सामान्योपलक्षणानुगतिद्योतनार्थं' ख।

# रूपत्वजातिमत् चक्षुर्मात्रग्राह्यो गुणो रूपम् ॥ ७५ ॥

करणक्रियावद्वृत्तिजातिर्मनस्त्वम्, तद्योगीत्यर्थः। मनस्त्वव्यञ्जकमाह—स्पर्शेति। स्पर्शशून्यत्वे सति कर्माधारत्वं मनस्त्वव्यञ्जकमित्यर्थः। यद्वा लक्षणान्तरम्। तत्र [1]घटादावतिव्याप्तिवारणाय स्पर्शेति[1]*। गगनादिव्युदासाय क्रियाधि[2]करणत्वम्। क्रियाधिकरणत्वं तु मनसोऽणुत्वादेव सिद्धम्, अन्यथा मनसो विभुत्वे आत्मनोऽपि विभुत्वात् ताभ्यां (A)सर्वपदार्थ[3]सम्बन्धेन ज्ञानयौगपद्यापत्तिः[3]*। बाह्येन्द्रिय-तद्विषयासम्बन्धान्नेति चेत्—तर्हि तत्तद्विषयेन्द्रियाणां युगपत् सम्बन्धे ज्ञानयौग-पद्यापत्तिः। [4]दृष्टमेवैतद्दीर्घशष्कुलीभक्षणादौ[4]* इति चेत्—न, व्यासङ्गस्थले क्रमदर्शनेन तत्रापि क्रमानुमानाद् यौगपद्यप्रतीतेर्भ्रान्तत्वात्। व्यासङ्गो नाम मनसो[5]ऽन्यासक्त-त्वम्। (B)तत्र हि [6]रूपादिसकलविषयसम्बन्धेऽपि शब्दं नाश्रौषं रूपं नाद्राक्षम्, गन्धं [7]नान्वभवम् [8]स्पर्शं नास्प्राक्षमिति[8]* सर्वानुभवाभावः स्यात्। अणुत्वे तु येनेन्द्रियेण मनः सम्बध्यते तेनैव ज्ञानं जायते नान्येनेति युक्तो यौगपद्याभावः। अतः सिद्धं क्रियावत्त्वं मनसः ॥ ७४ ॥

गुणावान्तरभेदानां [9]क्रमेण लक्षणानि दर्शयन् रूपं लक्षयति—रूपत्वेति।

एकं लक्षणमेकं तु जातिव्यञ्जकमिष्यते।
एवं सर्वत्र विज्ञेयमथवा लक्षणान्तरम् ॥

(C)रसावृत्तितैजसेन्द्रियमात्रग्राह्यगुणवृत्तिजाती रूपत्वम्, तद्योगीत्यर्थः। लक्षणपक्षे गुण इत्युक्ते अतीन्द्रियधर्मादावतिव्याप्तिः, तद्वारणाय [10]इन्द्रियग्राह्येति। ग्राह्यो गुणो रूपमित्युक्ते [11]रसादावतिव्याप्तिः, ततः[11]* उक्तं चक्षुर्ग्राह्य इति। एवमुक्ते

(A) सर्वपदार्थेत्यादि-ज्ञानयौगपद्यापत्तिरित्यन्तग्रन्थस्थले क-पुस्तकधृतं पाठान्तरं तु "सर्वं सुखादिसाधनं सदा सम्बद्धमिति सुखदुःखयोर्युगपदुत्पत्तिः स्यात्। शरीरविषया-सम्बन्धात् नेति चेत् शरीरविषयसम्बन्धे सति सकलेन्द्रियाणां तद्विषयसम्बन्धे च सति युगपत् सकलज्ञानानि स्युः" इति।

(B) 'तत्र' मनसो विभुत्वमते इत्यर्थः।

(C) अत्रापि रसावृत्तित्वं सत्ताव्यावृत्तये जातौ विशेषणम्। एवमुत्तरत्रापि।

1. 'घटादिवारणाय स्पर्शशून्येति' ख। 2. '-करणमिति' ख। 3. '-सम्बन्धाद् युगपद् ज्ञानानि स्युः' ख। 4. 'दृष्टमेवैतद् गुडादिभक्षणादौ' ख। 5. 'व्यासक्तत्वम्' ख। 6. 'रूपादौ सकल-' क। 7. नान्वभूवम्' ख। 8. 'स्पर्शं नास्पर्शमिति' क। 9. इदं नास्ति क। 10. ख-पुस्तके 'इन्द्रिय' इति नास्ति। 11. 'रसादौ ततः' ख।

**रसत्वजातियोगी रसनग्राह्यो गुणो रसः ॥ ७६ ॥**

**गन्धत्वजातियोगी घ्राणग्राह्यो गुणो गन्धः ॥ ७७ ॥**

**स्पर्शत्वजातियोगी स्पर्शनमात्रग्राह्यो गुणः स्पर्शः ॥ ७८ ॥**

संयोगादौ अतिप्रसक्तिः, तत उक्तं मात्रेति। संयोगादेर्द्वीन्द्रियग्राह्यत्वात् न चक्षुर्मात्रग्राह्यत्वम्। रूपत्वेऽतिप्रसङ्गवारणाय गुण इति। सम्पूर्णमपि लक्षणं प्रभाकुड्यसंयोगेऽतिव्यापकम्, ततो विशेषगुण इति द्रष्टव्यम्। तथा च चक्षुर्मात्रग्राह्यो विशेषगुणो रूपमित्यर्थः। यद्वा चक्षुर्मात्रग्राह्यजातिमान् गुणो रूपमित्यर्थः। [1]संयोगत्वस्यातथात्वात् न संयोगेऽतिप्रसङ्गः ॥ ७५ ॥

रूपावृत्तिजलेन्द्रियग्राह्यगुणवृत्तिजाती रसत्वम्। [2]लक्षणे तु[2]* रूपादौ अतिव्याप्तिवारणाय रसनेति। रसनया ग्राह्य इत्युक्ते रसत्वे अति[3]व्याप्तिस्तदर्थं गुण इति ॥ ७६ ॥

पार्थिवेन्द्रिय[4]ग्राह्यगुणवृत्तिस्पर्शावृत्तिजातिर्गन्धत्वम्। [5]लक्षणे तु[5]* रसादावतिप्रसङ्गवारणाय घ्राणेति। [6]गन्धत्वेऽतिप्रसङ्गवारणाय[6]* गुणेति ॥ ७७ ॥

स्पर्शं लक्षयति स्पर्शत्वेति। [7](A)रूपत्वादिलक्षणतावच्छेदकावच्छिन्नात्यन्ता[7]*भावाधिकरणविभुत्वानधिकरणद्रव्यवृत्तिविशेषगुणत्वावान्तरजातिः स्पर्शत्वम्। जातिव्यञ्जकमाह—स्पर्शनेति, स्पर्शनमात्रग्राह्यगुणत्वं स्पर्शत्वव्यञ्जकमित्यर्थः। लक्षण[8]पक्षेऽपि स्पर्शनग्राह्यो गुणः संयोगोऽपि भवति तद्वारणाय मात्रेति। स्पर्शनमात्रग्राह्यत्वं स्पर्शत्वजातावपीति तदर्थं गुण इति। शेषं पूर्ववत्। एतेषु चतुर्ष्वपि लक्षणेषु तत्तदिन्द्रियग्राह्यगुणत्वावान्तरजातिमत्त्वं [9]निष्कृष्टोऽर्थः। तेन परमाणुरूपादिषु नाव्याप्तिः। चक्षुर्मात्रग्राह्यगुणत्वावान्तरजातिमद् रूपम्। एवमुत्तरत्रापि द्रष्टव्यम् ॥ ७८ ॥

(A) अत्रादर्शपुस्तकपाठः '7'-चिह्नेन अधस्ताद् धृतः। उपरि मुद्रित आकारस्तु कैलासचन्द्रशिरोमणिभट्टाचार्यकृतशोधनात् प्राप्त इति क-पुस्तकसम्पादकाः। तत्रापि रूपत्वादीत्यत्र आदिलक्षणतावच्छेदकेति लिखनस्य प्रयोजनमनुसन्धेयम्। रूपशून्यं विभुत्वानधिकरणद्रव्यं वायुर्मनश्च, तत्रापि मनसि विशेषगुणाभावात् तादृशद्रव्यवृत्तिविशेषगुणः स्पर्श एव; एवं च तादृशविशेषगुणत्वावान्तरजातिः स्पर्शत्वमिति भावः।

1. 'संयोगस्यातथात्वात्' क। 2. इदं नास्ति क। 3. '-प्रसङ्गस-' ख। 4. '-ग्राह्य-प्रत्ति-' क। 5. इदं नास्ति क। 6. 'गन्धजातौ तद्वारणाय' ख। 7. 'रूपत्वलक्षणकावच्छेदकावच्छिन्नरूपात्यन्ता-' ख। 8. '-पक्षे स्पर्शग्रा-' ख। 9. 'निष्कृष्टार्थः' ख।

संख्यात्वसामान्यवती संख्या। गणनाऽसाधारणकारणं संख्या ॥ ७६ ॥

संख्यां लक्षयति—संख्यात्वेति। (A)गगन[1]समवेतवृत्तिसामान्यगुणवृत्तिद्विष्ठगुणमात्रावृत्तिपरिमाणपृथक्त्वनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नगुणत्वसाक्षाद्व्याप्यजातिः संख्यात्वम्। जातिव्यञ्जकमाह—गणनेति: कारणं संख्या इत्युक्ते साधारणकारणे ईश्वरेच्छादौ प्रसङ्गः, ततोऽसाधारणेति। [2]एतावत्युक्ते परिमाणादावतिप्रसङ्गः[2]*(B), ततो गणनेति। [3](C)यत्सामान्ये सत्येव यत्सामान्यं[3]* जायते असति च न जायते तत् तस्यासाधारणं कारणम्, यथा [4]तन्तवः पटस्य, यथा वा[5] कर्म संयोगादेः, तथा गणनां प्रति असाधारणं [6]कारणं संख्या। ज्ञानं प्रति तु नासाधा[7]रणम्[7]*, संख्यां विना अन्यस्मादपि घटादेर्ज्ञायमानत्वात्। संख्याज्ञानं प्रति तु[8] संख्याया असाधा[9]रणत्वेऽपि तस्या गणनां प्रत्यसाधा[10]रणत्वं न व्याहन्यते उक्त[11]लक्षणस्य सत्त्वात्[11]*। न हि घटस्य रूपादिचतुर्दशगुणान् [12]प्रति साधारणकारणत्वेऽपि[12]* प्रत्येकमसाधारणत्वं व्याहन्यते। न हि घटः साधारणकारणमेवेति व्यवहरन्ति [13]परीक्षकाः, किं तु ईश्वरेच्छादीनां साधारणत्वम्, तेषां सदा सत्त्वेऽपि तन्त्वादिकं विना [14]विशेषपटादिकार्यानुदयात्। तस्मात् स्वज्ञानं प्रति हेतुत्वेऽपि गणनाऽसाधारणकारणत्वं [15]न व्याहन्यते[15]* संख्याया इति सिद्धम् ॥७६॥

(A) अत्र गगनसमवेतवृत्तित्वेन गुरुत्वत्वस्य, सामान्यगुणवृत्तित्वेन शब्दत्वस्य द्विष्ठगुणमात्रावृत्तित्वेन संयोगत्वविभागत्वयोः, एकपृथक्त्वस्य द्विष्ठत्वाभावे द्विष्ठगुणमात्रावृत्तेः पृथक्त्वत्वस्य तादृशस्य परिमाणत्वस्य च परिमाणपृथक्त्वनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नत्वेन, गुणत्वसाक्षाद्व्याप्यत्वेन च एकत्वत्वस्य निरासो बोध्यः।

(B) अतिप्रसङ्ग इति जनकपरिमाणस्य जन्यपरिमाणं प्रत्यसाधारणकारणत्वादिति भावः।

(C) लक्षणं सङ्गमयितुमसाधारणत्वं निरूपयति यत्सामान्य इति।

1. '-समवेतसामान्य-' ख। 2. 'एवमपि परिमाणादौ प्रसङ्गः' ख। 3. 'यज्जातीये सति यज्जातीयम्' ख। 4. 'तन्तुः' ख। 5. इदं नास्ति क। 6. इदं नास्ति क। 7. '-रणं कारणं' ख। 8. इदं नास्ति ख। 9. '-रणाकारणत्वेऽपि' ख। 10. '-रणाकारणत्वं' ख। 11. '-लक्षणसत्त्वात्' क। 12. 'प्रति असाधारणत्वेऽपि' क। 13. 'तीर्थिकाः' ख। 14. 'विशेषघटकार्या-'क। 15. इदं नास्ति ख।

परिमाणत्वजातियोगि मानव्यवहारासाधारणकारणं परिमाणम् ॥८०॥

पृथक्त्वत्वजातियोगि पृथग्व्यवहारासाधारणकारणं पृथक्त्वम् ॥८१॥

संयोगत्वसामान्यवान् अनित्यसम्बन्धः संयोगः ॥ ८२ ॥

विभागत्वसामान्यवान् विभक्तप्रत्ययासाधारणकारणं विभागः ॥ ८३ ॥

---

परिमाणं लक्षयति—परिमाणत्वेति । (A)संख्याऽसमवायिकारणकवृत्त्यपेक्षाबुद्ध्यसाधारणकारणकावृत्तिगुणत्वसाक्षाद्व्याप्यजातिः परिमाणत्वम् । जातिव्यञ्जकमाह—मानेति । 'मानम्' इयत्ता । लक्षणपक्षे व्याख्यानं पूर्ववत् ॥८०॥

पृथक्त्वं लक्षयति—पृथक्त्वेति । (B)अपेक्षाबुद्ध्यसाधारण[1]कारणसमयवृत्ति[1]* गुणवृत्त्यत्यन्ताभावाप्रतियोगिसंख्याऽवृत्तिजातिः पृथक्त्वत्वम् । [2]तद्व्यञ्जकमाह—पृथक्त्वेति । पृथग्व्यवहारः इदमस्मात् पृथगित्येवंरूपः ॥८१॥

संयोगं लक्षयति—संयोगत्वेति । (C)द्रव्यासमवायिकारणगुणवृत्त्यत्यन्ताभावाप्रतियोगिगुणत्वावान्तरजातिः संयोगत्वम् । तद्व्यञ्जकमाह—अनित्येति । लक्षणपक्षे समवाये अतिव्याप्तिवारणाय अनित्यपदम् । रूपादौ तद्वारणाय सम्बन्धपदम् ॥८२॥

विभागं लक्षयति—विभागत्वेति । क्रियाऽसमवायि[3]कारणद्विनिष्ठगुणवृत्ति-

---

(A) अत्र 'संख्याऽसमवायिकारणकवृत्तित्वेन रूपत्वादीनाम्, अपेक्षाबुद्ध्यसाधारणकारणकावृत्तित्वेन संख्यात्वस्य, गुणत्वसाक्षाद्व्याप्यत्वेन महत्त्वत्वस्य निरासो बोध्यः ।

(B) अत्र 'अपेक्षाबुद्ध्यसाधारणकारणकवृत्ति-संख्याऽवृत्ति-जातिः पृथक्त्वत्व'मिति पाठः समीचीनतया प्रतिभाति ।

(C) द्रव्यासमवायिकारणं यो गुणः तद्वृत्त्यत्यन्ताभावाप्रतियोगिनी जातिः संयोगत्वं गुणत्वं सत्ता च । तत्र अन्त्ययोः गुणत्वावान्तरत्वोक्त्या निरासो बोध्यः । अत्र गुणत्वसाक्षाद्व्याप्यत्वेनैव अभिघातत्वादिनिरासस्सम्भवे द्रव्यासमवायिकारणगुणवृत्तित्वपर्यन्तेनेष्टसिद्धिसम्भवेन अत्यन्ताभावाप्रतियोगित्वपर्यन्तानुसरणे बीजमनुसन्धेयम् ।

---

1. 'कारणक-कालवृत्ति-' ख । 2. 'तज्जातिव्यञ्जक-' ख । 3. '-कारणकद्विष्ठ-' ख ।

परत्वत्वसामान्यवत् परव्यवहारासाधारणकारणं परत्वम् ॥ अपरत्वत्वसामान्ययोगि अपरव्यवहारासाधारणकारणम् अपरत्वम् ॥८४-८५॥

बुद्धित्वसामान्यवती आत्माश्रयः प्रकाशो बुद्धिः ॥८६॥

सुखत्वसामान्यवन्निरुपाध्यनुकूलवेद्यं सुखम् ॥८७॥

---

संयोगावृत्तिगुणत्वसाक्षाद्व्याप्यजातिर्विभागत्वम् । 'विभक्तव्यवहारः' इदमस्माद् विभक्तमिति (A)प्रत्ययव्यपदेशः ॥८३॥

परत्वापरत्वे लक्षयति—'परत्वेति । अपरत्वगुणावृत्ति(B)सकल[2]परत्ववृत्तिजातिः [3]परत्वत्वम् । परत्वावृत्तिसकलापरत्व[4]वृत्तिजाति[5]रपरत्वत्वम् । परा[6]परव्यवहारौ वृद्धतरुणादौ । सन्निकृष्टविप्रकृष्टयोश्च परा[7]परव्यपदेशौ । लक्षणपक्षे व्यावृत्तिः पूर्ववत् ॥८४-८५॥

बुद्धिं लक्षयति—बुद्धित्वेति । [8]सुखाद्यवृत्तिसकलबुद्धिवृत्तिजातिर्बुद्धित्वम् । एवमुत्तरत्रापि जातय [9]ऊहनीयाः । लक्षणपक्षे आत्माश्रय इत्युक्ते सुखादावति[10]व्याप्तिरत आह[10]*—प्रकाश इति । वह्न्यादिप्रकाशे तद्वारणाय आत्माश्रय इति ॥८६॥

सुखं लक्षयति—सुखत्वेति । लक्षणपक्षे वेद्यं सुखमित्युक्ते दुःखतत्साधनादौ प्रसङ्गः, तदर्थमनुकूलेति । एवं सति सुखसाधने प्रसङ्गः, तदर्थं निरुपाधीति । निरुपाधित्वमनन्यद्वारकत्वम्, सुखसाधनं तु सुखद्वारेणैवानुकूलमिति नातिव्याप्तिः । न हि चन्दनं निदाघे सुखसाधनमिति हेमन्तशिशिरयोः [11]शीतार्त्तेनानुलिप्यते(C) ॥८७॥

---

(A) 'प्रत्ययव्यपदेशः' प्रत्ययमूलको व्यपदेशः, प्रत्ययसहितो वा व्यपदेश इत्यर्थः । द्विवचनान्तपाठस्तु सुगमः ।

(B) प्रथमवृत्त्यन्तं सत्तागुणत्वव्यावृत्त्यर्थम् । एवमुत्तरत्रापि । यथायथं तद्व्यावृत्तिर्बोध्या ।

(C) अतः परं क-पुस्तके धृतं पाठान्तरं तु—'ततः सुखार्थत्वेनैव तस्येष्यमाणत्वं न स्वभावत इति न तत्र प्रसङ्गः । सुखं तु जायमानं सत् स्वभावत एवानुकूलवेद्यमिति' इति ।

---

1. 'इ' नास्ति ख । 2. '-परत्वगुणवृत्ति-' ख । 3. 'परत्वम्' ख । 4. '-परत्वजाति-' ख । 5. '-रपरत्वम्' ख । 6. '-परप्रत्ययव्यव-' ख । 7. '-परप्रत्ययव्यप-' ख । 8. 'सुखावृत्ति-' ख । 9. 'ऊह्याः' ख । 10. 'व्याप्तिवारणायाह' क । 11. 'शीतार्त्तेनाप्यनु-' ख ।

**दुःखत्वसामान्यवन्निरुपाधिप्रतिकूलवेद्यं दुःखम् ॥८८॥**

**इच्छात्वसामान्यवत्यर्थित्वलक्षणा इच्छा ॥८९॥**

**द्वेषत्वजातिमान् प्रज्वलनात्मको द्वेषः ॥९०॥**

**प्रयत्नत्व-सामान्यवान् प्रयत्नव्यवहारासाधारण-कारणं प्रयत्नः ॥९१॥**

**गुरुत्वत्व-जातिमदेकवृत्त्याद्यपतनासमवायि कारणं गुरुत्वम् ॥९२॥**

---

दुःखं लक्षयति—दुःखत्वेति। लक्षणपक्षे सुखादावतिव्याप्तिवारणाय प्रतिकूलेति। दुःखसाधने अहिकण्टकादौ तद्वारणाय निरुपाधीति। दुःखसाधनं [1]तु दुःखद्वारेण [2]एव प्रतिकूलमिति न तत्र प्रसङ्गः; विषवैद्यैः सर्पादे[3]रपि गृह्यमाणत्वात् तेषां तस्य प्रतिकूलत्वादर्शनात् इति ॥८८॥

इच्छां लक्षयति—इच्छात्वेति। अर्थयते प्रार्थयते इत्यर्थी, ग्राह्यादित्वाद् णिनिः। तस्य भावोऽर्थित्वं प्रार्थनेति यावत्, तदेव लक्षणं स्वरूपं यस्याः सा तथा। स्पष्टम् ॥८९॥

द्वेषं लक्षयति—द्वेषत्वेति। [4]प्रज्वलयतीति [5]प्रज्वलनः, स एवाऽऽत्मा स्वरूपं यस्य स तथा, क्रोधरूप इत्यर्थः। प्रज्वलनात्मकत्वं यथाश्रुतं वह्न्यादावप्यस्तीति गुणप्रकरणाद् गुणपदं सम्बन्धनीयम् [6]इति नातिव्याप्तिः"*। यद्वा आत्मगुणप्रकरणात् आत्माश्रय इति सम्बन्धनीयमिति ॥९०॥

प्रयत्नं लक्षयति—प्रयत्नत्वेति। अहं प्रयते अहं करो[7]मीति व्यवहारः प्रयत्नव्यवहारः। शेषं सुगमम् ॥९१॥

[8]गुरुत्वं लक्षयति—गुरुत्वत्वेति। लक्षणपक्षे"* कारणं गुरुत्वमित्युक्ते अदृष्टादौ अतिव्याप्तिः तदर्थमसमवायीति। एवमुक्तेऽपि संयोगादौ प्रसङ्गस्तत उक्तं पतनेति। पतनं नाम अधःसंयोगफलिका क्रिया, तस्य असमवायिकारणमित्यर्थः। [9]एतावत्युक्तेऽपि द्वितीयपतनासमवायिकारणे विभागे (A) नोदनाभिघातादिसंयोगे

---

(A) अतः परम् "अतिव्याप्तिस्तत आद्येती'ति पूरयित्वा क-पुस्तकसम्पादकेन अर्थसंगतिर्विहिता। तन्मते 'विभागे' इत्यत्र 'वेगे' इति पाठः समीचीनतरः।

---

1. इदं नास्ति क। 2. इदं नास्ति क। 3. '-र्दंर्ग्ट्र्य-' ख। 4. 'ज्वाल-' ख। 5. 'ज्वलनं' ख। 6. इदं नास्ति क। 7. '-मीत्यादिव्य-' ख। 8. अयमंशः क-पुस्तके नास्ति। 9. 'तावत्युक्ते' क।

द्रवत्वत्व-जातिमद् एकवृत्ति-स्यन्दनासमवायिकारणं द्रवत्वम् ॥६३॥

स्नेहत्वसामान्यवान् द्रवत्वत्वशून्यः संग्रहासाधारणकारणं स्नेहः ॥६४॥

संस्कारत्व-जातिमान् स्वोत्पत्त्यवस्थापादको गुणः संस्कारः ॥६५॥

---

पतनहेतावतिव्याप्तिस्तत उक्तम् एकवृत्तीति। एकवृत्तित्वं रूपादावप्यस्तीति पतनेत्यादि। एकवृत्तिपतनकारणमित्युक्ते अदृष्टादौ, ततोऽसमवायीति ॥ ६२ ॥

द्रवत्वं लक्षयति—द्रवत्वत्वेति। रूपवद्वृत्तिगगनावृत्त्यपेक्षाबुद्ध्यजन्य-(A)सामान्यगुणवृत्तिगुरुत्वान्य(त्वत्वान्य ?)गुणत्वावान्तरजाति[1]र्द्रवत्वत्वम्। लक्षणपक्षे रूपादावतिव्याप्तिवारणाय स्यन्दनेति। स्यन्दनं प्रस्रवणम्। (B) एतावत्युक्ते संयोगादौ, तदर्थमेकवृत्तीति। एकवृत्ति च तत् स्यन्दनासमवायिकारणं चेति विग्रहः ॥६३॥

स्नेहं लक्षयति—स्नेहत्वेति। लक्षणपक्षे द्रवत्वे अति[2]व्याप्तिस्ततो द्रवत्वत्वशून्य[3]* इति। [4]द्रवत्व(त्व)शून्य[3]* इत्युक्ते रूपादौ प्रसङ्गः, तत [4]उक्तं संग्रहेति[4]*। संग्रहो नाम चूर्णादेः पिण्डीभावः। अदृष्टादावतिव्याप्तिवारणाय असाधारणेति ॥६४॥

संस्कारं लक्षयति—संस्कारत्वेति। स्वस्य संस्कारस्योत्पत्तौ द्रव्यस्य या अवस्था तस्या आपादकः। संस्कारो हि वेगभावना[5]स्थितिस्थापकरूपस्त्रिविधोऽपि स्वोत्पत्तिसमयावस्थां द्रव्यस्य प्रतिपादयति। तत्र वेगश्चलनावस्थाम्, भावना ज्ञानवत्त्वावस्थाम्, [6]स्थितिस्थापको वेष्टनाद्यवस्थां प्रतिपादयतीत्यर्थः। संस्कारोत्पत्त्यवस्थापादकत्वं तदाधारद्रव्यस्याप्यस्तीति तद्वारणाय गुण इति। गुणः संस्कार

---

(A) "संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा।
गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्त्तिताः ॥" इति सामान्यगुणाः।

(B) अत्र 'द्वितीयादिस्यन्दनहेतौ विभागेऽतिव्याप्तिस्तत एकेति' इति क-पुस्तकधृतं पाठान्तरम् इतश्चारुतया प्रतिभाति।

---

1. 'र्द्रव्यत्वम्' ख। 2. '-व्याप्तिवारणाय द्रवत्वशून्य इति, द्रवत्वजात्यनधिकरणमित्यर्थः' ख। 3. इदं नास्ति क। 4. इदं नास्ति ख। 5. '-स्थितस्था-' ख। 6. 'स्थितस्था' ख।

धर्मत्वसामान्यवान् सुखासाधारणकारणं धर्मः ॥६६॥

अधर्मत्वसामान्यवान् दुःखासाधारणकारणमधर्मः ॥६७॥

शब्दत्वसामान्ययोगी श्रोत्रग्राह्यो गुणः शब्दः ॥६८॥

उत्क्षेपणत्वजातिमदूर्ध्वदेशसंयोगकारणं कर्म उत्क्षेपणम् ।

अपक्षेपणत्वजातिमदधोदेशसंयोगकारणं कर्म अपक्षेपणम् ।

आकुञ्चनत्वजातिमद् वक्रत्वापादकं कर्म आकुञ्चनम् ।

प्रसारणत्वजातिमद् ऋजुत्वापादकं कर्म प्रसारणम् ।

गमनत्वजातिमदनियतदेशसंयोगकारणं कर्म गमनम् ॥६९॥

इत्युक्ते 'पारिमाण्डल्येऽतिप्रसङ्गः[1], तदर्थमापादक इति। आपादकत्वं कारणत्वम्। पारि[2]माण्डल्यं परमाणुपरिमाणम्, तच्च न कारणमिति दोषो न भवति। [3]एवमुक्ते पटादिस्वरूपापादके तन्तुसंयोगादावतिव्याप्तिस्तदर्थमवस्थेति। एवमपि संयुक्तत्वावस्थापादके संयोगेऽतिव्याप्तिस्तदर्थमुत्पत्तीति। एवमपि रूपादावतिव्याप्तिरतः स्वेति (A) ॥६५॥

धर्मं लक्षयति—धर्मत्वेति। लक्षणपक्षे अधर्मे अतिव्याप्तिवारणाय सुखेति। [4]'सुखकारणं धर्म इत्युक्ते ईश्वरादौ प्रसङ्गस्ततोऽसाधारणेति'*। आत्मादिवारणाय असाधारणेति ॥६६॥

अधर्मं लक्षयति—अधर्मत्वेति। [5]लक्षणपक्षे धर्मेऽतिव्याप्तिवारणाय दुःखेति[5]* ॥६७॥

शब्दं लक्षयति—शब्दत्वेति। गगनवृत्तिविशेषगुणवृत्तिरूपा[6]वृत्तिजातिः शब्दत्वम्। लक्षणपक्षे सुखादावतिव्याप्तिवारणाय श्रोत्रग्राह्य इति। श्रोत्रग्राह्यत्वं शब्दत्वेऽप्य[7]स्तीति गुण इति। गुणत्वे [8]तु प्रमाणमुक्तमेव ॥६८॥

कर्मावान्तरभेदान् लक्षयति उत्क्षेपणत्वेति। ऊर्ध्वदेशसंयोगहेतुक्रियावृत्तिकर्मत्वावान्तरजातिरुत्क्षेपणत्वम्। एवमुत्तरत्राप्यूह्यम्। अपक्षेपणादावतिव्याप्ति-

(A) लक्षणे स्वत्वं तत्तदवस्थानां परिचायकमिति नात्माश्रय इति विभावनीयम्।

1. 'परिमाण्डिल्ये' ख। 2. '-माण्डिल्यं तु' ख। 3. 'एवमित्युक्ते' ख। 4. अयमंशः क-पुस्तके नास्ति। 5. इदं क-पुस्तके पाठान्तररूपेणाधो धृतम्। 6. '-वृत्तिजातिः' क। 7. ख-पुस्तके 'अस्ति' इति नास्ति। 8. इदं नास्ति क।

व्यापकमात्रं सामान्यं परम्। व्याप्यमात्रं सामान्यमपरम्। व्याप्यव्यापकोभयरूपं सामान्यं परापरम् ॥१००॥

अनादिः सान्तः प्रागभावः। सादिरनन्तः प्रध्वंसाभावः। अनादिरनन्तः संसर्गाभावोऽत्यन्ताभावः। तादात्म्यनिषेधोऽन्योन्याभावः ॥१०१॥

---

वारणाय ऊर्ध्वदेशसंयोगेति। [1]कारणमित्युक्ते (A)अपक्षेपणाधारे द्रव्ये[1]*ऽतिव्याप्तिस्ततः कर्मेति। (B)[2]अपक्षेपणादौ तद्वारणाय वक्रत्वेति[2]*। आकुञ्चनाधारे तद्वारणाय कर्मेति। (C)इतरत्र कर्मण्यतिव्याप्तिवारणाय ऋजुत्वेति। शेषं पूर्ववत्। (D)अन्यत्र कर्मण्यतिव्याप्तिवारणाय अनियतदेशसंयोगेति। शेषं सुगमम् ॥ ९९ ॥

सामान्यभेदस्य लक्षणमाह—व्यापकेति। अपरसामान्यादावतिव्याप्तिवारणाय व्यापकेति। व्यापकमात्रं परमित्युक्ते गगनादावति[3]व्याप्तिस्ततो वक्ति[3]* सामान्यमिति। व्यापकं सामान्यं परमित्युक्ते परापरेऽति[4]व्याप्तिस्ततो मात्रमिति[4]*। व्याप्यमात्रमित्युक्ते असम्भवस्तदर्थं सामान्यमिति। व्याप्य[5]व्यापकमित्युक्ते[5]* वह्न्यादावतिव्याप्तिरत उक्तम् सामान्यमिति। शेषं सुगमम् ॥१००॥

विशेषसमवाययोरवान्तरभेदाभावात् अभावभेदान् लक्षयति अनादिरिति। गगनादावतिव्याप्तिवारणाय सान्त इति। [6]घटादावतिव्याप्तिवारणायानादिरिति। (E)रूपादावतिव्याप्तिवारणाय अनन्त इति। [7]आत्मादावतिव्याप्तिवारणाय सादि-

---

(A) अत्र कारणान्तोक्तौ उत्क्षेपणाधारद्रव्य एवातिव्याप्तिसम्भवेन तदपहाय अपक्षेपणाधारपर्यन्तानुसरणे बीजं चिन्त्यम्। उत्क्षेपणस्थाने प्रामादिको वा अपक्षेपणपाठः।

(B) उत्क्षेपणलक्षणव्याख्यानेन अपक्षेपणस्यापि सुगमीकृतत्वात्तदपहाय आकुञ्चनं व्याचष्टे—अपक्षेपणेति।

(C) प्रसारणं व्याचष्टे—इतरत्रेति।

(D) गमनलक्षणव्यावृत्तिमाह—अन्यत्रेति।

(E) प्रध्वंसाभावलक्षणं व्याचष्टे—रूपादाविति।

---

1. 'कारणान्त इत्युक्ते अपक्षेपणाधारद्रव्ये' ख। 2. 'उत्क्षेपणेऽतिव्याप्तिवारणाय अधोदेशसंयोगेति। कारणान्त इत्युक्ते अपक्षेपणाधारद्रव्येऽतिव्याप्तिः ततः कर्मेति। विनश्यदवस्थद्रव्यगते कर्मण्यनाकुञ्चनेऽतिव्याप्तिवारणाय आपादकमिति। अपक्षेपणादौ तद्वारणाय वक्रत्वेति' ख। 3. '-व्याप्तिवारणाय' क। 4. '-व्याप्तिरत उक्तम्, मात्रमिति। व्याप्यं सामान्यमपरमित्युक्ते परापरेऽति-व्याप्तिवारणाय मात्रेति' ख। 5. 'व्यापकरूपं परापरमित्युक्ते' ख। 6. 'घटादौ तद्वा-' ख। 7. 'आत्मादौ तद्वार-' ख।

**नित्यत्वं प्रध्वंसविरहः। अनित्यत्वं प्रध्वंसवत्त्वम् ॥१०२॥**

**निरवयवः क्रियावान् परमाणुः ॥१०३॥**

रिति। (A)अन्योन्याभावेऽतिव्याप्तिवारणाय संसर्गेति। (B)अन्योन्याभावोऽत्र नित्यानां विवक्षितः, अनित्यान्योन्याभावस्य उत्पत्तिविनाशयोर्वक्ष्यमाणत्वात् नातिव्याप्तिः। [1]प्रागभावप्रध्वंसाभावयो[1]*रतिव्याप्तिनिवारणार्थमनादिरनन्त इति (C)। (D)निषेध इत्युक्ते प्रागभावादावति[2]व्याप्तिरत उक्तं तादात्म्येति। घटः पटो न भवतीति घटे पटतादात्म्यमारोप्य निषिध्यते इति तादात्म्यनिषेध इत्यर्थः ॥१०१॥

नित्या परमाणुरूपेत्यत्र नित्यत्वं लक्षयति—नित्यत्वमिति। विरहो नित्यत्वमित्युक्ते नित्यत्वविरहेऽनित्यत्वे अतिव्याप्तिः, अत उक्तम् प्रध्वंसेति।(E) [3]प्रध्वंसेऽतिव्याप्तिवारणाय विरह[3]* इति। प्रध्वंसवत्वं तत्प्रतियोगित्वं प्रध्वंसोपलक्षितसत्तायोगित्वं [4]वा इत्यर्थः ॥१०२॥

परमाणुं लक्षयति—निरवयव इति। [5]द्व्यणुकादावतिव्याप्तिवारणाय निरवयव इति। गगने तद्वारणाय क्रियावानिति। मनसोऽप्यणुपरिमाणत्वेन लक्ष्यत्वान्नातिव्याप्तिः। (F)यद्वा मनोलक्षणे स्पर्शशून्यत्वेन विशेषणादत्र स्पर्शवत्वं विवक्षितम् ॥१०३॥

---

(A) अत्यन्ताभावलक्षणं व्याचष्टे—अन्योन्याभावे इति।

(B) अन्योन्याभावोऽत्रेत्यादिर्नातिव्याप्तिरित्यंशो यद्यपि (*-चिह्नितटिप्पन्याम् अधिकपाठतया धृते वाक्ये 'संसर्गेती'ति पदात् परं केवलं क-पुस्तक एव पठितस्तथाऽपि मुद्रितपूर्ववाक्येनैवास्य सम्बन्धात् स्थानविशेषपक्षपातितया एवं मुद्रितः।

(C) अतः परं क-ख-पुस्तकयोर्दृश्यमानः 'अनादिरनन्तोऽभावः (क-पुस्तके अभावपदं नास्ति) अत्यन्ताभाव इत्युक्ते पुनरन्योन्याभावे प्रसङ्गस्ततः संसर्गेति' इत्यंशः पूर्ववाक्यस्यैव व्याख्यानभूता टिप्पनीति परित्यक्तः।

(D) अन्योन्याभावलक्षणं व्याचष्टे निषेध इति।

(E) प्रध्वंसपदोक्त्या प्रध्वंसप्रतियोगित्वविरहो नित्यत्वमिति प्राप्तम्। तथा च अनित्यत्वं प्रध्वंसप्रतियोगित्वम्, नित्यत्वं तु तद्विरह इति नातिप्रसङ्ग इति भावः।

(F) परमाणुपदस्य पार्थिवादौ प्रयोगबाहुल्यमभिसन्धायाह यद्वेति।

---

1. 'प्राक्प्रध्वंसयो-' ख। 2. '-व्याप्तिवारणायोक्त' क। 3. इदं क-पुस्तके पाठान्तरतया अधो धृतम्। 4. 'च' क। 5. 'घटेऽति-' ख।

**द्रव्यसमवायिकारणमवयवः । द्रव्यानारम्भकं कार्यद्रव्यमन्त्यावयवि ॥१०४॥**

**प्रागभाववत् कार्यम् ॥ १०५ ॥**

**भोगायतनमन्त्यावयवि शरीरम् ॥ १०६ ॥**

---

निरवयवत्वस्यावयवनिरूप्यत्वादवयवं लक्षयति—द्रव्येति । अन्त्यावयविनि घटादावतिव्याप्तिवारणाय द्रव्येति । द्रव्यकारणमित्युक्ते ईश्वरादावतिप्रसङ्गः, ततः समवायीति । शेषं सुगमम् ।

शरीरलक्षणेऽन्त्यावयविज्ञानाय तल्लक्षणमाह—द्रव्येति । यद्यप्युद्देशानन्तरं लक्षणस्य वक्तव्यत्वात् शरीरलक्षणानन्तरं भोगादिवदन्त्यावयवी लक्षयितुमुचितः, तथाप्यत्र द्रव्यपदव्यवच्छेद्यत्वेन प्राप्तत्वाद् देहलीप्रदीपन्यायेन उभयत्रोप[1]काराय अत्रैव लक्षित इत्यदोषः । द्रव्यमन्त्यावयवीत्युक्ते परमाण्वादावतिव्याप्तिः, ततः कार्येति । एवमुक्ते द्व्यणुकादौ प्रसङ्गस्ततोऽनारम्भकमिति । एवं च असम्भवः, अन्त्यावयविनां शरीरादीनां स्वगतरूपादेरारम्भकत्वात्, ततो द्रव्येति । द्रव्यानारम्भकमित्युक्ते रूपादौ(A), ततो द्रव्यमिति । द्रव्यानारम्भकं द्रव्यमित्युक्ते गगनादौ, ततः कार्येति ॥ १०४ ॥

कार्यं लक्षयति—प्रागभाववदिति । प्रागभावप्रतियोगि कार्यमित्यर्थः । अन्यथा कार्योत्पत्त्यनन्तरं प्रागभावाभावात् प्रागभाववत्त्वमसम्भवि स्यादिति ॥ १०५ ॥

भोगेति । भोगस्य वक्ष्यमाणलक्षणस्याऽऽयतनम् अन्त्यावयवि [2]यत् तत् शरीरमित्यर्थः । अन्त्यावयवि शरीरमित्युक्ते घटेऽतिव्याप्तिः ; तदर्थमायतनमिति । एवमप्यनिवृत्तिः, तस्यापि किञ्चिदायतनत्वात्, अत उक्तम्—भोगेति । यदा तु वक्ष्यमाणलक्षणानुसारी आयतनशब्दः तदा तेनैव व्यावृत्तिसिद्धेर्भोगपदं स्वरूपकथनायैव । यदा तु आयतनपदम् आधार[3]मात्रवाचि तदा सार्थकमिति मन्तव्यम् ।

अथवा वक्ष्यमाणं लक्षणं भोगायतनस्य [4]एव लक्षणं नायतनमात्रस्येति भोगपदं सार्थकम् । भोगायतन[5]मित्येतावत्युक्ते[5]* मनस्यतिव्याप्तिस्तदवच्छिन्ने[6] आत्मनि भोगजननात्[6] ततं उक्तम् अवयवीति । एवं च हस्तादावतिव्याप्तिस्तत उक्तम् अन्त्येति ॥ १०६ ॥

---

(A) अतिव्याप्तिरिति सम्बध्यते । एवमन्यत्रापि ।

---

1. '-कार्यतया'क । 2. इदं क-पुस्तके नास्ति । 3. ख-पुस्तके 'मात्र'पदं नास्ति । 4. इदं क-पुस्तके नास्ति । 5. '-मित्युक्ते' ख । 6. अत्र 'अपि' पदमधिकम् ख ।

**स्वसमवेतसुखदुःखान्यतरसाक्षात्कारो भोगः ॥ १०७ ॥**

**यदवच्छिन्ने आत्मनि भोगस्तदायतनम् ॥ १०८ ॥**

**साक्षात्कारिज्ञानकरणमिन्द्रियम् ॥ १०९ ॥**

---

भोगलक्षणमाह—स्वेति। स्वस्मिन् भोक्तरि समवेते ये सुखदुःखे तयोरन्यतरस्य सुखस्य दुःखस्य वा यः साक्षात्कारः स भोग इत्यर्थः। साक्षात्कारो भोग इत्युक्ते घटसाक्षात्कारेऽपि भोगः स्यात् [1]अत उक्तम्—सुखेति। एवं च दुःखसाक्षात्कारे अव्याप्तिरतो दुःखेति। एवं चासम्भवः[2]* सुखदुःखयोर्युगपत् साक्षात्कारासम्भवात्; क्रमेण तयोः साक्षात्कारे अननुगमः, उभयत्रानुगतस्य धर्मस्यैकस्याभावात्; अत उक्तमन्यतरेति। अन्यतरत्वं तदन्यान्यत्वम् उभयत्रानुगतमित्यर्थः। सुखदुःखान्यतरसाक्षात्कारो भोग इत्युक्ते ईश्वरसाक्षात्कारे, अतः स्वसमवेतेति। ईश्वरस्य शरीराद्यभावेन तज्जन्यादृष्टाभावात् तदधीनयोः स्वसमवेतयोः सुखदुःखयोरभावात् न तत्साक्षात्कार ईश्वरस्येत्याशयः ॥ १०७ ॥

आयतनस्य लक्षणमाह—यदवच्छिन्ने इति। येन शरीरादिना अवच्छिन्ने सम्बद्धे आत्मनि भोगो जायते तत् शरीराद्यायतनमित्यर्थः। आत्मन्यतिव्याप्तिवारणाय यदवच्छिन्न इति। शरीराद्यवच्छिन्नेऽन्यत्र भोगाभावादसम्भवमाशङ्क्याह[3]—आत्मनीति ॥ १०८ ॥

इन्द्रियं लक्षयति—साक्षात्कारीति। [4]साक्षात्कारि, [5]यद् [6]ज्ञानं तस्य[6]* [7]करणं साधकतममित्यर्थः। करणमिन्द्रियमित्युक्ते छिदिक्रियाकरणे कुठारादावतिव्याप्तिरतो ज्ञानेति। एवं धूमादिलिङ्गे(A), अतः साक्षात्कारीति। साक्षात्कारिणः करणमित्युक्ते न कोऽपि दोषः। तथाऽपि साक्षात्कारित्वं धर्मो विषयनिष्ठो न ज्ञाननिष्ठ इति मतं निरसितुं ज्ञानसामानाधि[8]करण्यनिर्देश इति[8]* मन्तव्यम्। निरासस्तु साक्षात्त्वस्य विषयनिष्ठत्वे 'घटं साक्षात्करोमी'ति ज्ञानगतत्वेनानुभवो न स्यात् व्यवसायस्यैवैतदाकारप्रसङ्गाच्चेति(B)। यद्वा साक्षात्कारिपदस्य व्युत्पत्त्या चक्षुराद्यावतिव्याप्तिवारणाय ज्ञानपदम् ॥ १०९ ॥

---

(A) ज्ञायमानलिङ्गस्य करणत्वमिति मतमाश्रित्येदमुक्तम्।

(B) अतः परं क-पुस्तके 'व्यवसायज्ञानस्य साक्षात्त्वं साध्यते नाव्यवसायस्य तस्याविषयत्वात्' इत्यधिकोऽंशः टिप्पनीति प्रतिभाति।

---

1. इदं ख-पुस्तके नास्ति। 2. इदं क-पुस्तके नास्ति। 3. क-पुस्तके 'आह' इति नास्ति। 4. इतः पूर्वं क-पुस्तके 'साक्षात्कारीति तत्' इत्यधिकम्। 5. 'तद्' क। 6. 'ज्ञानं च तस्य' क। 7. 'कारणम्' ख। 8. '-करण्यमिति' ख।

**आत्मनो भोगकारणं विषयः ॥ ११० ॥**

**पार्थिवमात्रेन्धनं तेजो भौमम्। जलमात्रेन्धनं तेजो दिव्यम्। पार्थिवजलेन्धनं तेज औदर्यम्। निरिन्धनं तेज आकरजम्। तच्च सुवर्णादि ॥ १११ ॥**

भोगकारणं विषय इत्युक्ते आत्मन्यतिव्याप्तिरत उक्तम् आत्मन इति। आत्मनः सम्बन्धी यो भोगः तस्य कारणमित्यर्थः। तथा च आत्मातिरिक्तं कारणं प्रतीयते। यथा राज्ञो धनस्वामी भद्रसेन इत्युक्ते राजातिरिक्तः प्रतीयते तद्वीयधनस्वामी तद्व-दित्यर्थः। एवमपीश्वरा[1]दौ दोषप्रसङ्गः, ततोऽसाधारणेति द्रष्टव्यम्। (A)ज्ञायमानेति पाठे इन्द्रियादौ प्रसङ्गवारणाय तद्विशेषणम्, (B)ईश्वरादेरप्यनेनैव[2] व्यावृत्तिस्तदा। गन्धवत्त्वे सति आत्मनो भोगकारणं पार्थिवो विषयः। स्नेहवत्त्वे सत्यात्मनो भोग-[3]कारणमप्याप्यो[4]* विषयः इत्यादि स्वयमूहनीयम् ॥ ११० ॥

तैजसानां विषयभेदानां लक्षणमाह—पार्थिवेति। दिव्यादावतिव्याप्तिवारणाय पार्थिवेन्धनमिति। इन्धनं दीपनम्। एवं च औदर्ये अतिव्याप्तिरतो मात्रेति। तस्य च अशितपीताद्युभयेन्धनत्वाद् न दोषः। तेजःपदाभावे निषादस्थपतिन्यायेन कर्म-धारय एव स्यात् तथा चासम्भवः, ततो बहुव्रीहिसमासज्ञापनाय तेजःपदम्।

(C)निषादस्थपतिन्यायस्त्वेवम्—'एतया निषादस्थपतिं याजये'दिति श्रूयते। तत्र सन्देहः—निषादानां (D) स्थपतिमिति षष्ठीतत्पुरुष उत निषादं च तं स्थपतिं चेति कर्मधारय [5]इति। तत्र पूर्वपक्षः—[5]षष्ठीतत्पुरुषसमास एवेति। तथा [6]च

(A) एतेन ज्ञायमानभोगकारणमिति पाठान्तरमनुमीयते। इन्द्रियाणां स्वरूपसतामेव ज्ञानकारणत्वाद् विषयाणां च ज्ञायमानानामेव भोगहेतुत्वात् नातिव्याप्तिरव्याप्तिर्वा।

(B) एतत्कल्पे असाधारण्यनिवेशप्रयोजनाभावमाह—ईश्वरादेरिति।

(C) एतद्ग्रन्थार्थो विस्तरेण पूर्वमीमांसायां षष्ठाध्यायस्य प्रथमे पादे 'स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्' इत्येकपञ्चाशत्तमसूत्रे तद्भाष्ये च द्रष्टव्यः।

(D) क-पुस्तके स्थपतिमित्यतः परं 'स्वामिनम्' इत्यंशः केनचित् कृता टिप्पनीति बुद्ध्या परित्यक्तः, एवमुत्तरत्रापि। निषादस्थपतेर्लौकिके अग्नौ यागाधिकारो मीमांसादर्शने षष्ठाध्याये अष्टमपादे तृतीयाधिकरणे उक्तः।

1. '-रादौ प्र-' ख। 2. ख-पुस्तके 'एव' इति नास्ति। 3. '-कारणमाप्यो' ख। 4. ख-पुस्तके इदं नास्ति। 5. 'षष्ठीसमासः' क। 6. 'च सति नि-' ख।

## सकलकारणयौगपद्यमुत्पत्तिः ॥ ११२ ॥

निषादानां [1]स्थपतिः स्वामी कश्चित् प्राप्तविद्यो ब्राह्मणादिर्याजनीयः, स च कर्मण्यधिकारी, अर्थित्वात् समर्थत्वाद् विद्वत्त्वाद् अपर्युदस्तत्वाच्च। कर्मधारये त्वनधीतवेदः शूद्रोऽधिकारी वाच्यः, तच्चायुक्तम् अपशूद्राधिकरणविरोधादिति प्राप्ते "[2]प्रत्युच्यते षष्ठीसमासाश्रयणे षष्ठ्यर्थे लक्षणापत्तिः। लक्षणा हि जघन्या वृत्तिः। न च लुप्ता षष्ठी बोधयिष्यति, लोपस्याभावरूपतयाऽबोधकत्वात्। कर्मधारये तु न लक्षणा द्वितीयायाः श्रूयमाणत्वात्, समानाधिकरणश्रुतेर्बलीयस्त्वात् च"। प्रथमपदस्योपरि तत्रापि विभक्तिर्न श्रुतेति चेत्—न, अभेदे हि विशेषणविशेष्ययोरेकैव विभक्तिः, सा च श्रूयमाणा उभयत्र सम्बध्यते, अतो नाश्रुतविभक्तिः कल्पनीया कर्मधारये, त्वन्मतेऽश्रुता षष्ठी कल्पनीया, अतो गौरवम्। न चाध्ययनाभावादनधिकारो निषादस्य एतद्विधिबलादेव एतद्विधौ यावद[4]पेक्ष्यते तावत्पठनानुज्ञानात्; यथा—वर्षासु रथकारोऽग्नीनादधीतेत्यत्र। न चापशूद्राधिकरणविरोधः, तस्य स्थपतिनिषादव्यतिरिक्तविषयत्वेनापि पर्यवसानात्, सामान्याद् विशेषस्य बलीयस्त्वात्। तस्मात् कर्मधारयबलात् स्थपतिनिषाद एव "[5]अनयेष्ट्या यजेतेति सिद्धम्, "[6]यजनस्य वृत्तित्वेन प्राप्तत्वात् याजयेदिति विभक्तिविपरिणामात्।

तेजो द्रव्यमित्युक्ते भौमादावतिव्याप्तिरतो जलेन्धनमिति। एवं च औदर्ये, अतो मात्रेति। शेषं पूर्ववत्। पूर्वोक्तयोरुभयोरतिव्याप्तिवारणाय पार्थिवजलेन्धनमिति। सुगममन्यत्। तेज आकरजमित्युक्ते अन्यत्राति[7]व्याप्तिरतो निरिन्धनमिति। आकरजस्वरूपमाह—तच्चेति। आदिपदाद् रजतताम्रकांस्य-त्रपु-सीसादयो ग्राह्याः (A) ॥ १११ ॥

औपाधिककालभेदस्य लक्षणमाह—सकलेति। ननु यौगपद्यमुत्पत्तिरित्युक्ते घटपटयौगपद्यमुत्पत्तिः स्यादत उक्तं कारणेति। द्वित्राणां कारणानां मेलने अतिव्याप्तिवारणाय सकलेति। ननु यौगपद्यं कथमुत्पत्तिः? तदनन्तरभावित्वादुत्पत्तेरिति चेत्—मैवम्, उत्पत्त्यनन्तरं ह्यात्मलाभः, न त्वात्मलाभ एवोत्पत्तिरिति युक्तमुक्तं—यौगपद्यमुत्पत्तिरिति ॥ ११२ ॥

(A) सुवर्णस्य तैजसत्वसिद्धये अनुमानं श्रुतिश्च प्रमाणे तत्र तत्र प्राचीनैः प्रदर्शिते, रजतताम्रकांस्यादीनां तैजसत्वसाधकं प्रमाणं तु अवहितैरनुसन्धेयम्।

1 इदं ख-पुस्तके नास्ति। 2. 'प्रति' इति ख-पुस्तके नास्ति। 3. इदं क-पुस्तके नास्ति। 4. '-पेक्षितं' ख। 5. 'रौद्रेष्ट्या' ख। 6. 'याजनस्य' क। 7. '-व्याप्तिवारणाय' क।

अनेकेषामेकक्षणसम्बन्धो यौगपद्यम् ॥ ११३ ॥

विभागानुत्पाद्यविभागप्रागभावसम्बन्धकर्मावच्छिन्नः कालः क्षणः । तन्मात्रस्थायि क्षणिकम् ॥ ११४ ॥

स्थितिर्वर्तमानत्वम् । तच्च प्राक्सम्बद्धस्वाभावरहितस्वरूपवत्त्वम्, स्वकार्यप्रागभावसम्बन्धित्वं वा ॥ ११५ ॥

---

यौगपद्यं लक्षयति—अनेकेषामिति । [1]'सम्बन्धो यौगपद्यमित्युक्ते घटपटसम्बन्धेऽतिव्याप्तिरतः क्षणेति । एवमेकस्यानेकक्षणसम्बन्धे, अत एकेति । एवमप्येकस्यैकक्षणसम्बन्धे, अतोऽनेकेषामिति'* ॥ ११३ ॥

प्रसङ्गागतं क्षणं लक्षयति—विभागेति । [2]"विभागेनानुत्पाद्यमानो"* यो विभागः कर्मजः तस्य यः प्रागभावः, तेन सम्बद्धं यत् कर्म तेनावच्छिन्नो यः कालः स क्षण" इत्यर्थः । [3]कालः क्षणः"* इत्युक्ते सकलकालस्य क्षणत्वापत्तिः, ततोऽवच्छिन्नेति । एवं पक्षाहोरात्रादौ, अतः कर्मेति । एवमपि द्वित्रेषु क्षणेषु कर्मयुक्तेषु अतिव्याप्तिरतः सम्बन्धेति । तथाऽपि [4]'घटपटसम्बन्धकर्मावच्छिन्न'*द्वित्रिक्षणेष्वतिव्याप्तिरतः प्रागभावेति । एवमपि घटप्रागभावसम्बन्धकर्मावच्छिन्नेऽतिव्याप्तिरतो विभागेति । तथाऽपि [5]"प्रागभावसम्बन्धः क्षण इत्युक्ते प्रागभावस्य बहुकालव्यापित्वात् तत्रातिव्याप्तिरतो"* विभागानुत्पाद्येति । विभागानुत्पाद्यविभागप्रागभावसम्बन्धः क्षण इत्युक्ते प्रागभावस्य [6]अपि बहुकालव्यापित्वात् तत्रातिव्याप्तिरतः कर्मेति । एतदुक्तं भवति—विभागप्रागभावः कर्मणः पूर्वमपि [7]विद्यते, कर्म तु विभागोत्पत्त्यनन्तरमपि, ततः क्रियोत्पत्तिसमये विभागप्रागभावकर्मणोर्यः सम्बन्धः तदाधारः कालः क्षण [8]इत्यर्थः । अथवा कालोपाध्यव्यापकः कालोपाधिः क्षण इति । क्षणमात्रावस्थायि क्षणिकमित्यपि प्रसङ्गादुक्तम् ॥ ११४ ॥

स्थितिं लक्षयति—स्थितिरिति । किं तद् वर्त्तमानत्वम्, [9]अत आह—तच्चेति । प्राक् [10]सम्बद्धो योऽयं स्वस्य घटादिकार्यस्याभावः तेन रहितं यत् स्वरूपं तद्वत्त्वं वर्त्तमानत्वमित्यर्थः । स्वरूपवत्त्वं वर्त्तमानत्वमित्युक्ते विनाशेऽतिव्याप्तिरतोऽभाव-

---

1. अयमंशः क-पुस्तके नास्ति । 2. 'विभागानुत्पाद्यो' ख । 3. इदं ख-पुस्तके नास्ति । 4. 'घटसम्बन्धकर्मयुक्त-' ख । 5. 'विभागजविभागप्रागभावसम्बन्धकर्मावच्छिन्ने क्षणचतुष्टयेऽतिव्याप्तिरतो' ख । 6. इदं क-पुस्तके नास्ति । 7. 'वर्त्तते' ख । 8. 'इति' ख । 9. 'इति' ख । 10. 'सम्बन्धो' ख ।

विनाशः प्रध्वंसः ॥ ११६ ॥

शरीरसम्बन्धेन ज्ञानवत्त्वं क्षेत्रज्ञत्वम्। प्रत्यात्मसमवेतधर्माधर्मोपगृहीतत्वं प्रत्यात्मनिष्ठत्वम्॥ ११७ ॥

सितादीनां सप्तानां सितत्वादिकं लक्षणम्। मधुरादीनां मधुरत्वादिकम्। गन्धयोः सुरभित्वासुरभित्वे। शीतादीनां शीतत्वादिकम्। एकत्वादीनामेकत्वत्वादिकम्। अणुत्वादीनामणुत्वत्वादिकम् ॥ ११८ ॥

रहितेति। यस्य कस्याप्यभावरहितस्वरूपवत्त्वं विनाशेऽप्यस्तीति[1] वक्ति—स्वेति। विनाशस्याभावान्तराभावात् न दोषः। एवं चोत्पत्तावतिव्याप्ति[2]रतः प्राक्सम्बद्धेति। उत्पत्तिस्तु सकलकारणयौगपद्यस्वरूपा, साऽवर्त्तमानघटादेः प्रागभावसहितैवेति[3] न प्राक्सम्बद्धस्वाभावरहितेति न दोषः। वर्त्तमानत्वस्य वा स्थितेर्वा लक्षणान्तरमाह—स्वकार्येति। प्रागभाव[4]सम्बद्धत्वं विनाशेऽप्यस्तीति कार्यपदम्। एवमपि विनाशे उत्पत्तौ चाति[5]व्याप्तिरत उक्तम्—स्वकार्येति। स्वस्य घटादेः कार्यं रूपादि तत्प्राग[6]भाववत्त्वमित्यर्थः। उत्पत्तिविनाशयोस्तु स्वनिष्ठकार्याभावात् न तत्प्राग[7]भाववत्त्वमिति भावः ॥ ११५ ॥

विनाशलक्षणं स्पष्टम् ॥ ११६ ॥

नित्यज्ञानादिमत्त्वात् परमात्मनो लक्षणं स्पष्टमिति मत्वा जीवस्य लक्षणमाह—शरीरेति। ईश्वरेऽतिव्याप्तिवारणाय शरीरसम्बन्धेनेति। शरीरसम्बन्ध इत्युक्ते गगनादौ, ततो ज्ञानवत्त्वमिति। प्रत्यात्मेति। प्रत्येकमात्मनि समवेतौ यौ धर्माधर्मौ ताभ्यामुपगृहीतत्वं स्वीकृतत्वं प्रत्यात्मनिष्ठत्वमित्यर्थः। उपगृहीतत्वं प्रत्यात्मनिष्ठत्वमित्युक्ते यदृच्छयोपगृहीतवस्त्रादावतिव्याप्तिरतोऽधर्मेति। एवं च नारकशरीरे [8]अतिव्याप्तिः[8]* ततो धर्मेति। धर्मोपगृहीतत्वमित्युक्ते देवादिशरीरे, तस्य केवलं धर्मेणैवोत्पन्नत्वात्, अतो [9]धर्माधर्मेति। धर्माधर्मयोरभावाद् धर्माधर्मोपगृहीतत्वं न सम्भवतीत्यत आह—प्रत्यात्मसमवेतेति। एकः सुखी अपरो दुःखीति सुखदुःखयोः प्रत्यात्मनियतत्वात् तत्कारणत्वेन धर्माधर्मावप्यात्मनि उपगन्तव्यावित्यर्थः ॥ ११७ ॥

1. '-ति ततो वक्ति' ख। 2. '-रतो वदति प्राक्-' ख। 3. '-तैव न' ख। 4. '-सम्बन्धत्वं' ख। 5. '-व्याप्तिवारणाय स्व-' क। 6-7. '-भावत्वमि-' क। 8. इदं क-पुस्तके नास्ति। 9. 'अधर्मेति' ख।

कर्मासमवायिकारणकः संयोगः कर्मजः। संयोगासमवायिकारणकः संयोगः संयोगजः। कर्मासमवायिकारणको विभागः कर्मजः। विभागासमवायिकारणको विभागो विभागजः ॥११९॥

आदित्यसंयोगोत्पाद्ये परत्वापरत्वे कालकृते। आदित्यसंयोगानुत्पाद्ये परत्वापरत्वे दिक्कृते ॥ १२० ॥

भावनाऽसाधारणकारणज्ञानं स्मृतिः ॥ १२१ ॥

---

सिता[1]द्यणुत्वादिपर्यन्तानां [2]तत्तज्जातियोगित्वमेव लक्षणम्। जातिश्च कपिलावृत्तिसकलसितवृत्तिरूपत्वावान्तरजातिः सितत्वमि[3]त्यादि बोध्यम् ॥ ११८ ॥

संयोगभेदं लक्षयति—कर्मासमवायीति। संयोगजसंयोगेऽतिव्याप्तिवारणाय कर्मेति। कर्मासमवायीत्युक्ते विभागेऽतिव्याप्तिरतो वक्ति संयोगेति। संयोगासमवायिकारणः संयोगज इत्युक्ते पटादावतिव्याप्तिः, तस्यापि [4]तन्त्वादिसंयोगासमवायिजन्यत्वात् अतः संयोग इति। [5]संयोगज इत्युक्ते कर्मणि अतिव्याप्तिस्ततः[5]* संयोगासमवायीति। एवं विभागलक्षणेऽपि [6]व्यावर्त्यं द्रष्टव्यम्। तत्र [7]फलपतनादावतिव्याप्तिस्ततो विभाग इति ॥ ११९ ॥

(A)आदित्यपरिवर्त्तनं तपनपरिस्पन्दः, तेनोत्[8]पाद्ये इति विग्रहः। दिक्कृतेऽतिव्याप्तिवारणाय [9]आदित्येति। [10]आदित्यपरिवर्त्तनोत्पाद्ये देशादिसंयोगे अतिव्याप्तिरतः परत्वापरत्वे इति। आदित्यसंयोगानुत्पाद्यं रूपाद्यपि भवति, अतः परत्वापरत्वे इति। कालकृते अतिव्याप्तिरत आदित्येति ॥ १२० ॥

बुद्ध्यवान्तरभेदान् लक्षयति—भावनेत्यादिना। वक्ष्यमाणेषु सर्वत्र धर्मपरं लक्षणं द्रष्टव्यं लक्ष्यनिष्ठत्वार्थम्। भावना संस्कारः, सोऽसाधारणं कारणं [11]यस्य तच्च तद्[11]*ज्ञानं चेति विग्रहः। ज्ञानं स्मृतिरित्युक्ते अनुभवेऽतिव्याप्तिरतोऽसाधारणकारणेति। एवमप्य[12]नुपपत्तिः, अनुभवस्यापि प्रमाऽप्रमारूपस्य गुणदोषासाधारण-

---

(A) 'आदित्यसंयोगे'त्यत्र 'आदित्यपरिवर्त्तने'ति पाठाभिप्रायेणेदम्।

---

1. '-द्यणुपर्य-' ख। 2. 'तज्जाति-' क। 3. '-त्यादिर्बोध्यम्' ख। 4. 'तन्तुसं-' क। 5. 'संयोगमात्रः कर्मजोऽपि भवति तद्वारणाय' ख। 6. 'व्यावृत्त' ख। 7. 'फलं पत-' ख। 8. '-पाद्यं' ख। 9. 'आदित्येत्यादि' ख। 10. 'आदित्यस्य परि-' क। 11. 'यस्य तत्तथा यच्च तद्' ख। 12. '-प्यनिवृत्तिः' ख।

**अस्मृतिरूपं ज्ञानमनुभवः। तत्त्वानुभवः प्रमा। अतत्त्वज्ञानमप्रमा। अनवधारणं ज्ञानं संशयः। अवधारणरूपातत्त्वज्ञानं विपर्ययः। अज्ञायमानकरणजन्यस्तत्त्वानुभवः प्रत्यक्षप्रमा। ज्ञायमानकरणजन्यस्तत्त्वानुभवो(A)ऽनुमितिप्रमा ॥ १२२ ॥**

---

कारणजन्यत्वात्, अतो भावनेति। भावनाव्यवहारेऽतिव्याप्तिवारणाय ज्ञानेति। भावनाकारणं [1]ज्ञानं स्मृतिरित्युक्ते प्रत्यभिज्ञायाम्, ततोऽसाधारणेति[1]*। [2]प्रत्यभिज्ञा इन्द्रियासाधारणकारणिकेति न दोषः[2]* ॥ १२१ ॥

स्मृतिरूपादन्यद् अस्मृतिरूपम्। घटादौ स्मृतौ चातिव्याप्तिवारणाय ज्ञानास्मृतिपदे। प्रमालक्षणेऽपि [3]घटादौ संशयादौ चातिव्याप्तिरतोऽनुभवतत्त्वपदे। एवमप्रमालक्षणमपि(B)। अवधारणं निश्चयज्ञानम्, तदन्यदनवधारणम्, तच्च तद्ज्ञानमिति विग्रहः। प्रमायामतिव्याप्तिवारणाय अनवधारणेति। घटादावतिव्याप्तिवारणाय ज्ञानेति। ज्ञानं विपर्यय इत्युक्ते प्रमायामतिव्याप्तिरतोऽतत्त्वेति। एवं संशयेऽतिव्याप्तिस्ततोऽवधारणेति। अवधारणरूपमित्युक्ते प्रमायामतिव्याप्तिरतोऽतत्त्वेति। अतत्त्वावधारणमित्येव लक्षणम्। ज्ञानपदं स्पष्टार्थम्। अज्ञायमानं करणमिन्द्रियम्, तज्जन्यस्तत्त्वानुभवश्चेति विग्रहः। तत्र अनुभवः प्रत्यक्षप्रमेत्युक्ते अनुमितावतिव्याप्तिरतोऽज्ञायमानेत्यादि। अज्ञायमानेत्युक्ते इन्द्रियसंयोगादौ अतिव्याप्तिस्ततस्तत्त्वानुभवेति। शेषं गतार्थम्। प्रत्यक्षप्रमायामतिव्याप्तिवारणाय ज्ञायमानेति। ज्ञायमानकरणं शब्दलिङ्गादि तज्जन्यइत्यर्थः। ज्ञायमानकरणधूमादिजन्यमशकनिवृत्तौ प्रसङ्गवारणाय तत्त्वानुभव इति। शेषं सुगमम् ॥ १२२ ॥

---

(A) न च ज्ञायमानसादृश्यजन्यायामुपमितौ ज्ञायमानपदजन्ये शाब्दबोधे चातिव्याप्तिरिति वाच्यम्, वैशेषिकनये तयोरनुमितावेवान्तर्भावादिति ध्येयम्।

(B) अप्रमालक्षणमपि एवं व्याख्येयमिति शेषः। तत्र गगनारविन्दादौ प्रमायां चातिव्याप्तिवारणाय ज्ञानपदातत्त्वपदे इति टीकाकृतामाशयः। अप्रमालक्षणेऽपीति सप्तम्यन्तपाठस्तु शैलीसिद्धो न क्वचिद् दृष्ट इति ध्येयम्।

---

1. 'ज्ञानमित्युक्ते प्रत्यभिज्ञानप्रत्यक्षेऽतिव्याप्तिवारणाय असाधारणकारणेति' ख। 2. 'प्रत्यभिज्ञानं तु इन्द्रियसन्निकर्षासाधारणकारणमित्यदोषः' ख। 3. 'घटत्वादौ' ख।

प्रमाऽयोगव्यवच्छिन्नं प्रमाणम्। प्रत्यक्षप्रमाऽयोगव्यवच्छिन्नं प्रत्यक्षप्रमाणम्। तच्चेश्वरघ्राण-रसन-चक्षुः-स्पर्शन-श्रोत्र-मनोलक्षणम् ॥१२३॥

अनुमितिप्रमाऽयोगव्यवच्छिन्नमनुमानम्। तच्च व्याप्ति-पक्षधर्मताविशिष्टलिङ्गज्ञानम् ॥१२४॥

---

प्रमाणं लक्षयति—प्रमेति। प्रमया अयोगोऽसम्बन्धः, तेन व्यवच्छिन्नं रहितं यत् तत् प्रमाणमित्यर्थः। एवं च ईश्वरे नित्या प्रमा सदा वर्त्तते इति प्रमाऽयोगव्यवच्छिन्न ईश्वरोऽपि प्रमाणम्। इन्द्रियलिङ्गे अपि प्रमाणे, तयोर्व्यापारवतोः सद्भावे प्रमा उत्पद्यत एवेति प्रमाऽयोगव्यवच्छिन्नत्वात्; प्रमायाः अव्यभिचारि प्रमाणमित्यर्थः। यद्यपि प्रमाऽयोगव्यवच्छिन्नत्वं सुत्रादाव[1]प्यस्ति तथाऽपि "तदन्यत्वं साधनाश्रययोरन्यतरत्वे सतीति "वा विवक्षितमित्यदोषः। तत्रायोगव्यव[4]च्छिन्नत्वं छिदाऽयोगव्यव[5]च्छिन्नपरशौ वर्त्तते इति तद्वारणाय प्रमेति। प्रमा प्रमाणमित्युक्ते फलेऽति[6]व्याप्तिः, ततोऽयोगव्यवच्छिन्नमिति। प्रत्यक्षलक्षणं सुगमम्। तद्भेदमाह—तच्चेति(A) ॥१२३॥

अनुमानं लक्षयति—अनुमितीति। प्रत्यक्षेऽतिव्याप्तिवारणाय अनुमितीति। अनुमानस्वरूपमाह—तच्चेति। व्याप्तिपक्षधर्मताभ्यां विशिष्टं यल्लिङ्गं तस्य ज्ञानमित्यर्थः। अनित्यः शब्दश्चाक्षुषत्वादिति—(B)स्वरूपासिद्धावतिव्याप्तिवारणाय[7] विशिष्टेति। अनित्यः शब्दः प्रमेयत्वादित्यनैका[8]न्तिकेऽतिव्याप्तिवारणाय[8]* व्याप्तीति। व्याप्तिविशिष्टलिङ्गज्ञानमित्युक्ते अनित्यः शब्दः सामान्यवत्त्वे सति चाक्षुषत्वादिति (C)विशेष्यासिद्धौ प्रसङ्गः, ततः पक्षधर्मतेति ॥१२४॥

---

(A) न चैवं प्रसिद्धं प्रत्यक्षस्य षोढात्वं व्याहतमिति वाच्यम्, जन्यप्रत्यक्षकरणस्यैव तथा विभागादिति ध्येयम्।

(B) स्वरूपासिद्धाविति व्याप्तिपक्षधर्मताविशिष्टलि[illegible]स्वरूपस्याऽसिद्धावित्यर्थः। तेन उत्तरत्र पक्ष[illegible]दर्शनेऽपि न पौनरुक्त्यम्।

(C) विशिष्टस्य हेतुत्वे स्वरूपासिद्धिस्त्रिधा भवति, पक्षे विशेष्याभावाद् विशेषणाभावप्रयोज्यविशिष्टाभावात् पृथक् तदुभयाभावाच्चेति। उदाहरणं चेदं प्रथमभेदस्यैवेति टीकाकृतामाशय इति प्रतिभाति।

---

1. '-प्यस्तीति तथा-' ख। 2. 'तदन्यत्वसा-' क। 3. क-पुस्तके 'वा' इति नास्ति। 4. '-च्छिन्नं छिदा-' ख। 5. '-च्छिन्न प-' ख। 6. '-प्रसङ्गः, अतो' ख। 7. '-णाय पक्षधर्मताविशि-' ख। 8. '-न्तिकव्युदासाय' ख।

व्याप्तिश्च व्यापकस्य व्याप्याधिकरण उपाध्यभावविशिष्टः सम्बन्धः ॥१२५॥

पक्षधर्मता तु व्याप्यस्य पक्षसम्बन्धः। व्यापकं साध्यम्। व्याप्यं लिङ्गम् ॥१२६॥

उपाधिश्च साधनाव्यापकत्वे सति साध्यसमव्याप्तिः ॥१२७॥

---

व्याप्तिं लक्षयति—व्याप्तिश्चेति। 'यस्मिन् कस्मिंश्चित् सम्बन्धेऽतिव्याप्तिरत'[1]* उक्तम्—व्यापकस्य व्याप्याधिकरण इति। व्याप्यमधिकरणं यस्य स तथा, साध्यस्य साधननिष्ठः सम्बन्ध इत्यर्थः। एवं च सोपाधिके (A)मैत्रीतनयत्वादिसम्बन्धे अतिव्याप्तिरत [2]उक्तम्—उपाध्यभावविशिष्ट इति। व्याप्यव्या[3]पकाभ्यां साधनत्व-साध्यत्वाभिमतधर्मौ विवक्षितौ ॥१२५॥

पक्षधर्मतामाह—(B)पक्षधर्मत्वमिति। पक्षसम्बन्धः पक्षधर्मत्वमित्युक्ते [4]पर्वतादावति-व्याप्तिरतो व्याप्यस्येति। व्याप्यव्यापकयोर्लक्षणमाह—व्यापकमिति। सुगमम् ॥१२६॥

उपाधिं लक्षयति—उपाधिश्चेति। अस्योदाहरणम्—मैत्र्याः सप्तमः पुत्रः श्यामो भवितुमर्हति [5]मैत्रीतनयत्वात् परिदृश्य[6]मानषट्पुत्रवदित्यनुमाने (C)शाकाद्यन्न-[7]परिणामभेद उपाधिः। उप समीपस्थे साधने स्वधर्मं [8](D)व्याप्तिमादधातीत्यु-पाधिरित्युच्यते। यथा जपाकुसुमं स्वसन्निहिते स्फटिके लौहित्यमादधदुपाधिः।

---

(A) नव्यास्तु मित्रातनयत्वहेतावस्योदाहरणं वदन्ति।

(B) एतेन मूले 'पक्षधर्मत्व'मिति पाठः टीकाकृत्सम्मत इति प्रतीयते।

(C) शाकाद्यन्नेति। 'शाकं चतुर्द्धा तत् पुष्पं छदकन्दफलैः सहे'ति निघण्टूक्तेः शाक-शब्दो यद्यपि पुष्पादिषु चतुर्षु वर्त्तते तथाऽपि पत्रशाके वास्तूकहिलमोचिकादौ प्रसिद्धः। गर्भिण्यास्तद्भूयिष्ठ आहारश्च तदपत्यानां कृष्णत्वे हेतुः, पत्रशाकानां कृष्णत्वात्। तथा हि आचक्षते भिषग्वराः—'यादृग्वर्णमाहारमुपसेवते गर्भिणी तादृग्वर्णप्रसवा भवती'ति।

(D) व्याप्तिमिति प्रकृताभिप्रायेण, स्फटिके लौहित्याधानेन जपाकुसुमादेरप्युपाधित्वस्य अनुपदं स्वयमेव स्वीकरणादिति ध्येयम्।

---

1. 'यः कश्चित् सम्बन्धो व्याप्तिर्न भवतीत्यत' ख। 2. इदं ख-पुस्तके नास्ति। 3. '-पकशब्दाभ्यां' ख। 4. '-पर्वतत्वादा-' ख। 5. 'मैत्रीपुत्रत्वात्' ख। 6. '-मानमैत्रीषट्-' ख। 7. '-परिणतिभेद' ख। 8. 'व्याप्तमा-' क।

अत्रोपाधेर्लक्षणं योज्यते—साधनस्य मैत्रीपुत्रत्वस्याव्यापकत्वे सति साध्येन [1]नरश्यामत्वेन समा व्याप्तिर्यस्य स तथा। तथा च यत्र [2]यत्र नरश्यामत्वं तत्र तत्र शाकाद्यन्नपरिणामः, यथा मैत्रीतनये [3]श्यामे। तथा च यत्र यत्र शाकाद्यन्नपरिणामः, तत्र तत्र नरश्यामत्वम्, यथा तत्रैव [4]मैत्रीपुत्रे इति साध्यसमा व्याप्तिः। तथा यत्र यत्र [5]मैत्रीपुत्रत्वं तत्र तत्र शाकाद्यन्नपरिणाम इति[5]* न व्याप्तिः, पक्षीकृते मैत्रीपुत्रे शाकाद्यन्नपरिणतेरनिश्चयात्, ततोऽयमुपाधिः। व्यावृत्तिस्तु साधनाव्यापक उपाधिरित्युक्ते अनित्यः शब्दः कार्यत्वाद् घटवदित्यत्र सदनुमाने सावयवत्वमुपाधिः स्यात्। भवति चायं साधनाव्यापकः। यद् यत् कार्यं तत् तत् सावयव[6]मिति न व्याप्तिः कर्मादौ व्यभिचारात्, अत उक्तम्—साध्यव्यापक इति। एवं च तत्र नातिव्याप्तिः, सावयवत्वस्य साधनाव्यापकत्वेऽपि साध्यव्यापकत्वाभावात्; यद् यदनित्यं तत्तत् सावयवमिति साध्यव्याप्तेर्गन्धादौ [7]व्यभिचारात्, अतः सावयवत्वं कार्यत्वे नोपाधिः। साध्यव्यापक उपाधिरित्युक्ते (A)पूर्वस्मिन्नेवानुमाने प्रमेयत्वमुपाधिः स्यात्, यदनित्यं तत् प्रमेयमिति साध्यव्याप्तेः सत्त्वात्, अत उक्तं साधनाव्यापकत्वे सतीति। एवं च नातिव्याप्तिः, यत् कार्यं तत् प्रमेयं न भवतीति साधनाव्यापकत्वात् (कत्वाभावात् ?), प्रत्युत यत् कार्यं तत् प्रमेयमिति साधनाव्याप्तेरेव सद्भावात्; अतः प्रमेयत्वं नोपाधिः। साधनाव्यापकत्वे सति साध्यव्यापक उपाधिरित्युक्ते [8]पूर्वानुमान एव[8]* शब्देतरत्वमुपाधिः स्यात्, तस्य यत् कार्यं [9]तत् शब्देतरदिति व्याप्तेः शब्दे पक्ष एव व्यभिचारेण साधनाव्यापकत्वात् यदनित्यं तत् शब्देतरदिति साध्यव्यापकत्वात् [10]च अत उक्तं समेति। [समा] साध्यपुरःसरा उपाधिपुरःसरा [11]च व्याप्ति [12]र्यस्य सा[12]* (सः?) समव्याप्तिः, यथा शाकाद्यन्नपरिणतिः। शब्देतरत्वे तु यद्यपि साध्यपुरःसरा व्याप्तिरस्ति तथाऽपि यत् शब्देतरत् तदनित्यमिति उपाधिपुरःसरा व्याप्तिर्नास्ति, आकाशे व्यभिचारात्, अतः समव्याप्तेरभावात् नायमुपाधिः। साध्यसमव्याप्तिरित्युक्ते अनित्या पृथिवी सावयवत्वादित्यत्र कृतकत्वमुपाधिः [13]स्यात् साध्यसमव्याप्तित्वात्, अत उक्तम्—साधनाव्यापकत्वे सतीति। कृतकत्वं च [14]सावयवत्वव्यापकमिति न साधनाव्यापकमतो[14]* नोपाधिः।

(A) इतः प्रभृति 'साधनाव्यापकत्वे सति साध्यव्यापक उपाधिरित्युक्ते' इत्यन्तः सप्रयोजनकोऽपि अंशः क-पुस्तके परित्यक्तः।

1. ख-पुस्तके 'नर'पदं नास्ति। 2. इदं क-पुस्तके नास्ति। 3. 'श्यामत्वे' क। 4. 'मित्रापुत्रे' ख। 5. 'इति व्याप्तिः' ख। 6. '-मिति व्याप्तिः' क-ख। 7. 'अतिव्याप्तिः' क। 8. 'सर्वानुमान एव' ख। 9. 'तत् तत्' ख। 10. इदं क-पुस्तके नास्ति। 11. इदं क-पुस्तके नास्ति। 12. 'र्यस्येति च' क। 13. इदं ख-पुस्तके नास्ति। 14. 'सावयवत्वस्याव्यापकमतो' क।

ननु उपाधिः कथं हेत्वाभासः, व्याप्तिपक्षधर्मतयोरन्यतरस्या[1]विघटनात्। यथा विरुद्धानैकान्तिकाभ्यां व्याप्तिर्विघट्यते[2] तथा न शाकाद्यन्नपरिणाम[3]सद्भावमात्रेण मैत्रीपुत्रत्वश्यामत्वयोर्व्याप्तिर्विघटिता भवति। न ह्यन्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वे [4]सति अन्यस्य साध्यव्याप्यत्वं [5]विघट्यते[5]* अतिप्रसङ्गात्। नाप्यसिद्धकालात्ययापदिष्टवत्(A) पक्षधर्मता विघट्यते उपाधिसत्त्वेऽपि मैत्रीपुत्रत्वस्य हेतोः पक्षनिष्ठत्वादतो [6]हेतो र्न दोष[6]* इति चेत्—मैवम्, व्यभिचारोन्नायकत्वेनोपाधेर्दोषत्वात्। तथा हि—साध्यव्यापक उपाधिः पक्षाद् व्यावर्त्तमानः सन् स्वव्याप्यं साध्यमादाय व्यावर्त्तते व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वात्। तथा[7]च साध्याभाववति पक्षे विपक्षरूपे वर्तमानो हेतुर्व्यभिचारी भवति। तदुक्तम्—

व्यभिचारोन्नयं कुर्वन्नुपाधिर्याति दोषताम्।
[8]एतदेव हि सर्वेषामुपाधीनां परायणम्॥ इति।[8]*

व्यभिचारो[9]न्नयनं त्वेवम्—अयं हेतुः साध्यव्यभिचारी साध्यव्यापकोपाधिव्यभिचारित्वात्, यो यद्व्यापकव्यभिचारी स तद्व्याप्यव्यभिचारी, यथा पृथ्वीत्वव्यापकद्रव्यत्वव्यभिचारी गुणत्वादिः पृथ्वीत्वव्यभिचारीति सामान्यतः, विशेषतस्तु मित्रापुत्रत्वं श्यामत्वव्यभिचारि शाकाद्यन्नपरिणामत्वेन व्यभिचारित्वात् ( शाकाद्यन्नपरिणामित्वव्यभिचारित्वात् ? ) प्रमेयत्ववदिति। विपक्षे बाधकस्तर्कः शाकाद्यन्नपरिणामनरश्यामत्वयोर्वैद्यकशास्त्रादेव कार्यकारणभावावगमात्, कारणाभावे कार्यश्यामत्वासम्भवः। पक्षीकृतमित्रापुत्रे शाकाद्यन्नपरिणतेरनिश्चयेऽपि साधनाव्यापकत्वसन्देहाद् भवत्येव सन्दिग्धोपाधिः। एवं [10]निषिद्धत्वेन्धनत्वादयो ( त्वार्द्रेन्धनादयो ? )[10]* ज्ञेया इत्यलमतिविस्तरेण॥ १२७॥

(A) ननु प्रसिद्धमसिद्धे पक्षधर्मताविघटनम्, बाधापरपर्याये कालात्ययापदिष्टे तु तत् कुतस्त्यमिति चेत्, उच्यते—'बाधे त्वसिद्धिरनैकान्तो वेति वदतामसङ्कीर्णबाधितमनङ्गीकुर्वतां मते हेतोर्व्याप्यत्वे यत्र साध्यस्य पक्षेऽभावस्तत्र हेतोरप्यभावस्यावश्यमङ्गीकरणीयत्वात्। तथाऽङ्गीकारबीजं तु यो यद्देशकालावच्छेदेन हेतुमान् स तद्देशकालावच्छेदेन साध्यवानिति व्याप्तेरभ्युपगम एवेति बोध्यम्।

1. '-विघट्टनात्' क। 2. '-घट्टते' क। 3. '-णाममात्रेण' ख। 4. इदं क-पुस्तके नास्ति। 5. '-व्याप्यत्वविघटके' क। 6. 'नायं दोष' ख। 7. '-ऽत्र' क। 8. इदं ख-पुस्तके नास्ति। 9. '-न्नयस्त्वेवं' क। 10. 'निषिद्धत्वार्द्रेन्धनत्वादौ न्नयम्' ख। 'निषिद्धत्वभावत्वार्द्रेन्धनत्वादयः' इति क-पुस्तके पाठान्तरतया धृतम्।

पक्षव्यापकः सप॰ स्पर्शी विपक्षशून्योऽबाधितविषयोऽसत्-प्रतिपक्षः केवलान्वयी ॥ १२८ ॥

पक्षव्यापकः सपक्षशून्यो विपक्षाद् व्यावृत्तोऽबाधितविषयोऽ-सत्प्रतिपक्षः केवलव्यतिरेकी ॥ १२९ ॥

---

केवलान्वयिहेतुं लक्षयति—पक्षव्यापक इति। पक्षव्यापकः केवलान्वयीत्युक्ते केवलव्यतिरेकिण्यतिव्याप्तिः, तदर्थं सपक्षस्पर्शीति। एवमुक्ते धूमानुमाने अन्वय-व्यतिरेकिणि, अतो विपक्षशून्य इति। विपक्षशून्य इत्युक्ते सर्वं क्षणिकं सत्त्वादिति अनध्यवसिते(A)ऽतिव्याप्तिरतः सपक्षस्पर्शीति। विपक्षशून्यः सपक्षस्पर्शीत्युक्ते शब्दो-ऽभिधेयश्चाक्षुषत्वाद् घटवदित्यत्र, अतः वक्ति पक्षव्यापक इति। चाक्षुषत्वस्य पक्ष-निष्ठत्वाभावात् न दोषः। व्यापकपदेनैव अभिधेयः शब्दो ॰णात्मकत्वादिति भागा-सिद्धोऽपि [1]व्युदासि। एतस्मिंतयोक्तौ वह्निरनुष्णः पदा[2]र्थत्वाज्जलवदिति बाधितेऽति-[3]व्याप्तिरतो अबाधितेति। एवम् अभिधेयः शब्दः प्रमेयत्वात्, अनभिधेयः शब्दः श्रावणत्वात्, व्यतिरेके घटवदिति सत्प्रतिपक्षेऽतिव्याप्तिरतोऽसत्प्रतिपक्ष इति ॥१२८॥

केवलव्यतिरेकिणं लक्षयति—पक्षव्यापकः सपक्षशून्य इति। विपक्षाद् व्यावृत्तः केवलव्यतिरेकीत्युक्ते अन्वयव्यतिरेकिण्यतिव्याप्तिरतः सपक्षशून्य इति। एतद्द्वयोक्तौ वेदः सर्वज्ञकर्तृकश्चाक्षुष[4]त्वात्, यः सर्वज्ञकर्तृको न भवति स चाक्षुषो न भवति, यथा—आत्मा इत्यसिद्धे प्रसङ्गः, अतः पक्षव्यापक इति। पक्षव्यापक इत्युक्ते केवला-न्वयिनि प्रसङ्गः, अतः सपक्षशून्य इति। एतद्द्वयोक्तौ सर्वम् अनित्यं सत्त्वादित्यत्र प्रसङ्गः, अतो विपक्षाद् व्यावृत्त इति। अयं [5]तु विपक्षाभावात् न विपक्षाद् व्यावृत्तः। विपक्षाभावस्तु सर्वस्य पक्षीकृतत्वात्। एतत्त्रयोक्तौ सर्वं कार्यं प्रधानजन्यं कार्यत्वादिति प्रत्य[6]क्षबाधितेऽनुमाने प्रसङ्गः, ततोऽबाधितविषय इति। एवमपि [7]सर्वं कार्यं सर्वज्ञ-जन्यं कादाचित्कत्वात् व्यति[8]रेके गगनवत्, सर्वं कार्यं सर्वज्ञजन्यं न भवति प्रमेयत्वात् आकाशवदिति सत्प्रतिपक्षे अतिप्रसङ्गः, ततोऽसत्प्रतिपक्ष इति ॥ १२९ ॥

(A) अत्र सर्वत्वेन वस्तुमात्रस्यैव पक्षतया सपक्षविपक्षव्यावृत्तत्वरूपमनध्यवसितत्वं प्रागुक्तक्रमेणाक्षतमिति बोध्यम्।

---

1. 'व्युदासित एव' क। 2. '-र्थत्वादिति-' क। 3. '-व्याभिचारवारणाय' क। 4. '-त्वादिति यः' ख। 5. इदं क-पुस्तके नास्ति। 6. '-त्वादिबा-' ख। 7. इदं क-पुस्तके नास्ति। 8. '-रेकेण' ख।

पक्षव्यापकः सपक्षस्पर्शी विपक्षाद् व्यावृत्तोऽबाधितविषयोऽसत्प्रतिपक्षोऽन्वयव्यतिरेकी ॥ १३० ॥

(A)सन्दिग्धसाध्यधर्मत्वेनोपात्तत्वं पक्षत्वम् । निश्चितसाध्याधिकरणत्वं सपक्षत्वम् । (B)निश्चितसाध्यानधिकरणत्वं विपक्षत्वम् ॥ १३१ ॥

अन्वयव्यतिरेकिणं लक्षयति—पक्षेति । पक्षव्यापक इत्युक्ते केवलव्यतिरेकिणि प्रसङ्गः, अतः सपक्षस्पर्शीति । 'एतद्द्वयोक्तौ केवलान्वयिनि, अतो विपक्षाद् व्यावृत्त इति । केवलान्वयिनि विपक्षाभावात् न तद्व्यावृत्तिः, विपक्षाद् व्यावृत्त इत्युक्ते पुनरेव केवलव्यतिरेकिणि, अतः सपक्षस्पर्शीति'* । एतद्द्वयोक्तौ अनित्यः शब्दश्चाक्षुषत्वे सति सामान्यवत्त्वादित्यत्र असिद्धभेदे, अतो वक्ति पक्षव्यापक इति । [2]एतद्द्वयोक्तौ परमाणवोऽनित्या मूर्त्तत्वाद् घटवदिति अन्वयव्यतिरेकिणि धर्मिग्राहकमानबाधितेऽतिव्याप्तिरतोऽबाधितेति । एवमपि शब्दोऽनित्यः कार्यत्वात्, नित्यः शब्दः श्रावणत्वादिति सत्प्रतिपक्षे अतिव्याप्तिरतोऽसत्प्रतिपक्ष इति ॥ १३० ॥

पक्षव्यापकत्वादि[3]ज्ञानाय पक्षादिलक्षणमाह—सन्दिग्धेति । सन्दिग्धं साध्यं यस्य तस्य भावस्तत्त्वं तेन, [4]इत्थम्भावे तृतीया । सन्दिग्धसाध्यवान्[5] पक्ष इत्यर्थः । उपात्तत्वं घटादावतिव्याप्तमतो विशिनष्टि—साध्यवत्त्वेनेति । एवं सपक्षेऽतिव्याप्तिः, तस्यापि साध्यवत्त्वेनोपात्तत्वात्, इत्थम्भावे तृतीयया मतुबर्थस्योक्तत्वात्, अतः सन्दिग्धेति । सन्दिग्धत्वेनोपात्तत्वं स्थाण्वादावतिव्याप्तमतो वक्ति साध्यत्वे ( साध्यवत्त्वे ? )नेति ।

अधिकरणत्वं सपक्षत्वमित्युक्ते विपक्षे यस्य कस्याप्यधिकरणेऽतिव्याप्तिरतः—साध्येति । एवं च पक्षे, अतो [6]निश्चितेति[6]* । निश्चितं [7]यत् साध्यं वह्निमत्त्वादि, तस्य अधिकरणम् आधारः, [8]स सपक्ष इत्यर्थः । निश्चितं च तत् साध्यानधिकरणं चेति विग्रहः । अनधिकरणमित्युक्ते असम्भवः, विपक्षस्यापि किञ्चिदधिकरणत्वात्, अतः

(A) अत्र 'सन्दिग्धसाध्यवत्त्वेने'ति पाठष्टीकाकारसम्मतः प्रतीयते । अस्माभिस्तु मुद्रिताकार एवात्र गृहीतः ।

(B) अत्र टीकासङ्गत्यनुरोधेन 'निश्चितसाध्याभावाधिकरणत्व'मिति मुद्रिताकारः परित्यक्तः ।

1. इदं ख-पुस्तके नास्ति । 2. 'एतत्त्रयोक्तौ' ख । 3. '-ज्ञप्त्यर्थं' ख । 4. 'इत्थम्भूतलक्षणे' ख । 5. '-वानुपात्तः' । 6. इदं ख-पुस्तके नास्ति । 7. इदं ख-पुस्तके नास्ति । 8. इदं ख-पुस्तके नास्ति ।

स्वार्थत्वमर्थरूपत्वम् । परार्थत्वं शब्दरूपत्वम् । शब्दस्याप्यनुमानविषयत्वेनाविनाभावोपजीवकत्वेन वा अनुमानत्वम् ॥ १३२ ॥

तत्र पक्षवचनं प्रतिज्ञा । लिङ्गस्य पक्षधर्मत्ववचनं हेतुः ।

---

साध्येति । एवमुक्ते वह्निमान् अयं पर्वतो धूमवत्त्वादिति प्रयोगे यदा(A) महाह्रदेऽपि कदाचिद् वह्नि[1]मत्त्वम् अस्ति न वेति[1]* सन्देहस्तदा तस्य विपक्षत्वं नास्तीति तत्रातिव्याप्तिः, तदर्थं निश्चितेति । पक्षादीनां त्रयाणां [2]यथोक्तस्वरूपत्वेन[2]* निश्चितानामेवानुमितिजनकत्वात् साध्याभाववत्त्वेन निश्चित एव विपक्ष इत्यर्थः ॥ १३१ ॥

अर्थरूपमनुमानं स्वार्थम् । शब्दरूपमनुमानं परार्थमित्यर्थः । पञ्चावयवोपेतत्वं च शब्दरूपत्वम् ।

ननु शब्दो नानुमानं लिङ्गानुसन्धानमन्तरेण प्रमाजनकत्वात् प्रत्यक्षवदित्याशङ्क्याऽऽह--शब्दस्यापीति । शब्दस्याप्यनुमानरूपत्वम्, कुतः ? अनुमानविषयत्वेन अविनाभावोपजीवकत्वेन [3]वा इत्यन्वयः । अनुमानस्य विषयः परोक्षः, स एव विषयो यस्य शब्दस्य तस्य भावस्तत्त्वम्, तेनेत्यर्थः । हेतौ तृतीया । तथा च शब्दोऽनुमानं प्रमाणत्वे सति परोक्षविषयत्वादनुमानवत्, तथा शब्दोऽनुमानम् अविनाभावोपजीवकत्वाद् अनुमानवदिति । अविनाभावमुपजीवतीत्यविनाभावोपजीवकः । कथमिति चेद्—इत्थम्, 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यत्र एतानि पदानि स्वस्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षायोग्यता[4]सन्निधिमत्पदकदम्बकत्वात् गामानये[5]त्यादिपदकदम्बकवत् । पदार्थसंसर्गो वाक्यार्थः, स च अविनाभावबलेनैव लिङ्गरूपेण शब्देनावगतः, अतः शब्दोऽनुमानमेवेत्यर्थः । तथा [6]च लिङ्गरूपेणैव शब्दस्यार्थगमकत्वात् पूर्वपक्षे हेतुरसिद्ध इति द्रष्टव्यम् ॥ १३२ ॥

प्रतिज्ञादीनां लक्षणमाह—तत्रेति । वचनं प्रतिज्ञेत्युक्ते घट इति वचने अतिव्याप्तिः, अतः पक्षेति । पक्षधर्मत्ववचनं हेतुरित्युक्ते पर्वतो वह्निमानिति साध्यस्य पक्षधर्मता-

---

(A) आदर्शपुस्तके 'महाह्रदेऽपि' इत्यतः परं पठितमपि 'यदा'पदं विस्पष्टार्थं व्युत्क्रमेण धृतम् ।

---

1. '-मत्त्वं नास्ति अस्ति वेति' क । 2. 'अपि तत्त्वेन' ख । 3. 'च' ख । 4. '-सन्निधिमत्त्वात्' क । 5. '-येति पदवत्' क । 6. इदं ख-पुस्तके नास्ति ।

(A)दृष्टान्तवचनमुदाहरणम् । (B)परामर्शत्ववचनमुपनयः । लिङ्ग-सम्बन्धप्र॰ुक्तनिश्चितसाध्॰वत्त्ववचनं निगमन॰ ॥ १३३ ॥

अङ्गवैकल्यमाभासत्वम् । पक्षधर्मत्वेनानिश्चितत्वमासिद्धत्व॰ । (C)प॰॰॰॰॰॰॰॰॰र्शित्वं विरुद्धत्वम् । पक्षत्रयवृ॰॰॰॰॰-कान्तिकत्वम् । साध्यतदभावसाध्यत्वं सन्दिग्धत्वम् ॥ १३४ ॥

---

वचने, अतो लिङ्गस्येति । शेषं पूर्ववत् । प्रतिज्ञादावतिव्याप्तिवारणाय दृष्टान्तेति । एवं च यथा गौस्तथा गवय इत्यादौ प्रसङ्गस्ततोऽनुमानावयवत्वे सतीति प्रकरणाज् ज्ञातव्यम् । लिङ्गस्येति वाऽनुषञ्जनीयम् । परामर्शस्तु तृतीयलिङ्गज्ञानं वह्निव्याप्यधूमवानयमित्यादि । व्यावृत्तिः स्पष्टा । लिङ्गसम्बन्धेन तस्मादित्येवंरूपेण प्रयुक्तं निश्चितसाध्यवचनं निगमनमित्यर्थः । प्रतिज्ञायामतिव्याप्तिवारणाय निश्चितेति [ निश्चितान्तम् ? ] । दृष्टान्तेऽतिव्याप्तिवारणाय लिङ्गसम्बन्धेति । उपनयेऽतिव्याप्तिवारणाय निश्चितेत्यादि । प्रयुक्तत्वं समभिव्याहृतत्वम् ॥ १३३ ॥

हेत्वाभासं लक्षयति—अङ्गवैकल्यमिति । अङ्गानि पक्षधर्मत्वादीनि, तैर्वैकल्यं तद्रहितत्वमित्यर्थः । अनिश्चितत्वं स्व॰ाण्वादावप्यस्तीति तद्वारणाय पक्षधर्मत्वेनेति । क्वचित् लिङ्गत्वेनेति पाठः । तत्रापि पक्षधर्मतयेत्यर्थः । पक्षविपक्षस्पर्शित्वमनैकान्तिकेऽप्यस्तीति तद्वारणाय मात्रेति । अनैकान्तिकानध्यवसितप्रकरणसमानां सन्देहकार्यकर्तृत्वेन सन्दिग्धव्यपदेशं विधाय त्रितयं युगपदेव लक्षयति साध्येति । साध्यं च साध्या( तस्य साध्यस्या ? )भावश्च, तौ साध्यौ यस्य स साध्यतदभावसाध्यः, तस्य भावस्तत्त्वम् । विरुद्धे सदनुमाने चातिव्याप्तिवारणायोभयसाध्यत्वमुक्तम् । तत्र प्रमेयत्वस्यानैकान्तिकस्य साध्यतदभाववद्वृत्तित्वेन उभयसाधनसम्भवात् [अनध्यवसितस्य पक्षमात्रवृत्तित्वेनोभय[साधन]सम्भवात् प्रकरणसमस्य साध्यतदभावयोः समत्वेनोभयसाधनसम्भवा[1]दिति त्रयाणामुभय[1]*साध्यत्वम् अन्यतरनिर्णयाभावादेव च सन्दिग्धत्वम् । अपरं स्वयमूहनीयम्, विस्तरभयात्तु नोच्यते । क्वचित्तु अनैकान्ता-

---

(A) 'न्यायावयवदृष्टान्तवचनमुदाहरण'मिति तत्त्वचिन्तामणिः ।

(B) अत्र त्व-प्रत्ययार्थश्चिन्तनीयः । तत्त्वचिन्तामणौ ''अनुमितिकारणतृतीयलिङ्गपरामर्शजन॰ावयवत्वमि''त्युपनयसामान्यलक्षणमभिहितम् ।

(C) साध्याभावव्याप्तस्यैव विरुद्धत्वस्वीकारे विरुद्धलक्षणे पक्षपदनिवेशप्रयोजनं चिन्तनीयम् ।

---

1. '-वात् त्रयाणामप्युभय-' ख ।

उपजीव्यप्रमाणनिश्चितसाध्यविपरीतत्वं कालात्ययापदिष्टत्वम् ॥ १३५ ॥

अनिष्टव्यापकप्रसञ्जनं तर्कः ॥ १३६ ॥

तुल्यत्वेनाभावयोः प्रत्यभाववचनं प्रसञ्जनम् ॥ १३७ ॥

नध्यवसितयोः पृथग् लक्षणं [1]दृश्यते. तदा सन्दिग्ध[2]शब्देन सत्प्रतिपक्ष एव ग्राह्यः। पूर्वपाठ एव तु साधत्रिकश्चैकान्तरसम्मतश्चेति ॥ १३४ ॥

बाधं लक्षयति—उपजीव्येति। उपजीव्येनाधिकबलेन प्रमाणेन निश्चितः साध्यविपरीतः साध्याभावो यस्य तस्य भावस्तत्त्वम्, तत् कालात्ययापदिष्टमित्यर्थः। साध्य-[3]वैपरीत्यं सन्दिग्धे पर्वतेऽप्यस्तीति सदनुमानेऽतिव्याप्तिवारणाय निश्चितेति। छलजात्यादिना निश्चितसाध्यविपर्यये सदनुमानेऽतिव्याप्तिवारणाय प्रमाणेति। सत्प्रतिपक्षे अतिव्याप्तिवारणाय उपजीव्येति(A) ॥ १३५ ॥

तर्कं लक्षयति—अनिष्टेति। अनिष्टं यद् व्यापकं धूमाभावादिरूपं तस्य प्रसञ्जनं तर्क इत्यर्थः। त्वं चौरस्त्वमपि चौर इत्यादिमतानुज्ञायामतिव्याप्तिवारणाय व्यापकेति। महाह्रदे वह्निर्नास्ति धूमोऽपि नास्तीत्यादिप्रसञ्जनेऽतिव्याप्तिवारणाय अनिष्टेति ॥ १३६ ॥

प्रसञ्जनं लक्षयति—तुल्यत्वेनेति। तुल्यत्वं समानदेशकालावस्थायित्वम्, अभावयोर्व्याप्तिमत्त्वमिति यावत्, यत्र यदा वह्निर्नास्ति तत्र तदा धूमोऽपि नास्तीति प्रतीतेः। एवं चाभावयोर्मध्ये तुल्यत्वेन हेतुना यत् प्रत्यभाववचनं तत् प्रसञ्जनमित्यर्थः। प्रत्यभाववचनं प्रसञ्जनमित्युक्ते यदि सुखं तर्हि दुःखं नेति वचने[4]ऽतिव्याप्तिरतोऽभावयोरिति[4]*। एवमुक्ते [5]यदि वह्निर्न स्यात् तर्हि जलं न स्यादितिवचनेऽतिप्रसङ्गः, ततस्तुल्यत्वेनेति। व्याप्याभावारोपे व्यापकाभावारोपः प्रसञ्जनमिति रहस्यम्। अभावयोः प्रत्यभाववचनमित्येतद् बाहुल्याभिप्रायेण। वस्तुतस्तु यदि पीतं जलं पर-(B)मन्तरधक्ष्यत् तर्हि [6]तदविशिष्टं मामपि दहेदित्यादौ भावयोरपि प्रसञ्जनस्य दृष्टत्वादिति(C) ॥ १३७ ॥

(A) सत्प्रतिपक्षे तु द्वयोः समबलत्वमिति न दोष इति भावः।

(B) यदि जलं पीतं सत् अन्तः अभ्यन्तरावच्छेदेन परम् अन्यं जनम् अधक्ष्यत् तदा ततो जनादविशिष्टं मामपि दहेदित्यर्थः।

(C) दृष्टत्वादिति। अत्र पञ्चम्या कथञ्चित् सङ्गतिः कार्या मूलेऽभावपदं भावाभावसाधारणपरमिति भावः।

1. इदं ख-पुस्तके नास्ति। 2. '-न्धत्वशब्देन' ख। 3. '-विपरीतत्व' ख। 4. '-ऽतिव्याप्तिवारणाय भावाभावयोरिति' क। 5. 'यद्यनग्निर्न' ख। 6. 'तदविशिष्टम्' क।

निद्रादुष्टान्तःकरणजं ज्ञानं स्वप्नः। योगजधर्माननुगृहीतस्य मनसो निरिन्द्रियप्रदेशावस्थानं निद्रा ॥ १३८ ॥

वस्तुस्वरूपमात्रग्रहणं निर्विकल्पकम्। विशिष्टस्य ग्रहणं सविकल्पकम्। अतातावच्छिन्नवस्तुग्रहणं प्रत्यभिज्ञानम्। दुःख-साधनज्ञानं हानम्। सुखसाधनज्ञानमुपादानम्। उभया-साधनत्वज्ञानमुपेक्षा ॥ १३९ ॥

उत्कटैककोटिकः संशय ऊहः। अनालिङ्गितोभयकोट्य-नवधारणज्ञानमनध्यवसायः ॥ १४० ॥

---

स्वप्नं लक्षयति—निद्रेति। निद्रादोषेण दुष्टं यदन्तःकरणं मनः तज्जन्यं ज्ञानं स्वप्न इत्यर्थः। जागरे घटादिज्ञानव्युदासाय अन्तःकरणेति। [1]जागरे सुखादिज्ञान-व्युदासाय दुष्टेति। जाग्रन्मानसभ्रमव्युदासाय निद्रेति। केयं निद्रा नामेत्यत आह—योगजेति। योगाभ्यासेन जनितो धर्मो योगजः तेनाननुगृहीतस्यासहकृतस्य मनसो निरिन्द्रियप्रदेशे बाह्ये[2]न्द्रियसम्बन्धरहिते स्थले वर्त्तनं निद्रेत्यर्थः। समाधा-वतिव्याप्तिवारणाय योगजधर्माननुगृहीतस्येति ॥ १३८ ॥

ग्रहणं निर्विकल्पकमित्युक्ते भ्रमेऽतिव्याप्तिवारणाय वस्तुपदम्। एवं च सविक[3]ल्पके, अतो मात्रेति। इन्द्रियादौ प्रसङ्गवारणाय ग्रहणमिति। निर्विकल्पकेऽतिव्याप्तिवारणाय विशिष्टपदम्। वस्तुग्रहणं प्रत्यभिज्ञेत्युक्ते अभिज्ञायामतिव्याप्तिरतोऽतीतेत्यादि। उत्तरं लक्षणत्रयं सुगमम् ॥ १३९ ॥

ऊहनम् ऊह इति व्युत्पत्त्यैव [4]तल्लक्षणं स्पष्टमिति मत्वा अनध्यवसायं लक्षयति—अनालिङ्गितेति। अनालिङ्गिते अस्पष्टे उभयकोटी यस्यानवधारणज्ञानस्य सोऽनध्यवसाय इत्यर्थः(A)। अनवधारणं ज्ञानं स्थाणुपुरुषसन्देहे अतिव्यापकमतोऽनालिङ्गिते-त्यादि ॥ १४० ॥

---

(A) अतः परं क-पुस्तके 'न तु कोटिद्वयसम्बन्ध एव नास्तीति। तथा सति संशयान्तर्भावानुपपत्तेः' इत्यंशोऽसार्वत्रिकतया उल्लिखितः।

---

1. 'जाग्रत्सुखादि-' ख। 2. '-न्द्रियरहिते' ख। 3. '-ल्पकप्रमायामतिव्याप्तिरतो' ख। 4. 'ऊहलक्षणं' ख।

प्रयत्नोत्पाद्यसाधनाधीनं सुखं सांसारिकम्। इच्छामात्राधीनसाधनसाध्यं सुखं स्वर्गः ॥ १४१ ॥

सांसिद्धिकत्वं तेजःसंयोगानुत्पाद्यत्वम्। तेजःसंयोगोत्पाद्यत्वं नैमित्तिकत्वम् ॥ १४२ ॥

कर्मजः संस्कारो वेगः। ज्ञानजः संस्कारो भावना। स्थित्यापादको गुणः संस्कारः स्थितिस्थापकः ॥ १४३ ॥

अव्यापकत्वं स्वाभावसादेश्यम्। तदभावो व्यापकत्वम्। विहितत्वं धर्मोत्पादकत्वम्। निषिद्धत्वमधर्मोत्पादकत्वम्। उभयविपरीतत्वमुदासीनत्वम् ॥ १४४ ॥

---

सुखभेदौ लक्षयति—प्रयत्नोत्पाद्येति। प्रयत्नोत्पाद्यं साधनं स्रक्चन्दनादि तदधीनं तज्जन्यमित्यर्थः। सुखं सांसारिकमित्युक्ते पराभिमते नित्यसुखेऽतिव्याप्तिः, अतः साधनेति। एवमुक्ते स्वर्गे, अतः प्रयत्नेति। इच्छामात्राधीनं च तत्साधनं चेति विग्रहः। साधनसाध्यत्वम् इच्छाधीनसाधनसाध्यत्वं वा सांसारिकेऽप्यस्तीति तद्वारणाय मात्रेति(A) ॥ १४१ ॥

द्रवत्वभेदं लक्षयति—सांसिद्धिकत्वमिति। सुगमं लक्षणद्वयम्। द्रवत्वमित्युभयत्रापि सम्बन्धनीयम्, अतो गगनालोकयोर्न प्रसङ्गः ॥ १४२ ॥

वेगभावनालक्षणे सुगमे। स्थित्यापादको गुण इत्येकम्, स्थित्यापादकः संस्कार इत्यपरम् इति विभज्य [1]स्थितिस्थापकस्य लक्षणद्वयं द्रष्टव्यम्। द्रव्येऽतिव्याप्तिवारणाय गुणपदम्। ऋजुत्वापादकः [2]संस्कारः स्थितिस्थापक इति क्वचित् पाठः, स तु वेष्टनजनके अव्यापक इत्युपेक्षणीयः। तस्मात् स्थित्यापादको गुणः संस्कारः स्थितिस्थापक इत्येव लक्षणं विभागेन द्रष्टव्यम्। इच्छाद्यवान्तरभेदानामनुक्तानि लक्षणानि स्वरूपनिरुक्त्यैव द्रष्टव्यानि ॥ १४३ ॥

गुणानामुक्तमव्यापकत्वादि लक्षयति—अव्यापकत्वमित्यादिना। समानो देशो यस्य तस्य भावः सादेश्यम् एकनिष्ठत्वमिति यावत्। सादेश्यं रूपरसादौ वर्त्तते इत्य-

---

(A) तथा च प्राञ्चः—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम् ॥ इति।

---

1. 'स्थितस्था-' ख। 2. क-पुस्तके इदं नास्ति।

निर्बाधकं सामान्यं जातिः। सबाधकं सामान्यमुपाधिः ॥ १४५ ॥

आरोपितनीलरूपोऽभावोऽन्धकारः ॥ १४६ ॥

ज्ञानसम्बन्धो ज्ञानविषयत्वम्। तत्र ज्ञानेन नियमेनावच्छेद्यत्वं प्रमेयत्वम् ॥ १४७ ॥

---

भावेति। एवं घटत्वाभावसादेश्यं घटत्वस्य वर्त्तत एवेति अत उक्तम्—स्वेति। एकस्मिन्नेव तरौ अङ्गुलीसंयोगतदभावौ वर्त्तेते इति संयोगोऽव्यापकः। एवं विभाग-सुख-[1]दुःखेच्छा-शब्दादिषु[1]* द्रष्टव्यम्। व्यापकलक्षणं सुगमम्। विहिता[2]दिलक्षण-त्रयं सुगममेव ॥ १४४ ॥

जात्युपाध्योर्लक्षणमाह—निर्बाधकमिति। बाधकं [3]तु—

व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः।

रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥

इति किरणावलीलीलावतीकारोक्तम्। व्यक्तेरभेद [4]आकाशत्वादौ। तुल्यत्वं हस्तत्व-करत्वादौ। सङ्करो भूतत्वमूर्त्तत्वादौ। तथा हि भूतत्वं मूर्त्तत्वं [5]परिहाय आकाशे वर्त्तते, मूर्त्तत्वं भूतत्वं परिहाय मनसि वर्त्तते, तदुभयं पृथिव्यादिचतुष्टये वर्त्तते इति परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोः सामानाधिकरण्यलक्षणं साङ्कर्यं भूतत्व-मूर्त्तत्वयोः [6]सम्भवति। तदुक्तम्—

अन्योन्यपरिहारेण भिन्नव्यक्तिनिवेशिनोः।

सामान्ययोः समावेशो जातिसङ्कर उच्यते ॥ इति

[7]अत एतदुभयमुपाधिरूपं सामान्यम्। अनवस्थितिः जातौ जात्यङ्गीकारे। रूपहानिः विशेषादौ। असम्बन्धः समवायादौ, समवाये समवायानङ्गीकारात्। एवंविधजाति-बाधकाभावे यत् सामान्यं सा जातिः, बाधके तु औपाधिकं सामान्यमित्यर्थः ॥ १४५ ॥

अन्धकारं लक्षयति—आरोपितेति। घटाभावेऽतिव्याप्तिवारणाय नीलरूप इति। एवं सत्यसम्भवः, तत आरोपितेति। [8]आरोपितनीलरूपोऽन्धकार इत्युक्ते आरोपित-नीलरूपे स्फटिकादावतिव्याप्तिः, ततोऽभाव इति ॥ १४६ ॥

ज्ञानसम्बन्धं लक्षयति—ज्ञानेति। ज्ञातताल‍क्षणो ज्ञानसम्बन्धः। तस्य लक्षणं

---

1. '-दुःखादिषु' ख। 2. '-दिवयं' ख। 3. इदं क-पुस्तके नास्ति। 4. 'आकाशादौ' ख। 5. 'विहाय' ख। 6. 'भवति' ख। 7. इदं ख-पुस्तके नास्ति। 8. क-पुस्तके 'आरोपित' इति नास्ति।

गुणादिषु च संख्याव्यवहारः संख्याप्रत्यासत्तिनिबन्धनः। अत एव संख्याप्रत्यासत्तिनिबन्धनत्वम् ॥ १४८ ॥

कार्योत्पादकत्वं कारणत्वम्। स्वसमवेतकार्योत्पादकत्वं समवायिकारणत्वम्। समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यम् असमवायिकारणत्वम्। उभयविपरीतत्वं निमित्तकारणत्वम् ॥ १४९ ॥

---

ज्ञानविषयत्वमित्यर्थः। [1]ज्ञानविषयत्वप्रसङ्गेन प्रमाविषयत्वं लक्षयति—तत्त्वज्ञानेनेति। अवच्छेदकत्वं व्यावर्त्तकत्वं विशेषणत्वं विषयत्वमिति यावत्। शुक्तिरजतसंसर्गे भ्रमविषये अतिव्याप्तिवारणाय तत्त्वज्ञानेनेति। तथाऽपि न व्यावृत्तिः, तस्यापि धर्म्यंशे [2]तत्त्वज्ञानेनावच्छेद्यत्वात्, अतो नियमेनेति। नियमेन साकल्येनेत्यर्थः ॥ १४७ ॥

यदुक्तम्—'यथा संख्याया एव गुणे इति, अनेन संख्याया गुणेऽन्तर्भावे गुणादौ कथं तद्व्यवहार' इत्यत आह—गुणादिष्विति। [3]संख्यया सह* गुणादीनां प्रत्यासत्तिरे[4]कार्थसमवायलक्षणा, तन्निबन्धनस्तत्कारणक इत्यर्थः। फलितमाह—अत एवेति, व्यवहारस्येति शेषः। अत एव औपचारिकत्वादेवेत्यर्थः ॥ १४८ ॥

कारणं लक्षयति—कार्येति। उत्पत्तेः सापेक्षत्वात् कार्यपदम्। कार्योत्पादकं समवायिकारणमित्युक्ते निमित्तादृष्टादौ, अतः स्वसमवेतेति। अवधृतं निश्चितं सामर्थ्यं यस्य तत् तथा। एवंविधं च तत् समवायिकारणप्रत्यासन्नं चेति विग्रहः(A)। अवधृते[5]त्युक्ते समवायिकारणे[6]ऽतिप्रसङ्गः, अतः समवायिकारणप्रत्यासन्नमिति। एतावन्मात्रोक्तौ पटं प्रति तन्तुरूपादेरपि असमवायिकारणत्वप्रसङ्गः, अतोऽवधृतेति। समवायिकारणप्रत्यासन्नत्वं द्विधा [7]सम्भवति, कार्यकारणैकार्थसमवायात्। तत्र कार्यैकार्थसमवायो यथा तन्तुसंयोगस्य पटेनैकार्थसमवायः। कारणैकार्थसमवायो

---

(A) एतेन 'अवधृतसामर्थ्यं समवायिकारणप्रत्यासन्नमसमवायिकारणत्व'मिति पाठः टीकाकारसम्मत इति प्रतीयते। तत्रापि प्रत्यासन्नमित्यत्र भावप्रधाननिर्देशो बोध्यः। अस्माभिस्तु मुद्रिताकार एव गृहीतः।

---

1. क-पुस्तके 'ज्ञान'पदं नास्ति। 2. 'तत्त्वज्ञानविद्यत्वात्' ख। 3. 'संख्यायां' क। 4. '-कार्थसम-' क। 5. '-त्येतावदुक्तौ' ख। 6. इदं ख-पुस्तके नास्ति। 7. इदं ख-पुस्तके नास्ति।

इयत्तावच्छिन्नपरिमाणयोगित्वं मूर्त्तत्वम् । तदभावोऽमूर्त्तत्वम् ॥ १५० ॥

कार्यायोगव्यवच्छिन्ना सामग्री ॥ १५१ ॥

संज्ञामात्रेण पदार्थानामभिधानमुद्देशः ॥ १५२ ॥

रूप-रस-गन्ध-स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वाप त्व-गुरुत्व-द्रवत्व-संस्कारा पृथिवीसमवेताः ।

रूप-रस-स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वापरत्व-गुरुत्व-द्रवत्व-स्नेह-संस्कारा अप्सु समवेताः ।

रूप-स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-परत्व-द्रवत्व-संस्कारास्तेजःसमवेताः ।

स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वापरत्व-संस्का । वा ु समवेताः ।

---

यथा तन्तुरूपस्य पटरूपसमवायिकारणेन पटेन तन्तुसमवायः । निमित्तकारणलक्षणं स्पष्टम् ॥ १४९ ॥

मूर्त्तत्वं लक्षयति—इयत्तेति । इयत्ता परिच्छेदः अविभुत्वमिति यावत्, तेन अवच्छिन्नं [1]यत् परिमाणम्, तेन [2]योगी इत्यर्थः । [3]आकाशादावतिव्याप्तिवारणाय यत्तावच्छिन्नेति । अमूर्त्तलक्षणं स्पष्टम् ॥ १५० ॥

कारणप्रसङ्गात् सामग्रीं लक्षयति—कार्येति । [4]कार्यस्यायोगो व्यभिचारः*, तेन व्यवच्छिन्ना सामग्रीत्यर्थः ॥ १५१ ॥

सर्वलक्षणमूलभूतमुद्देशं लक्षयति—संज्ञेति । लक्षणेऽतिव्याप्तिवारणाय संज्ञा-मात्रेणेति ॥ १५२ ॥

एवमुद्देशलक्षणे अभिधाय [5]पदार्थानां किंचित् साधर्म्यं वैधर्म्यं च दर्शयन् गुणादीनां द्रव्येषु सन्निवेशमाह—रूपेत्यादिना । पृथिव्युदकात्मनां चतुर्दश [6]गुणाः । तेजस

---

1. इदं क-पुस्तके नास्ति । 2. 'यद् योग' क । 3. 'आकाशेऽति-' ख । 4. 'कार्यस्यायोग-व्यवच्छेदोऽव्यभिचारः, तद्वती' क । 5. इदं ख-पुस्तके नास्ति । 6. '-गुणवत्त्वम्' ख ।

संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-शब्दा आकाश-समवेताः।

संख्या-परिमाण-पृथक्त्व-संयोग-विभागाः कालदिक्समवेताः।

संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माधर्म-भावना आत्मसमवेताः।

संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वापरत्व-संस्कारा मनःसमवेताः ॥ १५३ ॥

कर्म मूर्तद्रव्यसमवेतमनित्यमेव। सामान्यं द्रव्य-गुण-कर्मसमवेतम्। विशेषास्तु नित्यद्रव्यसमवेताः। समवायाभावावसमवेतावेव। द्रव्यं तु कार्यरूपं स्वावयवसमवेतम्। अकार्यं द्रव्यमसमवेतमेव ॥ १५४ ॥

विनाशस्तु द्रव्यस्य समवाय्यसमवायिकारणनाशाभ्याम्।

---

एकादश गुणाः। वायोर्नव गुणाः। (A)ईश्वरमनसोरष्ट गुणाः। गगने षड् गुणाः। दिक्कालयोः पञ्च गुणा इति। इदमेव च तद्वतां साधर्म्यम्, अन्यापेक्षया च वैधर्म्यम् ॥ १५३ ॥

कर्माश्रयमाह—कर्मेति। मूर्तद्रव्याणामेतत् साधर्म्यम्, इतरापेक्षया च वैधर्म्य-मित्यर्थः। इतरेषां च तदभाववत्त्वं निष्क्रियत्वं [1]च साधर्म्यं सूचितं भवति। द्रव्यादीनां [2]त्रयाणां साधर्म्यमाह—सामान्यमिति। इतरेषां निःसामान्यं साधर्म्यमुक्तं भवति। विशेषाणां साधर्म्यं वैधर्म्यं चाह—विशेषा इति। समवायाभावयोः [3]साधर्म्यमाह—समवायेति। कार्यद्रव्यसाधर्म्यमाह—द्रव्यं त्विति। अकार्यद्रव्य-साधर्म्यमाह—अकार्यमिति। ग्रन्थः स्पष्टः ॥ १५४ ॥

एवं किंचित् साधर्म्यं वैधर्म्यं चाभिधाय द्रव्यादीनां विनाशं निरूपयति—विनाश-

---

(A) यद्यपीह ईश्वरे गुणाः प्रविभज्य मूलकृता न दर्शितास्तथाऽपि सुख-दुःख-द्वेष-धर्माधर्म-भावनाख्यान् षड् गुणानपहाय अन्येषामात्मसमवेतगुणानामीश्वरवृत्तित्वं बोध्यम्।

---

1. इदं ख-पुस्तके नास्ति। 2. '-त्रयाणामेव सा-' ख 3. 'वैधर्म्य-' ख।

गुणस्य तु समवाय्यसमवायिनिमित्तकारणनाश-विरोधिगुणभ्यो नाशः। कर्मणः समवाय्यसमवायिनिमित्तकारणनाशोत्तर-संयोगाभ्यां विनाशः, प्रागभावस्य प्रतियोग्युत्पादनसामग्रीतः; अन्योन्याभावस्य प्रतियोगिनाशकारणात् ॥ १५५ ॥

उत्पत्तिस्तु द्रव्यगुणकर्मणां समवाय्यसमवायिनिमित्त-कारणेभ्यः। तत्र समवायिकारणं त्रयाणां द्रव्यमेव। असमवायिकारणं द्रव्यकर्मणोः संयोग एव। गुणस्य त्वसमवायि-

स्त्विति। समवायिनाशाद् द्रव्यनाशो यथा—तन्तुनाशात् पटनाशः। असमवायिकारणनाशाद् द्रव्यनाशो यथा—परमाणुसंयोगनाशाद् द्व्यणुकनाशः। गुणस्य विनाशं निरूपयति—गुणस्येति। द्वन्द्वान्ते श्रूयमाणस्य कारणपदस्य प्रत्येकमभिसम्बन्धः। समवाय्यसमवायिनिमित्तकारणनाशश्च विरोधिगुणाश्चेति द्वन्द्वः। घटादिगतरूपादीनां समवायिघटादिनाशात् नाशः। आद्यसंयोगविभागयोरसमवायिकारणयोर्नाशात् [1]संयोगजसंयोग[1]*[2]विभागजविभागयो[2]*र्नाशः। अपेक्षाबुद्धिनिमित्तकारणनाशात् परत्वापरत्व-[3]द्वित्व-पृथकत्वादीनां नाशः। उत्तरशब्देन विरोधिना पूर्वशब्दस्य उत्तर-ज्ञानेन पूर्वज्ञानस्य दुःखादिना सुखादेर्नाशश्च विरोधिगुणनाशः।

कर्मणो नाशमाह—कर्मण इति। समवायिकारणनाशाद् यथा—विनश्यद्-वस्थद्रव्यगतकर्मनाशः। असमवायिनाशाद् यथा—शरवेगनाशात् तद्गतकर्मणो नाशः। उत्तरसंयोगाद् यथा—शरादेरभिघातात् तद्गतकर्मनाशः। सामान्य-विशेषसमवायानां नित्यत्वात् नाशो नास्तीति अभावस्य विनाशमाह—प्रागभाव-स्येति। [4]अन्योन्याभावश्च केषांचिन्मते नित्यः। [5]यद्यपि घटे[5]* नष्टेऽपि तदन्योन्या-भावो विनश्यति, [6]तदा विनष्टघटस्य[6]* पटतादात्म्यापत्तेः, अन्योन्याभावस्य तादात्म्या-भावरूपत्वात् तथापि [7]प्रतियोगिनाशे सोऽपि नश्यतीत्यभ्यु[8]पेत्योक्तम् ॥ १५५ ॥

उत्पत्तिं निरूपयति—उत्पत्तिस्त्वित्यादिना। गुणस्येत्यन्तं स्पष्टम्।

1. 'तत् संयोग-' क। 2. '-विभागयो-' ख। 3. '-द्विपृथक्त्वादीनां' ख। 4. इतः पूर्वं ख-पुस्तके 'यद्यपि' इति पठितम्। 5. 'न हि पटे' ख। 6. 'यद्यनित्यः स्यात्तदा विनष्टे पटे' ख। 7. 'तत्प्रतियोगिनाशे' ख। 8. '-पगन्तव्यम्' क।

कारणं क्वचित् समानजातीयं क्वचिदसमानजातीयं गुणान्तरम्, क्वचित् कर्म। निमित्तकारणं सर्वेषामेव ईश्वरेच्छाऽदृष्टादीनि॥ १५६॥

अन्योन्याभावप्रध्वंसाभावयोस्तु निमित्तादेव केवलादुत्पत्तिः॥ १५७॥

---

गुणस्य त्विति। समानजातीयं तन्त्वादिरूपं पटादिरूपस्यासमवायिकारणम्। असमानजातीयं द्व्यणुकपरिमाणं प्रति परमाणुद्वित्वम्, सुखादिकं प्रति आत्ममनःसंयोगः, संयोगविभागवेगानां च कर्म असमवायिकारणम्। साधारणं निमित्तकारणमाह—निमित्तेति। आदिशब्देन देश[1]कालादि॥ १५६॥

अभावस्योत्पत्तिमाह—अन्योन्याभावेति। अभावस्य क्वापि समवायाभावात् न समवायिकारणम्, तदभावादेव [2]च तत्प्रत्यासन्नत्वलक्षणमसमवायिकारणमपि नेति केवलान्निमित्तादेवोत्पत्तिरित्यर्थः। अत्यन्ताभावप्रागभावयोर्नोत्पत्तिः। यद्यपि अन्योन्याभावस्य नोत्पत्तिः, न हि घटरूपप्रतियोग्यनुत्पत्तौ अन्योन्याभावो नास्ति, तथा सति अनुत्पन्नो घटः पटो न [3]भवतीति प्रत्ययो न स्यात्, तथाऽपि उत्पन्ने घटे अयम् [4]अयं न भवतीति स्पष्टं ज्ञायते तदनुसारेण उत्पत्तिरुक्ता।

नन्वभावो नाम कश्चित् पदार्थो नास्ति, येन तस्योत्पत्ति[5]विनाशविचारः कर्त्तव्यो भवेत्। तथा हि[6] प्रभाकरः—भावान्तरमेव भावान्तरापेक्षया अभाव इति व्यवह्रियते, परं तु न व्यवहारविषयः पदार्थान्तरमस्ति मानाभावात्। नास्तीति प्रत्ययो वा नास्तीति व्यवहारान्यथानुपपत्तिर्वा तत्र मानमिति चेत् न, प्रत्यक्षस्यार्थापत्तेश्च भूतलादिभावालम्बनतया अन्यथासिद्धत्वात्। ननु नास्तीति प्रत्ययव्यपदेशयोर्भूतलालम्बनत्वे घटवत्यपि भूतले अभावप्रतीतिव्यवहारौ स्यातामिति चेत्—मैवम्, केवलभूतलस्याभावव्यवहारहेतुत्वात्, घटवद् भूतलादन्यद् [7]भूतलं च केवलम्[7]*। तत्रान्योन्याभावव्यवहारो घटपटादि[8]स्वरूपमवलम्बते, संसर्गाभावव्यवहारस्तु कपालभूतलादिना भवति। कपाले प्रागभावप्रध्वं[9]साभावयोर्व्यवहारो

---

1. '-कालादृष्टादि' ख। 2. इदं क-पुस्तके नास्ति। 3. 'स्यादिति' क। 4. 'पटो' ख। 5. '-नाशे विचारः' क। 6. '-ऽपि' ख। 7. 'भूतलत्वं च केवलत्वम्' ख। 8. '-स्वरूपेण' क। 9. '-सयोर्व्यव-' ख।

भूतलेऽत्यन्ताभावव्यवहारः। अतो नातिरिक्ताभावे मानं किंचित् पश्याम इति। यथाहुः—

भावान्तरमभावो हि कयाचित्तु व्यपेक्षया (A)।
भावान्तरादभावोऽन्यो न कश्चिदनिरूपणात्॥ (B) [1]इति।

अत्रोच्यते—अभावस्तावदतिरिक्तोऽभ्यु[2]पेयः, अन्यथा तत्प्रतीतिव्यवहारयोरनालम्बनत्वापत्तिः। तथा हि—व्यवहारो हि व्यवहर्तव्यपदार्थज्ञानसाध्यः, [3]न च घटादिस्वरूपं भूतलं वा व्यवहर्तव्यम्, किं त्वभावः[3]* तज्ज्ञानं च तेन विना न भवति। अतोऽभावो ज्ञानविषयोऽतिरिक्तोऽस्तीति प्रत्यक्षादेर्नान्यथासिद्धिः। किं च भूतलादेरभावत्वे [4]सत्प्रतियोगित्वा[4]*पत्तिः, अभावस्य घटाभावः पटाभाव इति प्रतियोगिसापेक्षत्वात्। अपि च स्वरूपस्यान्योन्याभावत्वे दूरात् तरुसमूहे नयनातिथीकृते एकानेकजिज्ञासा न स्यात् स्वरूपग्रहणेनैव अन्योन्याभावरूपभेदग्रहात्; रज्जावयं सर्प इति भ्रमो न स्यात्, स्वरूपग्रहणेनैव [5]विशेषस्य ज्ञातत्वात्[5]* अविवेकाभावात्। नास्त्येव विभ्रमः, मम मते सर्वज्ञानानां यथार्थत्वादिति चेत्—न; रज्जुरियं सर्पोऽज्ञायि मयेति सकल[6]लोकानुभवबाधप्रसङ्गात्, लौकिकपरीक्षकसिद्धभ्रमानङ्गीकारे गुरोरपि लघुत्वापत्तेः। अपि च केवलं भूतलमभाव इत्यत्र किमिदं कैवल्यं नाम? भूतलमात्रं चेत्—न[7], घटवत्यपि [8]भूतले अभावव्यवहार[8]*प्रसङ्गात्। [9]अथ अभावाधार[10]भूतलं चेत्—अभावस्वीकारापत्तिः। घटवद्भूतलभिन्नं भूतलं केवलमिति चेत्—तर्हि अभावोऽपि स्वीकृत एव, अभावाधारत्वज्ञानमन्तरेण घटवद्भूतलभिन्नत्वज्ञानासम्भवात्। तस्माद् व्यवहारान्यथानुपपत्त्या प्रत्यक्षेण चातिरिक्तोऽभावोऽभ्युपगन्तव्यः, अतस्तस्योत्पत्त्यादिविचारः सफल एव।

---

(A) भावान्तरमभावो हि पुरस्तात् प्रतिपादितः।
तत्राश्वादिनिवृत्त्यात्मा भावः क इति कथ्यताम्॥
(श्लोकवार्त्तिके अपोहवादे द्वितीयः श्लोकः)
'कयाचित्तु व्यपेक्षये'तिपादपूरितस्य श्लोकस्य त्वाकरस्थानं नोपलब्धम्।

(B) तन्निरालम्बनं ज्ञानमभावालम्बनं च तत्।
भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्॥ इति सम्पूर्णः श्लोकः।
(श्लोकवार्त्तिके, निरालम्बनवादे, श्लो ११८)

---

1. इदं ख-पुस्तके नास्ति। 2. '-पेयते' क। 3. इदं ख-पुस्तके नास्ति। 4. 'सति प्रतियोगिकत्वा-' ख। 5. 'विशेषदर्शनस्य जातत्वात्' ख। 6. '-वाद्यनुभव-' ख। 7. इदं ख-पुस्तके नास्ति। 8. इदं ख-पुस्तके नास्ति। 9. इदं ख-पुस्तके नास्ति। 10. '-धारं' क।

अपरं तु सकलं शास्त्रं सुबोधमिति। वैशि[illegible]-व्यावृत्तिः ॥ १५८ ॥

---

ननु भवत्वधिकोऽभावः, तथाऽपि तद्ग्राहकं प्रमाणं किमिति चेत्—क्वचित् प्रत्यक्षम्, यथा—इह भूतले घटो नास्तीति ; क्वचिदनुमानम्, यथा—वह्न्यभावेन धूमाभावज्ञानम् ।

ननु भूतले घटाभावग्रहो न प्रत्यक्षेण, इन्द्रियाभावयोः सम्बन्धानिरूपणात्, अपि तु योग्यानुपलब्ध्या स गृह्यते ; इन्द्रियं [1]च आधारमात्रग्रहोपक्षीणम्। ननु तर्हि अन्धस्यापि त्वगिन्द्रियेण [2]आधारे शुक्ले वस्तुनि गृहीते नीलरूपप्रतियोगिस्मरणेन नीला[3]भावग्रहप्रसङ्गः*, मम मते त्वन्धस्य प्रतियोगिनीलरूपग्राहकचक्षुषोऽभावात् नायं प्रसङ्ग इति चेत्—न, ममापि हि तत्र प्रतियोगिग्राहकेन्द्रियेण आधारग्रहणाभावात् नातिप्रसङ्ग इति चेत्—उच्यते, इह भूतले घटो नास्तीति ज्ञानम् इन्द्रियजन्यम्, अपरोक्षत्वात् रूपज्ञानवदित्यनुमानादभावस्येन्द्रियग्राह्यत्वम् । न चापरोक्षत्वमसिद्धम् इन्द्रियान्वयव्यतिरेकानुविधानेन तत्साधनात्, अतोऽभावस्येन्द्रियग्राह्यत्वसिद्धिः । न चेन्द्रियाभावसम्बन्धाभावाद् बाधः, इन्द्रिय[4]सम्बद्धभूतलविशेषणविशेष्यभावस्यैव इन्द्रिया[5]भावयोः सम्बन्धत्वात्। तथा [6]च अभावज्ञानम् इन्द्रियजन्यम् अज्ञातकरणजन्यत्वात् रूपादिज्ञानवत्। न चासिद्धिः, अनवस्थाभिया अनुपलब्धेरपि अज्ञाताया एव करणत्वाङ्गीकारात्, अभावस्यानैन्द्रियकत्वे वायौ रूपाभावो न [7]गृह्येत, अनुपलब्धिसहकारिप्रतियोगिग्राहकेण चक्षुषा वायोराधारस्याग्रहणात्। मा भूत् [8]प्रत्यक्षो रूपाभावः, तत्रानुमीयत इति चेत्—न, लिङ्गाभावात्। रूपवत्तया अनुपलभ्यमानत्वस्य लिङ्गत्वे वायुविशेष्यकानुमितिरेव स्यात्, न रूपाभावविशेष्यकप्रतीतिः। (A)तस्मात् क्वचिदिन्द्रियेण क्वचिच्चानुमानेन अभावग्रह इति सिद्धम् ॥ १५७ ॥

ननु शास्त्रस्य [9]त्रेधा प्रवृत्तिः—उद्देशो लक्षणं परीक्षा चेति। ततः शास्त्रैकदेश-

---

(A) इतः पूर्वं दृश्यमानः 'तामन्तरेण वायौ रूपाभाव इति तद्विशेष्यकबुद्ध्यनुत्पत्तेः' इत्यंशः, 'तस्मा'दित्यस्यैव व्याख्यानरूपा टिप्पनीति बुद्ध्या परित्यक्तः। तामिति अनुपलब्धिमित्यर्थः।

---

1. इदं ख-पुस्तके नास्ति। 2. 'आधारशुक्ले' क। 3. '-भावप्रसङ्गः' ख। 4. '-सम्बन्धभूतले वि-' ख। 5. '-भावसम्बन्ध-' क। 6. इदं ख-पुस्तके नास्ति। 7. 'गृह्यते' क। 8. 'प्रत्यक्षं' ख। 9. 'त्रिधा' ख।

**समानाधिकरणं व्यावर्तकं विशेषणम् ॥ १५६ ॥**

**एकविभक्त्यन्तपदवाच्यत्वं समानाधिकरणत्वम्। व्यधिकरणं सद् व्यावर्तकमुपलक्षणम्। भिन्नविभक्त्यन्तपदवाच्यत्वं वैयधिकरण्यम् ॥ १६० ॥**

---

सम्बद्धे प्रकरणे उद्देशलक्षणवत् परीक्षा कर्त्तव्येत्यत आह—अपरमिति। एतत् पठित्वा 'अपरं सुबोधमित्यर्थः। यद्वा अपरेऽप्यवान्तरभेदा [2]विशेषणविशेष्यादयो* लक्षणीया इत्यत आह—अपरमिति। सुबोधत्वमेवाह—वैशिष्ट्यमिति। यद्वा परीक्षादिकं भवतु सुबोधम्, लक्षणं तु [3]विशेष्यादेरन्तर्भावितस्य कुतो नोक्तमित्यत आह—वैशिष्ट्यमिति। नीलमुत्पलमित्यत्र नीलेनानीलव्यावृत्तिरुत्पले क्रियते, [4]ततो व्यावृत्तिर्वैशिष्ट्यमित्यर्थः ॥ १५८ ॥

वैशिष्ट्यं हि विशेषणाधीनमिति तल्लक्षयति—समानेति। 'व्यावर्त्तकम्' व्यावृत्तिबुद्धिजनकम्। इतरव्यावृत्त्या समानम् एकम् अधिकरणं यस्य तत् तथा। दण्डरूपविशेषणस्यादण्डिव्यावृत्त्या समम् एकस्मिन् दण्डिनि वर्तमानत्वात् [5]सामानाधिकरण्यमित्यर्थः। व्यावर्तक(त्व)मात्रमुपलक्षणे[6] जटादावप्यस्तीति ततो विशिनष्टि—समानेति। [7]समानाधिकरणमित्युक्ते[7]*रूपरसादौ प्रसङ्गः, ततो व्यावर्तकेति। न हि रूपरसावित्युक्ते कुतश्चित् किंचिद्व्यावर्तते ॥ १५६ ॥

किं तत् [8]सामानाधिकरण्यमित्यत आह—एकेति। एका समाना विभक्तिरन्ते ययोः पदयोः तद्वाच्यत्वं तदभिधेयत्वमित्यर्थः। एतत्तु रूढ्या अभिधीयते। अवयवार्थस्तु [9]स एव ग्राह्यः। पदवाच्यत्वं जटाभिस्तापस इत्यादौ वैयधिकरण्येऽप्यस्तीति तद्व्युदासाय एकविभक्त्यन्तेति। विशेषणप्रतियोगित्वादुपलक्षणं लक्षयति—व्यधिकरणमिति। इतरव्यावृत्त्या (A)विरुद्धं [10]भिन्नमधिकरणं यस्य [11]तत् तथा(B) विशेषणेऽतिव्याप्तिवारणाय व्यधिकरणमिति। व्यधिकरणलक्षणं स्पष्टम् ॥ १६० ॥

---

(A) इतः पूर्वं 'विविधम्' इति असार्वत्रिकतया उपलभ्यते।

(B) अतः परं 'जटाकाशादीनामितरव्यावृत्त्या सहैव वर्तमानत्वनियमाभावात्। अवच्छेदकं व्यावर्त्तकम्' इत्यंशः पुस्तकविशेषीयत्वेन उपलभ्यते।

---

1. 'अपरपठनं' क। 'इतरं पठनं' ख। 2. 'वैशिष्ट्यविशेषणादयो' ख। 3. 'वैशिष्ट्यादे-' ख। 4. 'ततोऽन्यव्यावृत्ति-' ख। 5. 'समानाधिकरणं' क। 6. '-लक्षणं जटा-' क। 7. 'समानाधिकरणमित्येवोक्ते' ख। 8. 'समानाधिकरणमि-' क। 9. 'उक्तः' ख। 10. क-पुस्तके 'भिन्नम्' इति नास्ति। 11. 'स' क।

**जातिप्रत्यासत्तिरधिकरणत्वम् ॥ १६१ ॥**

**सकलमूर्त्तसंयोगित्वं विभुत्वम्। विद्यमानयोः सम्बन्धो**

---

समानाधिकरणाद्यपेक्षितमधिकरणं लक्षयति—जातिरिति। जातेः प्रत्यासत्तिः सम्बन्धो यस्य तत्त्वम् अधिकरणत्वमित्यर्थः। यद्वा अधिकरणत्वम् अधिकरणनिष्ठो धर्मः स च जातिनिबन्धन एवेत्यर्थः।

ननु जातिप्रत्यासत्तेः सामान्यादावभावात् तस्याधिकरणत्वं न स्यात्। तथा च "प्रमेयत्वं सामान्यम् अभिधेयत्वं" सामान्यमिति विशिष्टप्रत्ययो न स्यात्, सामानाधिकरण्याभावात्। न च संयोगादिसम्बन्धाभावात् प्रमेयत्वस्यानधिकरणमेव सामान्यादीति वाच्यम् अभावसमवायाद्यर्थमवश्यमङ्गीकृतस्वरूपसम्बन्धसत्त्वात्, अन्यथा भूतले घटाभाव इति "प्रत्ययो न स्यादिति चेत्—"न, प्रमेयत्वादेरपि जातित्वात्; (A) प्रमात्वमेव हि प्रमाविषये स्वरूपसम्बन्धेन वर्त्त"मानमुपाधिव्यपदेशं लभते। एवम् अभिधात्वमेवाभिधेयत्वम्। पाकत्वमेव पाचकत्वम्, परम्परया "पाकक्रियासम्बन्धात् तत्कर्त्तरि वर्त्तमानमुपाधिरित्युच्यते। न चैवं सामान्यादेर्जात्याधारत्वात् जातिमत्त्वप्रसङ्गेऽपसिद्धान्त इति वाच्यम्, साक्षात्सम्बन्धाभावेन जातिमत्त्वव्यपदेशाभावात्। "तस्मात् परम्परया जाति"सम्बन्धात् तत्प्रत्यासत्तिरधिकरणत्वं सामान्यादीनामविरुद्धमिति [10]"प्रमेयत्वं सामान्यमिति व्यपदेशो घटते। अथ वा जात्या सह एकार्थसमवायलक्षणप्रत्यासत्तिः सामान्यादिष्वस्तीति तेषामधिकरणत्वं न [11]व्याहन्यते। यद्वा संयोगसमवायसम्बन्धाभ्यामेव आधारत्वमधिकरणत्वमतः सामान्यादौ तदौपचारिकमेवेति न कश्चिद्दोषः ॥ ६० ॥

प्रत्यासत्तिप्रसङ्गेन बुद्धिस्थं विभुत्वं लक्षयति—सकलेति। घटादावतिव्याप्तिवारणाय सकलेति। संयोगो नाम युतसिद्धिः, अतस्तां लक्षयति—विद्यमानयोरिति।

---

(A) ननु तद्वति तत्प्रकारकत्वरूपं प्रमात्वमपि न सामान्यम्, तथा च प्रमेयत्वस्य जातित्वं पुनरनुपपन्नमिति चेन्न, तद्वति तत्प्रकारकज्ञानत्वमेव प्रमात्वमित्यभिप्रायादिति ध्येयम्।

---

1. 'जातिसम्बन्धेन' क। 2. '-मेयसा-' ख। 3. '-धेयसा-' ख। 4. 'धीः' ख। 5. 'नैवं' ख। 6. '-मानप्रमाद्वारा परम्परया वर्त्तमानत्वादुपाधिव्यपदेशं' ख। 7. 'औपाधिकक्रिया' ख। 8. इदं ख-पुस्तके नास्ति। 9. '-सम्बन्धवत् प्रत्या-' ख। 10. 'प्रमेयसामान्य-' ख। 11. इदं क-पुस्तके नास्ति क।

युतसिद्धिः । अविद्यमानयोराधाराधेययोः सम्बन्धोऽयुतसिद्धिः (A) ॥ १६२ ॥

साधनश्रेयोऽभिधायकं शास्त्रमिति ॥ १६३ ॥

सप्तद्वीपा धरा यावद् यावत् सप्त धराधराः ।
तावत् सप्तपदार्थीयमस्तु वस्तुप्रकाशिनी ॥

इति श्रीशिवादित्यविरचिता सप्तपदार्थी समाप्ता ॥

---

पृथग् विद्यमानयोः पदार्थयोः कुण्डवदरयोरिव सम्बन्धो युतसिद्धिरित्यर्थः । तत्प्रतियोगित्वेनायुतसिद्धिं लक्षयति—अविद्यमानयोरिति, पृथगविद्यमानयोरित्यर्थः पृथक्पदाभावे असम्भव एव स्यात्, तदुक्तम् अयुतसिद्धिरपृथक्सिद्धिरिति। आधारेत्यादिस्वरूपकथनम् ॥ १६२ ॥

किं तत् शास्त्रम् अत आह—साधनेति । साधनस्य सुखदुःखाभावसाधनस्य श्रेयोऽभिधायकं श्रेयःसम्बन्धाभिधायकं शास्त्रमित्यर्थः । तथा हि ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यादिना यागस्य स्वर्गादिसम्बन्धो बोध्यते, अतः साधनश्रेयोऽभिधायकं शास्त्रमित्यर्थः । तथा चोक्तम्—

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥ इति
'शास्त्रत्वं तत्साधनादिति च'[1] ।

अनिष्टबोधकवचनस्य शास्त्रत्वं मा भू[2]दिति साधनेत्युक्तम् । वेदवाक्यापेक्षितपदार्थबोधकत्वाद् वैशेषिकग्रन्थोऽपि शास्त्रं भवति । इतिशब्दः समाप्तौ ॥ १६३ ॥

ग्रन्थस्य नामधेयं कुर्वन् ग्रन्थमाशास्ते—सप्तेति । जम्बु-प्लक्ष-कुश-क्रौञ्च-शाक-शाल्मलि-पुष्करा इति सप्त द्वीपा यस्यां सा तथा, धरा पृथ्वी यावत् वर्त्तते, यावच्च सप्त धराधराः

---

(A) अत्र कणादसूत्रं तु 'इदमिहेति यतः कार्यकारणयोः स समवायः' (अ ७, आ २, सू २६) इति, 'युतसिद्ध्यभावात् कार्यकारणयोः संयोगविभागौ न विद्येते' (अ ७, आ २, सू १३,) इति च । अयुतसिद्धिपदार्थ उत्तरमीमांसायाम् 'अपरिग्रहाच्चात्यन्तमनपेक्षा' (ब्रह्मसूत्र १७, पा २, अ २, ) इति सूत्रभाष्ये भगवच्छङ्कराचार्यैर्बहुधा विकल्पितः ।

---

1. 'शास्त्रं हि तच्छासनादिति च' ख । 2. '-दिति हि' क ।

कुलपर्वता महेन्द्रमलयादयः[1] [2]तावत्कालम् आचन्द्रार्कमिति यावत्, इयं सप्तपदार्थी वस्तूनां [3]पदार्थानां प्रकाशिका अस्तु । आशंसायां लोट् ।

सौराष्ट्रदेशोऽखिल[4]देशवर्यः सदाकरो दक्षिणभूमिनिष्ठः ।
विराजते सह्यगिरीन्द्रसानौ यत्रास्ति गोकर्णमहाबलेशः ॥
तद्देशजन्मा यतिरेकदण्डी सरस्वतीमस्तकमाधवाख्यः(A) ।
सोऽयं शिवादित्यकृतेरकार्षीट्टीकामिमां बालसुखप्रवृत्त्यै ॥
माधवाख्ययतीन्द्रेण कृष्णातीरनिवासिना ।
कृता सप्तपदार्थ्यास्तु टीकेयं मितभाषिणी ॥ (B)

## शुभं भवतु

(A) सरस्वत्युपनामा माधव इत्यर्थः ।

(B) अतः परं क-पुस्तके आदर्शपुस्तकान्तरीयतयाऽयं श्लोकोऽधो धृतः—

श्रीमन्माधवसाधुवाक्यरचितां चातुर्यभावस्फुटां
भावाभावपदार्थबोधविधुरज्ञानेक्षणे दीपिकाम् ।
अज्ञानातितमोऽभिभूतविषये स्वल्पां बहुव्यापिनीं
कृत्वेमां मितभाषिणीं करधृतां पश्यन्तु तर्कं जनाः ॥ इति ।

---

नत्वा गुरुपदद्वन्द्वं तत्कृपाबलमीयुषा ।
अमरेन्द्रेण विप्रेण धूलाजोडानिवासिना ॥
गीताञ्जलिं विनिर्माय टिप्पनीं सप्तमावधिम् ।
काव्यप्रकाशे सादर्शे विधाय च ततः परम् ॥
इषुबाणवसुक्ष्मामे शाके वृषगते रवौ ।
सम्पादिता शिवादित्यकृतिस्तत् प्रीयतां हरिः ॥

---

1. अतः परं ख-पुस्तके—'महेन्द्रो मलयः सह्यो हिमवान् पारियात्रिकः । गन्धमादनमुदयश्च सप्तैते कुलपर्वताः' इत्यधिकमस्ति । 2. 'यावत्' क । 3. इदं ख-पुस्तके नास्ति । 4. '-राष्ट्रवर्यः' ख ।

# पदार्थ-चन्द्रिका

[ शेषानन्त-कृता सप्तपदार्थी-टीका ]

कर्णोत्तंसितशेषशेषफणभृत्पुच्छच्छटापीडनोन्-
मीलच्चन्द्रकलामृतोर्मिकणिकास्वादेन मेदस्विना ।
मन्दस्पन्दविभिन्नबन्धमुरगाकल्पेन भीतिस्पृशः
स्पृष्टायाः सुदृशो विलोक्य वदनं हृष्यन् हरः पातु नः ॥

अव्यादव्याजसौभाग्यपदसङ्केतमन्दिरम् ।
महो महोदयद्वारं नवाम्बुदविडम्बिनः ॥

चिकीर्षितकर्मसमाप्तिप्रतिबन्धकदुरितनिवृत्त्यर्थं कृतमिष्टदेवतानतिस्तुतिरूपं मङ्गलं गुणप्रधानभावेन शिष्यशिक्षायै निबध्नाति—हेतव इत्यादिना । तत्रायमन्वयः—शम्भवे नमः । शम्भव इत्यन्तर्भूतण्यर्थाद्भवतेर्डु-प्रत्ययः[1] । शम्भवत्यस्मादिति व्युत्पत्तिरपादाने डु-प्रत्ययाभावाच्चिन्त्येति माधवः [ धातुवृत्तौ ७९ पृ० ] । साधुत्वान्वाख्यानप्रकारमात्रं चैतत् । सप्तग्रामादिवद्रूढिः पुनरियं महेशस्य । अत एव योगप्रसञ्जितकान्तादिनतिव्युदासार्थं प्राचीनविशेषणोपादानमिति निरस्तम् । न हि निर्विशेषणादपि शम्भुशब्दात् कान्तादिः प्रतीयते[2], किमर्थं तर्हि प्राचीनविशेषणोपादानम् ? न हीश्वरप्रणामकरणकाले तल्लक्षणप्रमाणोपन्यास उपयुज्यते युज्यते वा, प्रमाणमुपन्यस्यता[3]ऽनुपन्यस्यताऽप्यमरेण पामरेण वा सममेव स्वरूपसदीश्वरप्रणामादपेक्षितफललाभात्, तदपेक्षितापेक्षितक्रमेण सकलशास्त्रार्थस्य प्रागेव निरूपणप्रसङ्गे[4] तदर्थं मङ्गलवैयर्थ्याच्चेति चेत्, न[5] । उक्तमेवैतत् । [6]स्तुतिरूपं मङ्गलमुपनिबध्नाति—'हेतव' इत्यादिनेति । एव-कारः कार्त्स्न्ये, 'जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षु'रिति यथा । तेन कृत्स्नकार्यहेतव इत्युक्तं भवति । अन्यथा, त्रिचतुरादिकार्यहेतुत्वेनापि बहुवचनविश्रान्तावस्मदादि-[7]साधारण्यप्रसङ्गात् । हेतव एव [8]निमित्तायैव [9]नोपादानायैवेत्यर्थ इति तु व्यस्तत्वादुपेक्ष्यम्, [10]स्तुत्यनुपयोगाच्चाकार्यव्यावर्तकैव-कारव्याख्यानवत् । सामान्यतः सिद्धमप्यसाधारण्येन परमपुरुषार्थहेतुत्वमाह—[11]संसारार्णवसेतव इति । संसारो दुःखसन्तानः स

---

माधवं मा-धवं नत्वा वागीशं पितरं मम ।
माधवं मार्गमास्थाय टिप्पण्येषा वितन्यते ॥

1. मितद्र्वादिभ्य उपसङ्ख्यानम्(वा० ३।२।१८०) । सर्वेषां शं सुखं भावयति इत्यर्थः । 2. 'प्रतियन्ति' A. 3. 'अपि' इत्यधिकः B. 4. 'तदर्थक-' B. 5. 'न' नास्ति B. 6. 'स्तुतिरूप-' B. 7. '-साधारण-' A. ८। तथा च—'संसारमहीरुहस्य बीजाय'—संसार एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणायेत्यर्थः । एतेन ईश्वरे प्रमाणमपि दर्शितं भवति । तथा हि, यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि । न च तत्कर्तृत्वमस्मदादीनां सम्भवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिरिति न्यायसिद्धान्तमुक्तावली ( पृ० २ ) विश्वनाथः । एतेन वैशेषिकवन्नैयायिकनये चेश्वरस्य केवलनिमित्तत्वं न तु वेदान्तिवन्निमित्तोपादानोभयकारणत्वं सिध्यतीति ज्ञेयम् । 9. 'एव' नास्ति B. 10. 'च' नास्ति B. 11. 'संसारार्णवेति' A.

एवार्णवो, दुर्गमचरमावधित्वसाधर्म्यात्; तस्य [1]सेतुरवधिमदनवच्छिन्नचरमावधिप्राप्तिसाधनता-साधर्म्यात्। तत्रैव द्वारमाह—[2]सर्वविद्यानां गुरव इति। सर्वेषां विद्यास्तत्त्वज्ञानानि तेषामुपदेष्ट्रे तज्जनकशब्दप्रयोक्त्रे, सर्वतत्त्वज्ञानजनकज्ञानविषयीभूतसाधर्म्यवैधर्म्यपरशास्त्र-प्रवर्तकायेति यावत्। [3]कणादसाम्यं व्यवच्छिनत्ति—प्रभव इति। परोपदेशानपेक्षायेत्यर्थः।

१। के पुनः षष्ठीसमासबललब्धविद्याविषयभावाः सर्वे, किंनामानः, कियन्तश्च, किं च पुरुषार्थतत्साधनबहिर्भूततद्विद्योपदेशेनेति शङ्काचतुष्टयम् 'एतेषां तत्त्वज्ञानं निःश्रेयसहेतुः' इत्यन्तेन महासन्दर्भेण परिहरिष्यन्नेव प्रथमशङ्कोत्तरेण [4]पदार्थ-पदेन वक्ष्यमाणविशेषोद्देश[5]लक्षणावकाशदानाय सामान्यतः शास्त्रप्रतिपाद्यान् पदार्थानुद्दिशति—[6]प्रमितिविषया इति। दृश्यते च धर्म्यंशानुवादेनाप्युत्तराभिधानं 'सूर्य एकाकी चरती'त्यादौ। प्रमितीति विधापदं विवृणोति, न तु लक्षणमेतत्; उद्देशावसरे लक्षणस्यानाकाङ्क्षितत्वात्, वक्ष्यमाणलक्षण-लक्षणविरोधाच्च। 'तत्र पदार्थ-लक्षणं कृतमेवे'त्यग्रिमग्रन्थाविरोधं तु तत्र वक्ष्यामः। अन्ये तु एतद्ग्रन्थानुरोधेन धर्मो लक्षणमिति सामान्यतो लक्षणं लक्षयित्वा व्यावर्तकोपरञ्जकभेदेन च विभज्य वक्ष्यमाणव्यावर्तकलक्षण लक्षणानाक्रान्तमप्युपरञ्जकमेवैतल्लक्षणमित्याहुः। तन्न; उद्देशावसरे लक्षणस्यानाकाङ्क्षितत्वात्। अपि चोपरञ्जकत्वं न धर्मत्वं स्वोपरक्तधीजनकत्वं वा, व्यतिरेकिणोऽप्युपरञ्जककोटिप्रवेशे द्वैविध्यानुपपत्तेः; सामान्यलक्षणसमानदेशस्य विशेषलक्षणत्वायोगाच्च। केवलान्वयित्वस्य तु तत्त्वे घटस्यापि प्रमेयत्वं स्याल्लक्षणमिति शास्त्रव्यवहारातिरेकिणी कल्पनेति। कश्चित्तु द्रव्यादिपदार्थ-विशेष्यकेतरभेदानुमितिजनकासाधारणधर्मविख्यापयिषया द्रव्यादीनां पक्षाणां पक्षतावच्छेदक-तयोच्यमानमपि द्रव्यत्वादिकं यावन्न पदार्थत्वादिसाधारणधर्मव्यावर्तकतयाऽध्यवसीयते, न तावत् स्वावच्छिन्नां पक्षतां व्यावर्तयितुमलम्। न च पदार्थत्वादेस्तद्भेदाज्ञाने तेषां पदार्थत्वाद् व्यावृत्तिः सुप्रतिपदेति पदार्थत्वविशेष्यकेतरभेदानुमित्युपयोगिलक्षणमाह—'प्रमितिविषया' इति। पक्षता-वच्छेदकं चात्र केवलान्वयिधर्मत्वं, द्रव्याद्यन्योन्याभावकूटसमानाधिकरणत्वं हेतुरिति न पक्षता-वच्छेदकहेत्वोरैक्येनानुमानवैयर्थ्यमित्याह। तन्न; 'पदार्थत्वमितरेभ्यो भिद्यते' इति प्रतिज्ञायामितरे द्रव्यत्वादयस्तेषां च पदार्थत्वप्रतियोगिकभेदवत्त्वमेवेतरत्वं; तथा च तेषामेतद्भेदा-

---

1. 'सेतु'-शब्दनिर्वचनन्तु ब्रह्मसूत्रशाङ्करभाष्ये (१।३।१) अनुसन्धेयम्। 2. ब्रह्मसूत्रशाङ्करभाष्ये' (१।१।३) 'ईशानः सर्वविद्यानाम्' (महानारा० १७।५) इत्यादिव्याख्यानं द्रष्टव्यम्। 'सर्वविद्यानाम्' इत्यत्र निषादस्थपतिन्यायेन [मी० ६।१।१३।५१-५२ सू०], सति सामानाधिकरण्ये न वैयधिकरण्यम् इति न्यायेन च षष्ठीतत्पुरुषात् कर्मधारय एवोपपन्नतर इति मन्तव्यम्। 3. 'काणादादि-साधर्म्य' B. 4. पदस्य अर्थः (गच्छन्ति इन्द्रियाणि यं सः) पदार्थः। 'अभिधेयत्वं पदार्थसामान्यलक्षणम्' इति तर्कसंग्रहदीपिकायामन्नंभट्टः। 5. त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः—उद्देशः, लक्षणं, परीक्षेति। नामधेयेन पदार्थाभिधानम्—उद्देशः, उद्दिष्टस्य तत्त्वव्यवस्थापको धर्मः—लक्षणम्, लक्षितस्य तल्लक्षणम् उपपद्यते न वेति विचारः—परीक्षा (न्यायमञ्जरी भा० १, पृ० १२)। 6. 'प्रमितीति' A.

प्रतिपत्तौ [1]नैतस्यापि ततो भेदप्रतिपत्तिः, [2]इतरेतराश्रयत्वात्। किं चास्माल्लक्षणाद् द्रव्यत्वादि-भिन्नतया [3]केवलान्वयिनः प्रतीतौ तद्भिन्नतया द्रव्यत्वादयः प्रतीता इत्येतावता न तेषां पक्षता-वच्छेदकत्वमुपपद्यते, द्रव्यत्वस्य गुणत्वादेर्गुणत्वस्य कर्मत्वादेरकेवलान्वयिनोऽपि व्यावृत्तेः प्रागुक्तयुक्त्या प्रतिपिपित्सितत्वात्, स्वेच्छाकल्पितस्य द्रव्याद्यन्योन्याभावकूटसमानाधिकरणत्वस्य हेतूकृतत्वे[4] प्रमितिविषयत्वस्य लक्षणत्वानिर्वाहाच्च ॥

२। किंनामानस्ते, कियन्तश्चेति [5]प्रश्नयोरुत्तरमाह—ते चेति। आख्यान्तं प्रथमस्योत्तरम्, [6]उत्तरमुत्तरस्येत्युत्तरविनियोगो लिङ्गात्। विभागबललब्धसंख्यानुवादः—[7]सप्तैवेति। एव-कारार्थस्तु चिन्त्यते। स च यद्यपि नाष्टमपदार्थनिषेधः, प्रतियोग्यप्रसिद्धेः; नापि न्यूनाधिकसंख्याव्यवच्छेदः, उत्तरोत्तरसंख्यायाः पूर्वपूर्वसंख्याव्याप्यत्वेन न्यूनसंख्याऽभावे तदभावप्रसङ्गात्, अष्टादित्वस्य च प्रत्यक्षादिसिद्धत्वात्; नापि विशेषणविशेष्यीकृतसंख्यान्वयक्रमेण पदार्थेषु सप्तत्वा-योगव्यवच्छेदः, सप्तान्यस्मिन् पदार्थत्वयोगव्यवच्छेदश्च तदर्थ इति युक्तम्, सप्तत्वायोगव्यवच्छेद-स्याधिकपदार्थवादिनाऽपि स्वीकारेण तदभिधानानर्थक्यभिया सप्तान्यतमोपाध्ययोगव्यवच्छेदपर्य-वसाने तदयोगाप्रसिद्ध्या[10] पूर्वार्थानुपपत्तेः, सप्तान्यतमोपाधिमदन्याप्रसिद्ध्या च द्वितीयस्याप्यनुप-पत्तेः। एवं विशेषणविशेष्यीकृतपदार्थान्वयक्रमेण सप्तसु [11]पदार्थत्वायोगव्यवच्छेदस्तदन्यस्मिन् सप्तत्वयोगव्यवच्छेदश्च[12] तदर्थ इत्यपि न युक्तम्; तथाऽपि समभिव्याहृतपदार्थतावच्छेदक-व्याप्यत्वमेव सर्वत्रैव-कारार्थः। प्रतीयमानेतरपदार्थतावच्छेदकनिष्ठसामानाधिकरण्यप्रतियोगिनः समभिव्याहृतपदार्थतावच्छेदकस्य तत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वमात्रमिति तु परमार्थः; पार्थ एव धनुर्धरः, शङ्खः पाण्डुर एवेत्यतः पार्थत्व-पाण्डुरत्वयोर्धनुर्धरत्व-शङ्खत्वव्यापकताप्रतीतेः। अत्यन्तायोगव्यवच्छेदस्थले तु लक्षणया प्रतीतसामानाधिकरण्यानुवादकत्वमात्रं[13] तस्य; नीलं सरोजं भवत्येवेत्यतो वाक्यार्थीभूतसामानाधिकरण्यमात्रं[14] प्रतीयते[14]*। तदिह संख्यान्वये सप्तान्य-तमोपाधिमत्त्वं पदार्थत्वव्यापकमित्यर्थपर्यवसानाच्छक्त्यादयः पदार्थान्तरमिति भ्रमनिराकरणाय तेषु सप्तान्यतमोपाधिमत्त्वानुमानम्[15]। पदार्थान्वये च पदार्थत्वं सप्तान्यतमोपाधिमत्त्वव्यापकमित्यर्थ-लाभात् [16]पदार्थत्वविरोधित्वादभावो[17] न [18]पदार्थ इति भ्रमनिराकरणायाभावे पदार्थत्वानुमानं विवक्षितम्। पदार्थविरोधित्वं हि यदि द्रव्यादिविशेषविरोधित्वं[19] तत् तत एव बहिर्भावं साधयेन्न पदार्थमात्रात्। न हि गुणविशेषसंयोग-विरोधी विभाग इति गुण एव नेति [20]युक्तम्; संयोग एव नेति[21] तु कथञ्चिद् युक्तम्। सामान्यतः पदार्थमात्रविरोधित्वं तु पदार्थो नास्तीति प्रतीत्यभाव-

1. 'नेतरस्यापि' A. 2. 'इति' इत्यधिकम् A. 3. 'केवलान्वयिनाम्' A. 4. 'अपि' इत्यधिकम् A. 5. 'प्रश्नोत्तर'- A. 6. 'उत्तरम्' नास्ति A. 7. 'सप्तेति' B. 8. 'आदि' नास्ति B. 9. 'सप्तत्वादि-' A. 10. 'च' अधिकः B. 11. 'पदार्थत्वयोग-' A. 12. '-च्छेदकश्च' A. 13. '-वादत्व-' A. 14. '-मात्रप्रतीतिः' A. 15. '-तमत्वानु-' A. 16. 'पदार्थ-' A. 17. वैशेषिकसूत्रे अभावस्य सप्तमपदार्थत्वं कण्ठतो नोक्तं कणादेनेत्यस्यापदार्थत्वं सूचितमेवेति ज्ञेयम्। 18. "वस्तुधर्मोऽपि द्विविधः, सिद्धः साध्यश्च। सिद्धोऽपि द्विविधः, पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च। तत्राद्यो जातिः द्वितीयो गुणः। साध्यः पूर्वापरीभूतावयवः क्रियारूपः" इति काव्यप्रकाशः ( अ० २ )। 19. 'तर्हि' B. 20. 'युक्तम्' नास्ति B. 21. 'इति' इत्यधिकम् A.

पराहतम्, अन्ततो नास्तितताया एव पदार्थस्य सत्त्वात्। तदुक्तमाचार्यैः—'अभावस्तु स्वरूपवानपी'[1]त्यादौ ॥

३। यथोद्देशं द्रव्याणि विभजते—[2]तत्रेति। अत्रैव-कारस्य संख्यासम्बन्धे नवान्यतमोपाधिमत्त्वं द्रव्यत्वव्यापकमित्यर्थलाभाद् द्रव्यत्वेन प्रमिते सुवर्णादौ नवान्यतमत्वानुमानम्। तद्रहिते चान्धकारादौ द्रव्यत्वव्यतिरेकानुमानं विवक्षितम्। द्रव्यान्वये[3] नवान्यतमोपाधिमत्त्वव्यापकं द्रव्यत्वमित्यर्थलाभात् कालाकाशयोर्नवान्यतमयोर्द्रव्यत्वानुमानेनोपाधित्वेनाभ्युपेया क्रियैव कालः, मूर्तद्रव्याभाव एवाऽऽकाशमिति भ्रमनिराकरणमिति ध्येयम्। न ह्युपाधिभूता[4] आदित्यगत्यादयः परसमवायिनो विनोपनायकं[5] विभुद्रव्यं पिण्डसंबन्धमनुभवन्ति। न चासंबद्धा एव परत्वापरत्वे जनयितुमीशते। आत्माकाशावेव तदुपनायकाविति च विना धर्मिग्राहकमतिप्रसङ्गादेव निराकृतमन्यत्रेति सार्वत्रिकशब्दगुणाश्रयस्य विभुद्रव्यान्तरस्याऽऽवश्यकतया नाममात्रे विवादपर्यवसानात्[6] नाभावमात्रताकाशस्येत्यास्तां विस्तरः ॥

४। गुणास्त्विति। अत्राप्यवधारणस्य संख्यान्वयपक्षे चतुर्विंशत्यन्यतमोपाधिमत्त्वं गुणत्वव्यापकमित्यर्थलाभात्, गुणत्वेन संप्रतिपन्ने सत्त्वादौ चतुर्विंशत्यन्यतमोपाध्यनुमानम्। तद्व्यावृत्त्या च मध्यत्व-लघुत्वादौ गुणत्वाभावानुमानं विवक्षितम्। गुणान्वयपक्षे तु चतुर्विंशत्यन्यतमोपाधिमत्त्वव्यापकं गुणत्वमित्यर्थलाभात्तादृशयोः संख्या-पृथक्त्वयोर्गुणत्वानुमानमिति द्रष्टव्यम् ॥

५। कर्माणीति। [7]अत्रावधारणस्य संख्यान्वयात् पञ्चान्यतमोपाधिमत्त्वस्य कर्मत्वव्यापकतालाभाद् भ्रमणरेचनादिषु कर्मसु पञ्चान्य[8]तमोपाधिमत्त्वानुमानं विवक्षितम् ॥

६। [9]सामान्यमिति। यद्यपि ग्रन्थान्तरे द्वैविध्यमेव सामान्यस्योक्तं तदुभयोपाधिसमावेशादेव परापरव्यवहारोपपत्तेस्तथाऽपि वक्ष्यमाणमात्र-पदगर्भपरिभाषानुसारेण त्रैविध्याभिधानम् ॥

७। विशेषास्त्विति। यद्यप्यनन्यथासिद्धव्यावृत्तिबुद्धिप्रमाणका [10]विशेषाः शब्दतद्ध्वंसा-

1. '-त्यादि' B. 2. 'तत्र सर्वप्रमाणज्येष्ठप्रत्यक्षग्रहणयोग्यानां पूर्वं पृथिव्यप्तेजसामुपन्यासः। तत्राप्येकादशगुणतेजसः पूर्वं चतुर्दशगुणानां पृथिव्यपाम्। तत्रापि सर्वाधारभूतत्वात् पृथिव्याः। तदनु बाह्येन्द्रियग्राह्यगुणाधारत्वात् पृथिव्यप्तेजोभिस्तुल्यत्वख्यापनार्थं वायोः। तदनु पञ्चानामपि महाभूतानां सङ्कलनार्थमाकाशस्य। ततश्च मूर्त्तमात्रवृत्त्योः परत्वापरत्वयोरुत्पादकत्वात् कालदिशोरथ शीतातपमेघवृष्टिवनस्पतिपुष्पफलादीनां नानाविधमूर्त्तवस्तूनां कारणत्वात् कालदिशोः। विभूनां सर्वेषामेकत्र करणार्थमात्मनः। तदन्ववशिष्टस्य मनस' इति जिनवर्द्धनः। 3. 'तु' अधिकः B. 4. 'अपि' अधिकः B. 5. '-नायक-' B. 6. '-सानप्रसङ्गात्' B. 7. 'अत्र' नास्ति A. 8. '-तमत्वानु-' A. 9. 'परस्परं विभक्तेषु पदार्थेषु योऽनुवृत्तिप्रत्ययो जायते तत्र सामान्यं कारणम्' इति जिनवर्द्धनः। 10. 'विशेषयन्ति स्वाश्रयमिति विशेषाः। ते अनन्ताः, न विद्यते अन्तः पर्यवसानं गणनया येषां ते तथा। आनन्त्ये हेतुमाह—यावन्ति यावत्संख्याकानि नित्यद्रव्याणि तेषु समवायलक्षणा वृत्तिर्येषां ते तथात्वं नाम धर्मः तस्मात् प्रतिनित्यद्रव्यमेकैको विशेषो वर्त्तते नित्यद्रव्याणां परमाणूनां गगनकालदिगात्ममनसां सर्वेषां मीलने

न्यथासिद्धद्रव्यावृत्तिबुद्धावाकाशे न शक्याभ्युपगमास्तत्राऽपि बहुतरनित्यद्रव्यवृत्तित्वमेव यावन्नित्यद्रव्यवृत्तित्वं विवक्षितम्। आनन्त्यं च सजातीयापकर्षानधिकरणसंख्याप्रतीतिविशेष्यत्वम्, न बहुत्वमद्रव्यत्वात्। न वा देशतः कालतो[1] वा शून्यत्वं, व्यापकसाधारण्यात्। द्रव्याद्यानन्त्यतुल्यतां व्यवच्छिनत्ति—एवेति। अनुगतविभक्तविभाजकोपाधिशून्या इत्यर्थः॥

८। [2]समवायस्त्विति। एकत्वं स्वाश्रयान्योन्याभावासमानाधिकरणपदार्थविभाजकोपाधिमत्त्वम्॥

९। [3]अभावस्त्विति। इह संसर्गाभावान्योन्याभावोपाधिकं विभागान्तरमपि द्रष्टव्यम्। वक्ष्यति च 'अपरे भेदाः स्वयमूहनीया' इति। अत एव चात्यन्ताभावलक्षणे प्रागभावादित्रिकं संसर्गाभावत्वेन व्यवहरिष्यते। चातुर्विध्याभिधानं तु साक्षात्परंपराविभाजको[4]पाधीनेकीकृत्येति द्रष्टव्यम्॥

१०। ननु पृथिव्यादीनां चतुर्णां नित्यानित्यैकतरमात्रस्वभावत्वे [5]बाधाप्रामाणिकत्वादवयवपरंपरानुपरमप्रसङ्ग इति शङ्कां निराकुर्वन्नेव विभक्तविभागमाह—पृथिवीत्यादिना। शब्दतः प्रतीतं विरोधं विषयव्यवस्थया परिहरति—[6]परमाणुरूपेति, परमाणुरूपैव। यतो नित्या न प्रत्यक्षादि-

आनन्त्यात् तद्गतानां विशेषाणां प्रत्येकं भिन्नानामानन्त्यं ते तु योगिनामेव विषयाः। प्रयोजनं चैषां व्यावृत्तिप्रत्ययः। यथा अनित्यद्रव्येषु विलक्षणाकार-गुणक्रियादिभिरयमस्मादन्य इति व्यावृत्तिरनुभूयते तथा परमाण्वादिष्वाकारादीनां तुल्यत्वान्न तत्कृतः परस्परं भेदावगमः। तेन यतो व्यतिरिक्तः प्रतिद्रव्यं व्यावृत्तिप्रत्ययो जन्यते ते विशेषाः। ननु विशेषेषु विशेषा वर्त्तन्ते वा न वर्त्तन्ते इति चेत्त एव विशेषान्तराणि वा। आद्ये आत्माश्रयः। द्वितीयकल्पे तु स्पष्टैवानवस्था। न चेत्तर्हि यथा तेषु विशेषेषु विशेषकल्पनां विनाऽपि व्यावृत्तिप्रत्ययस्तथा नित्यद्रव्येष्वेवं संभविष्यतीति किं तत्कल्पनेनेति चेत्तदसम्प्रल्पप्रायं द्रव्याणामेतत्स्वरूपत्वात्। तथा ह्यप्रकाशात्मा घटादिः प्रकाशेन प्रदीपादिना प्रकाश्यते न पुनः प्रकाशस्वभावरूपः प्रदीपः प्रदीपान्तरेण। तथा अविशेषस्वभावेषु द्रव्येषु विशेषकृतो व्यावृत्तिप्रत्ययो विशेषात्मसु विशेषेषु स्वत एव न पुनस्तद्गतविशेषान्तरकृत' इति जिनवर्द्धनः।

1. 'कालतोऽन्त'- B. 2. अवयवावयविनोः, गुण-गुणिनोः, क्रिया-क्रियावतोः, जाति-व्यक्त्योः, विशेष-नित्यद्रव्ययोश्च समवायः सम्भवति। समवायस्य पदार्थत्वं ब्रह्मसूत्रशाङ्करभाष्ये (२।२।१३,१७) खण्डितमाचार्येण। 3. विशेषणविशेष्यसम्बन्धेन स्वरूपसम्बन्धेन वा अभावः स्वाधिकरणे वर्त्तते इति नैयायिकाभ्युपगमः। 'प्राक् पूर्वं प्रतियोगिनोऽभावोऽविद्यमानता प्रागभावः, यथा—तन्तुषु पटस्यानुत्पन्नस्य। प्रध्वंसश्चासावभावश्च प्रध्वंसे सति वाऽभावः, न तु प्रध्वंसस्याभाव इति समासः, यथा—लकुटाद्यभिघाते जाते घटादिविनाशः। अत्यन्तमनाद्यन्तत्वेनाभावोऽत्यन्ताभावः, यथा—आत्मनि रूपस्य वा घटादिषु ज्ञानस्याभावः। अन्योन्यं परस्परम् अभावोऽन्योन्याभावः, यथा—घटः पटो न भवति, पटो घटो न भवति' इति जिनवर्द्धनः। 4. '-पाधिमेकी-' B. 5. 'बाधाप्रमाणित्वा-' A. 6. ईश्वरस्य चिकीर्षावशात् परमाणुषु क्रिया जायते। ततः परमाणुद्वयसंयोगे सति द्व्यणुकमुत्पद्यते। त्रिभिर्द्व्यणुकैस्त्र्यणुकम्। एवं चतुरणुकादिक्रमेण महापृथिवी महत्य आपः महत् तेजः महान् वायुरुत्पद्यते। एवमुत्पन्नस्य कार्यद्रव्यस्य संजिहीर्षावशात् क्रियया परमाणुद्वयविभागे सति द्व्यणुकस्य नाशः। ततस्त्र्यणुकस्य ततश्चतुरणुकस्य इत्येवं पृथिव्यादिनाशः।

सिद्धा, नित्यत्वादकार्याऽपि, ततो न बाधः। परमाणुरूपा नित्यैव, नानित्या, अतो नावयवपरंपरानुपरमः। अनित्या च यतः कार्यरूपाऽतः सैव स्वकारणीभूतां नित्यामप्यानेष्यतीति नाप्रामाणिकत्वमपीति भावः। [1]साऽपीति। एकस्मिन्नवान्तर[2]भेदमात्रे पृथिवी-कार्यपृथिव्योरन्वयसमुच्चयार्थोऽपि-शब्दः। एवमेवंजातीयके सर्वत्र द्रष्टव्यम्। ननु शरीरादयो न कार्यपृथिवीभेदोदाहरणानि, परमाणुपुञ्जातिरिक्ततत्कार्यशरीराद्यभावात्। इन्द्रियाणां पुनरतीन्द्रियाणां नास्ति स्वरूपेऽपि प्रमाणम्, दूरे परमाणुपुञ्जेतरत्वे इत्यत आह—प्रत्यक्षसिद्धमिति। इदं च यथायोगं लिङ्गव्यत्ययेनेन्द्रिय-विषयाभ्यामपि सम्बन्धनीयम्। तदयमर्थः—पुञ्जीभूता अपि हि परमाणवो नातीन्द्रियत्वमत्यजन्तः शरीरविषयाकारेण प्रत्यक्षीभवनक्षमा इति शरीर-विषयौ तावदन्यावेव तज्जन्यावभ्युपगन्तव्यौ। इन्द्रियमपि [3]मैव स्वविषय(क)प्रत्यक्षतः सैत्सीत्, [4]स्वविषय-

असमवायिकारणनाशाद् द्व्यणुकनाशः; समवायिकारणनाशात् त्र्यणुकनाश इति सम्प्रदायः। सर्वत्र असमवायिकारणनाशाद् द्रव्यनाश इति नवीना इति तर्कसंग्रहदीपिकायाम।रम्भवादापरपर्याय-परमाणुकारणतावादः।

सृष्ट्युपसंहार-प्रसङ्गे 'विपर्ययेण तु क्रमः अत उपपद्यते च' (२।३।१४) इति ब्रह्मसूत्रं द्रष्टव्यम्।

1. तथा हि कणादसूत्रम्—'तत् पुनः पृथिव्यादि कार्यद्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम्' (वै० सू० ४।२।१)।

न्यायसिद्धान्तमुक्तावल्याञ्च—(पृ० ३७) 'सा च त्रिविधेति। सा कार्यरूपा पृथिवी त्रिविधा शरीरेन्द्रियविषयभेदादित्यर्थः'।

'आद्यभेदविशेषाणामानन्त्याद् वक्तुमशक्यत्वाद् द्वितीयभेदस्य प्रभेदानभिदधाति' इति जिनवर्द्धनः।

तर्कसंग्रहे तु पुनस्त्रिविधेति पाठः, न तु सा पुनस्त्रिविधेति। उक्तञ्च ग्रन्थकृता दीपिकायां 'प्रकारान्तरेण विभजते' इति। अत्र नीलकण्ठः—प्रकारान्तरेणेति। पृथिवीमित्यनुषज्यते। अत्र नित्यपृथिव्याः शरीरेन्द्रियभिन्नत्वरूपविषयलक्षणाक्रान्तत्वेन विषयान्तर्गतत्वम् इति पृथिव्यास्त्रिविधत्वम्। अत एव मूले पुनस्त्रिविधेत्युक्तिः संगच्छत इति ध्येयम्। केचित्तु अनित्यपृथिव्या एव त्रैविध्यं वर्णयन्ति। भास्करोदया तु 'विभजनस्य सकर्मकत्वेन प्रकारान्तरपदस्वारस्यात् सामान्यानुषङ्ग एव न्याय्य इत्यभिप्रेत्यातार्थे मूलमपि प्रमाणयति—मूलेति। केचित्त्विति। अत्रारुचिबीजं तु परमाणुरूपाया नित्यायाः साक्षादुपभोगसाधनत्वरूपविषयत्वासंभवः। नित्यानित्योभयसाधारण-पृथिवीत्वावच्छेदेन त्रैविध्यकथनं व्याख्या-मूलयोः प्रकारान्तर-पुनः-पदयोः स्वारस्यादिति बोध्यम्' इति सिद्धान्तयति।

पार्थिवशरीरभेदानाह न्यायसिद्धान्तमुक्तावल्याम्—'योनिजमयोनिजं चेत्यर्थः। योनिजमपि जरायुजमण्डजं च। जरायुजं मानुषादीनाम्, अण्डजं सर्पादीनाम्, अयोनिजं स्वेदजोद्भिदादिकम्। स्वेदजाः कृमिदंशाद्याः, उद्भिदस्तरुगुल्माद्याः। नारकिणां शरीरमपि अयोनिजम्। न च मानुषादिशरीराणां पार्थिवत्वे किं मानम् इति वाच्यम्, गन्धादिमत्त्वस्यैव प्रमाणत्वात्। न च क्लेदोष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादिति वाच्यम्, तथा सति जलत्वपृथिवीत्वादिना सङ्करप्रसङ्गात्। न च तर्हि जलत्वादिकमेवास्तु न तु पार्थिवत्वमिति वाच्यम्, क्लेदादीनां विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानात् गन्धाद्युपलब्धेश्च पृथिवीत्वसिद्धेः। एतेन पार्थिवादिशरीरे जलादीनां निमित्तत्वमात्रं बोध्यम्'। 2. '-भेदवत्त्वमात्रे' B. 3. 'मैवं' B. 4. 'स्वविषयकप्र-' A.

विषयकप्रत्यक्षतस्तु सिध्येदेव। न हि स्वविषयगन्धादिप्रत्यक्षतस्तत्कारणतया सिद्धं न प्रत्यक्षसिद्धं भवति। न च स्वकर्मकप्रत्यक्षागोचरत्वे [1]कथं तस्य परमाणुपुञ्जेतरत्वसिद्धिः[2], गन्धव्यञ्जकत्वादपि तत्सिद्धिसंभवात्। तथा हि—परमाणुभवतो हि तस्य गन्धव्यञ्जकत्वं न पार्थिवपरमाणुत्वेन, अतिप्रसङ्गात्। नापि गन्धव्यञ्जकत्वेन[3], आत्माश्रयात्। नापि पार्थिवेन्द्रियत्वेन पार्थिवादिपरमाणूना[4]मिन्द्रियत्वस्वीकारेण प्रथमपक्ष एव पर्यवसानात्। घ्राणत्वं [5]च [6]जात्यन्यद्दुर्निरूपमित्यवच्छेदक[7]जातिवृत्त्यर्थं सत्तान्यद्रव्यत्वसाक्षाद्व्याप्यजातिमात्राश्रयपरमाणुपुञ्जातिरिक्तं कार्यमेवेन्द्रियमभ्युपेयमिति ॥

११-१२। [8]अबादिव्याख्यानं[9] पूर्ववत् ॥

१३। [10]विषयप्राणलक्षण इति। यद्यपि [11]वक्ष्यमाणविषयलक्षणपर्यालोचनया वायुर्न विषयस्तथाऽपि तथाभूतस्पर्शाश्रयतया तत्त्वोपचार इति ध्येयम्। विषयो वृक्षादिकम्पजनक इति। यद्यपि मुखनासिकानिर्गतस्य प्राणवायोरपि स्वसंनिहितवृक्षादिकम्पजनकत्वेनातिप्रसक्तं[12] विषयोदाहरणमयुक्तम्, तथाऽपि वायुविशेष एव बहिष्ठः सकललोकव्यवहारसिद्धोऽनेन विवक्षित इति द्रष्टव्यम्। वस्तुतस्तु बहिर्निर्गतस्य प्राणवायोर्विषयत्वेऽपि न दोषः, उपधेयसंकरेऽप्युपाधेरसङ्करादिति दिक्। [13]प्राणस्त्विति। यद्यपि शरीराभ्यन्तरप्रविष्टे बाह्यवायावतिप्रसक्तमिदं, न च ताच्छील्यमपि विवक्षितमसंभवात्, तथाऽपि शरीरान्तरं चारयति गमयत्यशितपीतरसानिति

---

1. 'कथं' नास्ति B. 2. '-त्वासिद्धिः' B. 3. '-कत्वेन्द्रियत्वेन' B. 4. '-मिन्द्रियत्वेन स्वी-' B. 5. 'च' नास्ति A. 6. 'जात्यन्यदुर्नि-' A. 7. '-काजाति-' A. 8. 'भवो भवो भौमः। स च काष्ठादिप्रज्वालको वह्निरुच्यते। दिवि गगने भवो दिव्यः, स च सूर्यविद्युदादिः। उदरे जठरे भव औदर्यः। स चाऽऽहरितस्याऽऽहारस्य मलरसधातुभावेन परिणामकारकः। आकरजः सुवर्णरूप्यादिरूपः। आकरात् स्थानविशेषाज्जात आकरज' इति जिनवर्द्धनः। 9. '-विभागस्य व्या-' B. 10. 'प्राणादिस्तु महावायुपर्यन्तो विषयो मतः' इति भाषापरिच्छेदे विश्वनाथः। अत्र सिद्धान्तमुक्तावली—यद्यपि अनित्यो वायुश्चतुर्विधः, तस्य चतुर्थो विधा प्राणादिरित्युक्तमाकरे तथाऽपि मतभेदेन त्रैविध्यमुक्तम्। 11. '-विषयपर्या-' A. 12. '-सक्तवि-' B.

13. एकोऽपि प्राण आश्रयभेदात् पञ्चधा भिद्यते। तथा हि अमरकोषटीकायाम्—

हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले।
उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः ॥
अन्नप्रवेशनं मूत्राद्युत्सर्गोऽन्नादिपाचनम्।
भाषणादिनिमेषाश्च तद्व्यापाराः क्रमादमी ॥

अपि च— 'उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः।
कृकरः क्षुतकरो ज्ञेयो देवदत्तो विजृम्भणे ॥
न जहाति मृतं चापि सर्वव्यापी धनञ्जयः' ॥

'न वास्तवमेतेषां पञ्चत्वमपि तु कल्पितम्। कथम्? एकस्मिन्नाश्रये मूर्तानां समावेशाभावात्' इति न्यायकन्दल्यां श्रीधरः।

व्युत्पत्त्या वायुविशेष एव विवक्षितः। दैवादेवंभूते बाह्यवायावतिप्रसङ्गस्तु सार्धत्रिकलक्षण-तात्पर्यकेणाभि-पदेन निरस्तः। विभागन्यूनतां परिहरति—स एवेति। ननु निर्वाताभिमतेऽप-वरकादौ व्यजनव्यापारानन्तरमुपलभ्यमानस्पर्शस्य[1] वायोरन्यतोऽमागमननिर्णये स्पर्शवद्व्यजनाभि-घातेन शरीर[2]संयुक्तस्य तस्य[2]* स्पर्श उपलभ्यत इति [3]उपेयम्। संयोजिताश्च यदि परमाणवो, नातीन्द्रियस्तत्स्पर्श उपलभ्येत। अथ कार्यवायवो व्यजनस्थानस्थितेन प्रागपि तत्स्पर्शो गृह्येतातो व्यजनाभिघातोद्भावितत्वयाऽनन्तरमुपलभ्यमानस्पर्शोऽनुद्भूततया च प्रागनुपलभ्यमानस्पर्शः कार्य एव [4]स्तिमितवायुरभ्युपेय इति कुतश्चातुर्विध्यमित्याशङ्क्याऽऽह—स्तिमितेति, परमाणूनाम् [5]आवश्यक्यादनुद्भूतस्पर्शतया क्लृप्तत्वाच्चेति भावः। कथं तर्ह्यग्रेऽपि तत्स्पर्शोपलम्भ इत्याशङ्क्य[6] क्लृप्तप्रत्ययेन व्यजनाभिघातचालितानामेषां परस्परसंयोगादग्रे कार्योपपत्त्या तत्स्पर्शोपलब्धेर्नानुप-पत्तिरित्याह[6]*—अनारब्धद्रव्य इति। सहकारिसमवधानमाह—समूह इति॥

१९। कालस्त्विति। उत्पत्ति-स्थिति-विनाशा लक्षणानि चिह्नान्युपाधयो यस्य स तथा, उत्पत्त्याद्युपहितस्त्रिविधो न स्वरूपेणेत्यर्थः। [7]एकादशविधेति। यद्यप्युपाधिभिन्ना अपि दशैव दिशः प्रसिद्धास्तथाऽपि मतभेदप्रसिद्धाऽयं विभाग इत्याहुः॥

१८। आत्मा त्विति। यथैकैकमप्याकाशादिकमुपाधिभेदादुपचरित[8]भेदं, नैवमात्मा[8]*, किं तु वस्तुत एवासाववान्तरभेदवानिति पूर्ववैलक्षण्यार्थेन 'तु'-ना सिद्धान्तं सूचयति। परमात्माविभज्यत्वं वदन्नेव का तर्हि 'एकमेवे'त्याद्यद्वैतश्रुतेर्गतिरित्यत्रोत्तरमाह—परमात्मा त्विति। ईश्वरैकत्वमद्वैत-श्रुतेरर्थ इति भावः॥

२१। चित्रभेदादिति। उद्भूतरूपवत्समवेतत्वापेक्षयोद्भूतरूपवत्त्वस्य लाघवेन चित्रावयवा-रब्धेऽवयविन्यव्यभिचारेण च द्रव्यचाक्षुषताप्रयोजकत्वाद्रूपादीनां च [9]व्याप्यवृत्तितानियमान्नील-पीततन्तुद्वयारब्धे द्वितन्तुकपटे रूपैक्या[10]भावेन कार्यैक्यनिबन्धनं नील-पीतयोः सहकारित्वमपि न स्यात्। न चैकैकस्यारम्भकत्वमिति पटस्य नीरूपत्वप्रसङ्गात् चित्रावयविचाक्षुषतासिद्ध्यर्थं रूपान्तर-मेष्टव्य[illegible]ति भावः॥

२२। [11]रसोऽपीति। [12]अवयवगत-षड्रसैकार्थसमवायेन हरीतक्यादौ रसवैचित्र्यव्यवहारोप-

---

1. '-स्पर्शवा-' B. 2. '-योजितस्य तत्स्पर्शस्येव' B. 3. 'ध्येयम्' A. 4. 'स्तिमितवायु-नि[illegible]: सोऽनारब्धद्रव्यः। आरब्धं स्वसमवेतं कार्यरूपद्रव्यं येन स तथा। नाऽऽरब्धद्रव्योऽनारब्धद्रव्यः परमाणूनां समूहो निचयः। एव-कारेण प्रकारत्वं निराकरोति। यथा बहुभिस्तृणखण्डैरनारब्धैकगोलकः पुञ्जः प्रमीयते तथाऽयमपि' इति जिनवर्द्धनः। 5. 'आवश्यकत्वा-' B. 6. '-शङ्क्योक्तम् अनारब्धद्रव्य इति। उक्तप्रत्ययेन व्यजना…पत्तिरित्यर्थः' B. 7. 'ऐन्द्री दशानामपि दिशां मध्यभाग इति'—जिनवर्द्धनः। 8. '-भेदनैवमात्मा' A. 9. स्वसमानाधिकरणात्यन्ताभावाप्रतियोगी धर्मो व्याप्यवृत्तिधर्म इत्युच्यते। 10. '-भावे' B. 11. 'रसादिकमपि नाव्याप्यवृत्ति, किन्तु नानाजातीयरसवदवयवैरारब्धेऽवयविनि रसाभावेऽपि न क्षतिः। तत्र रसनया अवयवरस एव गृह्यते, रसनेन्द्रियादीनां द्रव्यग्रहसामर्थ्याभावात्, अवयविनो नीरसत्वेऽपि क्षतेरभावात्' इति मुक्तावली। 12. '-गतस्य षड्रसस्यैकार्थ-' A.

पत्तेश्चित्ररसानङ्गीकारात्तदङ्गीकारः प्रामादिक इत्याहुः। यद्वारम्भकगुणविरोधस्याऽऽरम्भविरोधाधीनत्वमावश्यकम्, अन्यथा चित्ररूपमपि न स्यात्। न स्याच्च[1] प्रत्येकारोपसामग्र्योः परस्परविरोधेन संशयज्ञानमपि, स्याद्वा सुरभ्यसुरभिगन्धाभ्यामपि चित्रगन्धारम्भः। एवं चित्ररसाद्यविरुद्धफलबलाद् गुणविरोध एवासिद्धः। न च चित्ररूपानङ्गीकारेऽवयवि[2]चाक्षुषतानुपपत्तिवच्चित्ररसानङ्गीकारे बाधकाभावान्न फलबलमिति वाच्यम्, रासननानारसोपनयसहकृतेन मनसा चक्षु[3]रसप्रत्ययवच्चाक्षुषनानारूपोपनयसहकृतेन मनसैव चित्रः शुक इति प्रतीत्युपपत्तेस्तत्रापि फलबलशैथिल्यात्। न च चक्षुरन्वयाद्यनुविधानानुपपत्तिः, अवयवरूपोपनयोपक्षीणत्वाद्रसनान्वयाद्यनुविधानतुल्यत्वाच्च[4]। अतः परिहर चित्रं रूपं स्वीकुरु वा चित्रं रसमपीति युक्त्यवष्टम्भादिदमुक्तम्॥

२३। गन्धोऽपीति। अवान्तरविधावत्त्वमात्रे रसगन्धयोरन्वयसमुच्चयार्थोऽपि-शब्दः।

स्पर्शः शीतेति। उद्भूतस्पर्शस्यापि बहिर्द्रव्यप्रत्यक्षताप्रयोजकत्वपक्षे [5]चित्रस्पर्शोऽभ्युपेय इति प्रगल्भस्तदसत्। तथा हि—किमुष्णशीतावयवारब्धे सोऽभ्युपेय उतोद्भूतानुद्भूतानुष्णाशीतावयवारब्धे[6]? नाद्यः, चित्रद्रव्यापत्तेः, पृथिवीत्वादिना सङ्करापत्तेश्च; तादृशावयविन एवासिद्धेः। नेतरः, गुणविरोधाभावात्, उपलभ्यमानेऽनुष्णाशीतावयविन्युभाभ्यामुद्भूतस्यैवान्यस्मिन्ननुद्भूतस्यैव जननात्। न चोभयारभ्यत्वे नियम एवायमनुपपन्नः। [7]यथा नीलं नीलमेवारभते पीतं पीतमेव इति नियमादवयविनि[8] गुणविरोधप्रसङ्गः, न [9]चैवमुद्भूत[10]मुद्भूतगुणमेवानुद्भूत[11]मनुद्भूत[12]गुणमेवारभत इत्यस्ति नियमः, येन गुणविरोधः प्रसज्येत, निमित्तभेदसंसर्गादनुद्भूतादप्युद्भूतस्य[13] वैपरीत्यस्य च स्वीकारात्। अन्यथोद्भूतानुद्भूतरूपाधःस्थिततैलस्थितानलद्वयारभ्ये तेजस्यपि चित्ररूपकल्पनाप्रसङ्ग इति साधु [14]रक्षितं चित्ररूपस्य पृथिवी[15]लक्षणत्वम्।

संख्येति। त्रित्वादयः सर्वे बहुत्वावान्तरजाति[16]विशेषा एवेति त्रैविध्याभिधानम्॥

अणुमहदिति। भावप्रधाना अण्वादयः, अतो नाण्वादिद्रव्याणामपरिमाणत्वादसङ्गतिरिति द्रष्टव्यम्।

[17]एकानेकवृत्तीति। एकवृत्त्यनेकवृत्ति चेत्यर्थः।

---

1. 'च' नास्ति B. 2. '-चाक्षुषत्वा-' B. 3. '-रसत्व-' B. 4. 'च' नास्ति A. 5. चित्रस्पर्शस्तु रूपस्थलीययुक्त्या स्वीकरणीय एवेति संक्षेप इति वैशेषिकसूत्रविवृतौ जयनारायणः। 6. 'वा' अधिकः A. 7. 'न हि यथा' B. 8. '-दवयविगुण-' B. 9. 'च' नास्ति A. 10. 'गुण-' अधिकः A. 11 'गुण-' अधिकः A. 12. 'गुण' नास्ति B. 13. '-द्भूतवैप-' A. 14. 'संरक्षितं' B. 15. '-लक्षणत्वम्' A. 16. 'बहुत्वावान्त-' A. 17. 'एकवृत्ति, यथा—पूर्णकलशोऽयमितरेभ्यो घटपटादिभ्यो भिन्नो विलोक्यते। तथा अनेकवृत्ति, यथा—एतौ कलशौ इतरेभ्यो भिन्नौ, एते वा इतरेभ्यो भिन्नाः। एकस्मादतिरिक्तस्यानेकत्वाद् अनेकवृत्ति पृथक्त्वं द्विपृथक्त्वं बहुपृथक्त्वं च भवति' इति जिनवर्द्धनः।

तथा च भाषापरिच्छेदे विश्वनाथः—

'अन्योऽन्याभावतो नास्य चरितार्थत्वमुच्यते।
अस्मात् पृथगिदं नेति प्रतीतिर्हि विलक्षणा'॥ इति। ११४।

**कर्मज** इति। यद्यप्यन्यतरकर्मजत्वादिना त्रैविध्यमन्यत्रोक्तम्, तथाऽप्यन्यतरकर्मत्वादिना संयोगकारणतानवच्छेदाद्विनश्यदवस्थकर्मत्वेनैव कारणताश्रयणात्तदनादर इति द्रष्टव्यम्। विभागविभागेऽपीयमेव गतिः।

**परत्वमिति**। यद्यपि कालदिशोः [1]साधारणकारणत्वाद्दिक्कृतमपि [2]कालकृतं कालकृतमपि [3]च दिक्कृतमित्ययुक्तो विभागः, तथाऽपि कालपिण्डसंयोगासमवायिकारणकत्वमेव कालकृतत्वम्। एवं दिक्पिण्डसंयोगासमवायिकारणकत्वमेव दिक्कृतत्वम्। एवमपरत्वयोरपि द्रष्टव्यम्॥

२४। **बुद्धिरपीति**। अपिर्द्वैविध्ये पूर्वोत्तरयोरन्वयसमुच्चयाय। अनुभवविभागकथनेनैव तदपेक्षा। स्मृतिरपि याथार्थ्यायाथार्थ्याभ्यां विभक्तप्रायेति तन्मूलमनुभवमेव विभजते—**अनुभवोऽपीति**। अपिः प्राग्वत्। प्रमापेक्षयाऽल्पप्रपञ्चत्वादप्रमां तावद्विभजते—**अप्रमापीति**। उपमिति[4]शाब्दयोरनुमित्यन्तर्भावमभिप्रेत्याऽऽह—**प्रत्यक्षमनुमितिश्चेति**[5]। प्रत्यक्षप्रमां [6]विभजते—**प्रत्यक्षमिति**। तच्चेत्यादिग्रन्थः क्वचित् [7]पठ्यते। [8]तत्रेश्वरादिमनोऽन्तद्वन्द्वस्य व्यावर्तकवाचिना लक्षणपदेन बहुव्रीहिः। तेन स्वरूपेण [9]प्रत्यक्षतौल्येऽपि ईश्वरादिसप्तोपाधिसंबन्धात् सप्तप्रकारत्व[10]मित्यर्थः। क्वचित्तु तच्च षडिन्द्रियाणीश्वरज्ञानं चेति पाठः। तत्र षडिन्द्रियाणीति जन्यजनकभावसम्बन्धेन[11] षष्ठार्थे ज्ञानान्यपदार्थको बहुव्रीहिः। अतो न [12]प्रमाप्रकरणे [13]विभागानौचित्यमिति द्रष्टव्यम्। ईश्वरादिमनोऽन्तबहुवचनान्तद्वन्द्वमात्रपाठेऽपीश्वरसहितानि घ्राणादीनि व्यावर्तकानि येषामिति ज्ञानान्यपदार्थको बहुव्रीहिरेव द्रष्टव्यः। न तु करणविभागः स्वातन्त्र्येण प्रकरणविरोधात्। अत एवात्र[14] प्रतीतस्यापि करणविभागस्याप्राधान्येनाविवक्षाशङ्कयाऽग्रे प्रमाणलक्षणानन्तरं पुनः [15]प्रमाणविभागं [16]पठन्ति—[17]'तच्चेश्वरे'त्यादिना [18]'लक्षणमि'त्यन्तेन। एवं चेश्वरश्चेत्यादि[19] क्वाचित्कपाठो मृग्यार्थः॥

२५। **अनुमितिरपीति**। अपिः पूर्ववत्। तदपि त्रिविधमपि॥

२६। **उभयाङ्गानि**। स्वार्थपरार्थयोरन्वयव्यतिरेकिणोरङ्गानि न तूभयेषां केवलान्वय्यादीनामङ्गानि। केवलान्वयिकेवलव्यतिरेकिणोर्विपक्ष[20]व्यावृत्ति-सपक्षसत्त्वयो[21]रसंभवादिति द्रष्टव्यम्॥

---

1. 'साधारणत्वाद्दिक्-' B. 2. 'कालकृतं परत्वं, यथा—वयसा स्थविरे पुरुषे परोऽयमिति प्रत्ययनिमित्तं परत्वम्; बालके अपरोऽयमिति प्रत्ययनिमित्तमपरत्वम्। दिक्कृतं परत्वं, यथा—दूरस्थे वस्तुनि परमिदमिति प्रत्ययनिमित्तं परत्वम्; अदूरस्थे वस्तुनि अपरमिति प्रत्ययनिमित्तमपरत्वमिति'—जिनवर्द्धनः। 3. 'च' नास्ति B. 4. '-शाब्दयो-' A. 5. 'इति' नास्ति A. 6. 'तावत्' अधिकः B. 7. 'पद्यते' A. 8. 'अत्रे-' B. 9. 'प्रत्यय-' B. 10. '-प्रकारकत्व-' B. 11. '-सम्बन्धे' A. 12. 'प्रमाविभागकरणे' B. 13. 'करणविभागानौचित्यमपि' B. 14. 'च' अधिकः B. 15. 'प्रमावि-' B. 16. 'पठति' B. 17. 'तच्चेत्यादिना' B. 18. 'मनोलक्षणमित्यन्तेन' B. 19. 'चेश्वरश्चेति' B. 20. '-विपक्षाव्या-' B. 21. '-रभावादिति' B।

२७। ननु वक्ष्यमाणपक्षव्यापकतादिगर्भलक्षणपर्यालोचनया केवलान्वय्यादिभिन्नाः सन्त्य-सिद्धादयो [1]लिङ्गभेदास्तत्स्वास्फूर्त्तिदशायामनुमितिहेतवश्चातस्त्रैविध्यकथनानुपपत्तिरित्यत आह—तदाभासा इति। असिद्धादय आभासाः, न वस्तुतो लिङ्गानि। अतो [2]लिङ्गाभासभेदान्तर-सत्त्वेऽपि लिङ्गत्रैविध्यमक्षतमेवेत्यर्थः। एवं चाऽऽभासविभागोऽनुद्दिष्ट[3]विषयकत्वादसङ्गत इत्यपास्तम्॥

२८। ननु यद्यालिङ्गितार्थसत्यत्वस्य प्रसिद्धत्वात्तद्विषयं[4] तर्कज्ञानं प्रमेति तावदावश्यकम्। न चेन्द्रियजन्यं[5] तत्, निर्धूमत्वादिविशेषणेन्द्रियसन्निकर्षाभावात्। अनुमितिभेदस्तु स्पष्ट एवेति [6]प्रमान्तरमेव तदिति[6]* प्रमाविभागो न्यूनः। तथा संशयविपर्ययसमाना[7]कारस्यापि स्वप्नज्ञानस्योप-रतबाह्येन्द्रियाजन्यत्वाद् बहिर्विशेष्येणापि सममसन्निकर्षे मनोजन्यत्वस्याप्यनुपपत्तेर्विलक्षण-सामग्रीप्रसूतमप्रमान्तरमेव तदिति[8] अप्रमाविभागोऽपि [9]न्यून इत्याशङ्क्याह—तर्कस्वप्नाविति। तर्को विपर्ययः स्वप्नः संशयविपर्ययाविति यथासंभवं संशयविपर्ययावित्यर्थः। अयमाशयः—निर्धूमः स्यादित्यादेरस्यमिदानीं निर्धूमः स्यादित्यत्र [10]तात्पर्यमवश्यं वाच्यम्, अन्यथा यस्य कस्यचिद् अस्यैव वा कालान्तरे निर्धूमत्वापादने किमनिष्टमापादितं स्यात्। न च तद् यस्य कस्यचिदस्यैव वा कालान्तरीयेण निर्वह्नित्वेना[11]पादयितुं शक्यमिति। यदि निर्वह्निः स्यादित्यादेरपि यद्ययमिदानीं निर्वह्निः स्यादित्यत्रैव[12] तात्पर्यम्, न [13]चास्येदानीं निर्वह्नित्वं निर्धूमत्वं वा वास्तवं [14]संभव-तीत्यसत्पदार्थविषयत्वादाहार्यारोपात्मा विपर्यय एवायम्। न च विपर्ययेऽपि विशेषणेन्द्रिय-सन्निकर्षापेक्षा तथात्वे [15]वा विपर्ययान्तरवदुपपत्तेरिति। स्वप्नस्तु कश्चिदयं गजस्तुरगो वेत्यादिः संशय एव। [16]कश्चित्तुरगो गज[16]* एवायमित्यादिविपर्यय एवेति समुदाये वाक्यपरिसमाप्तिः। न च सामग्र्यनुपपत्तिः, ज्ञानान्तरोपनीते बाह्ये धर्मिणि सन्निकृष्टेन मनसैव तदुभयजननसंभवादिति[17]। वस्तुतस्तु तर्कस्य संशय एवान्तर्भावो ग्रन्थकृतोऽभिप्रेतः एककोटिकत्वादि[18]विरोधात्तदनङ्गीकाराभि-धानस्यापि किंचित्कर्तृकसंशयान्तर्भावस्वीकारप्रसिद्धिपूर्वकत्वादन्यकर्तृकत्वे वा तद्वचनेऽपि प्रत्यवस्थानसाम्यात्। अत एवैतन्मतमत्र[19] कश्चिदाह। तर्कः संशयेऽन्तर्भवतीत्यादिमोऽज्ञाव्य एककोटिकत्वान्निराकृतमन्यत्र। अन्यथा दूषणभिया केनाप्यनङ्गीकारे [20]दोषनिषेधस्याप्यनुपपत्तेरिति यथान्यासमेव साधीयः॥

२९। सविकल्पकेति। अत्रापि सविकल्पकस्य विशेष्यावृत्त्यप्रकारकज्ञानरूपायां प्रमायां

1. 'भेदा-' A. 2. 'लिङ्गाभासान्तरत्वेऽपि' B. 3. '-विषयत्वा-' B. 4. '-द्विषय-तर्कज्ञानम्' B. 5. 'चेन्द्रियजं' B. 6. '-मेतदिति' A. 7. '-धिकरण-' B. 8. 'च' अधिकः B. 9. 'न्यूनः' नास्ति A. 10. 'अवश्यं' नास्ति B. 11. '-त्वेनानापादयितुं' A. 12. 'एव' नास्ति B. 13. 'वा-' A. 14. 'संभवतासत्यार्थत्वा-' A. 15. 'वा' नास्ति B. 16. 'कश्चित्तु गज' A. 17. 'द्रष्टव्यम्' अधिकम् B. 18. '-विरोधादनङ्गी-' B. 19. '-मन्यत्र' B. 20. 'दोषैर्निषेधस्यापि' A.

तद्वत्तिप्रकारकज्ञानरूपायामप्रमायां च निर्विकल्पकस्य तु [1]प्रागुक्तप्रमायामेवेति यथासंभवमन्तर्भाव [2]इत्यवधेयम् ॥

३१ । ननु प्रायेणानेन वृन्दावनविहारिणा हरिणा भवितव्यमिति ऊर्ध्वमिव दृश्यते किंस्विदेतदिति [3]च प्रतीयमानाकारावूहाऽनध्यवसायौ न निश्चयाविति स्पष्टमेव । न संशयावपि पूर्वस्यैककोटिकत्वादपरस्य सर्वथैवापरि[4]स्फुटकोटिकत्वादतस्तदनभिधानादप्रमाविभागन्यूनतेत्याशङ्क्याऽऽह—ऊहानध्यवसाययोरिति । [5]उत्कटैककोटिकानवधारणज्ञानत्वेन वक्ष्यमाणानध्यवसायलक्षणवशेन चोहसंभावनानध्यवसायाद्यवान्तरसंज्ञाभेदेऽप्यनवधारणज्ञानत्वेन संशयत्वमविशिष्टमित्यर्थः ॥

३२ । [6]दुःखमपीति । दुःखकारणमात्रप्रभवं दुःखमपि द्विविधं सांसारिकं नारकं चेति योग्यतया द्वैविध्यमूह्यमित्याहुः । तत्र यद्यपि दुःखकारणमात्रप्रभवमिति विशेषणमनर्थकं तथाऽपि दुःखकारणानामानन्त्येन तन्मात्र[7]प्रभवस्य दुःखस्यापि विशिष्याशक्य[8]संख्ययावद्विभाजकोपाधित्वमुपदर्शयितुं [9]न तत् ; किं त्वत्रैव तदभिधानमभिप्रायान्तरमाकाङ्क्षति । तदुच्यते । दुःखं दुःखकारणमात्रप्रभवमपीत्यन्वयः । प्रभवत्युत्पद्यते[10]ऽस्मिन्निति प्रभवः । उत्पत्त्यवच्छेदकतयाऽधिकरणकोटिनिविष्टं शरीरं दुःखकारणमात्रं दुःखकारणमेव, न [11]तु सुखकारणमपि । तदयमर्थः—यस्योत्पत्त्यवच्छेदकं शरीरं दुःखावच्छेदकमेव, न सुखावच्छेदकम्[12] तत् सुखानवच्छेदकशरीरावच्छेद्यं[13] [14]नारकं दुःखमप्येकमस्ति, तदवच्छेदकशरीरस्यैवाधर्ममात्रोपगृहीतत्वेन सुखानवच्छेदकत्वादिति । अपि-शब्देन सुखदुःखोभयावच्छेदकमर्त्यशरीरावच्छेद्यमन्यद्दुःखं[15] प्रसिद्धमेवेति विशिष्य तदनभिधानमन्तर्नयति ।

इच्छाऽपीति । सुखदुःखाभावविषया तदुपायविषया चेत्यर्थः ।

प्रयत्नोऽपीति । [16]विहितादिभिर्हरिहरस्मरणादिभिर्विषयतया रूप्यत इति तथा, स्वरूपेण तस्याविहितत्वादिति । क्वचित्तु स्पष्ट एव विषयान्तः पाठः ॥

---

1. 'प्रागुक्तायां प्र-' B. 2. 'इति ध्येयम्' B. 3. 'च' नास्ति B. 4. '-स्पृष्ट-' B. 5. 'उत्कटकोटिक-' A. 6. 'दुःखं प्रतिकूलवेद्यमात्मनोऽरोचमानमेकप्रकारमेव भवति । दुःखकारणानि शरीरादीनि तन्मात्रं प्रभव उत्पत्तिस्थानं यस्य तद् दुःखकारणमात्रप्रभवम् । मात्र-शब्दोऽपरप्रकारनिरासार्थं' इति जिनवर्द्धनः । 'दुःखमपि दुःखमात्रकारणप्रभवं सुखसाधनोपादानप्रभवं च' इति क्वचित् । 7. '-प्रभवदुःख-' B. 8. '-शक्यकथनसंख्यावद् विभा-' A. 9. 'न' नास्ति A. 10. 'यस्मिन्निति' A. 11. 'तु' नास्ति B. 12. 'अपि' अधिकः B. 13. '-च्छेद्यता-' B. 14. 'नारकदुःख-' B. 15. '-न्यदुःखं' A. 16. 'विहितो विधिप्राप्तो धर्महेतुर्विषयो यस्य स विहितविषयः, विषयशब्दस्य प्रत्येकमभिसम्बन्धात् ; यथा—देवयात्रादिनिमित्तमुद्यमः । प्रतिषिद्धः शास्त्रे अकरणीयत्वेन प्रतिपादितः पापहेतुर्विषयो यस्य स प्रतिषिद्धविषयः ; यथा—परदारगमनचौर्यादिकरणनिमित्तमुद्यमः । उदासीनो न विहितो नापि निषिद्धो विषयो यस्य स उदासीनविषयः ; यथा—शरीरकण्डूयनाद्यर्थहस्तचलनादिप्रयत्नः, तस्य शास्त्रेषु करणीयाकरणीयत्वाभ्यामप्रतिपादनात् पुण्यपापयोरहेतुत्वाच्च' इति जिनवर्द्धनः ।

३३। [1]गुरुत्वमिति। च-कारेणानवयविनिष्ठत्वसमुच्चयादेकावयविनिष्ठमनवयविनिष्ठं चेति विभागो विवक्षितः। एक-पदं व्यासज्यवृत्तिशङ्कानिराशाय[2]। तत्रावयविनिष्ठस्य गुरुत्वस्यावयवगुरुत्वजन्यस्य तदन्यत्वात्तुलारूढावयवद्वयापेक्षयाऽवयविन्यधिकावनतिप्रसङ्गं वारयितुं समाहाररूपमित्युक्तम्। समाहारेण मिश्रीभावेनैव रूप्यते, न त्ववयवगुरुत्वापेक्षयाऽन्यत्वेन विलक्षणावनत्यदर्शनादित्यर्थः। कुतः पुनस्तदन्यत्वावश्यकत्वे [3]विलक्षणकार्याजननम्। ईषद्वैलक्षण्येऽपि विलक्षणकार्यादर्शनस्य[4] बहुतरभाराक्रान्ततुलास्थले[5] तदधिककिंचिद्गुरुत्वप्रवेशेऽप्यवनतिवैलक्षण्यादर्शनेनाविरोधादिति दिक्॥

३६। [6]स्नेह इति। स्वाभाविकः साक्षात्संबद्धो[7], जले औपाधिकः, [8]परम्परासंबद्धस्तैलादौ॥

३७। धर्म इति। प्रवर्तको यागादिविषयप्रवृत्तिसाध्यः, निवर्तकः कलञ्जभक्षणादिविषय[9]निवृत्तिसाध्य इत्यर्थ इत्याहुस्तन्न; निषिद्धनिवृत्तेर्धर्मजनकत्वानङ्गीकारेणापसिद्धान्तात्, प्रत्ययविरोधाच्च। तस्मात् प्रवर्तकः फलकामनयाऽनुष्ठानादुत्तरोत्तरभोग[10]प्रबन्धप्रवर्तकः। निवर्तकस्तत्त्वज्ञानोत्पत्तिप्रतिबन्धकदुरितनिवर्तनेन तत्त्वज्ञानमुत्पाद्य संसारनिवर्तक इत्यर्थोऽवगन्तव्यः। च-शब्देन [11]फलावसानः कीर्तनादिना[12] नाश्यश्चेति [13]विधान्तरं समुच्चिनोति॥

३८। अवर्णात्मक इति। ध्वनिरिति यावत्॥

३९। अनित्यैकरूपा[14] इति। एकं रूपमेकरूपम्, अनित्यम् एकरूपं येषां ते तथोक्ताः। अतो न बहुव्रीहौ संख्यायाः पूर्वनिपातः। अन्ये इति। रूपरसस्पर्शसंख्यापरिमाणपृथक्त्वबुद्धीच्छाप्रयत्न-

1. 'गुरुत्वं भारापरपर्यायं द्विधा भवतीति गम्यते। सं सामस्त्येन आहरणम् एकत्र मेलनं बहूनां वस्तूनाम् अस्मिन्निति समाहारस्तद्रूपं तत्स्वभावं यथा लघूनामप्यर्कतूलादीनां वस्तूनां संमेलनाद् भारो भवति तत्समाहाररूपं गुरुत्वं भवति। एकस्मिन्नवयविनि लोहलोष्टादौ निष्ठा यस्य तदेकावयविनिष्ठं तस्यैकस्यापि बहुभारत्वात्' इति जिनवर्द्धनः। 'अनित्यं द्व्यणुकादौ तद्गुरुत्वमनित्यम्। नित्यं परमाणौ नित्यम्' इति मुक्तावली। 2. '-निराकरणाय' B. 3. 'विलक्षणकार्या-' A. 4. '-दर्शनस्य' A. 5. '-क्रान्तस्य तुला-' A. 6. 'ननु घृतादिषु स्वाभाविक एव स्नेहः किं नोच्यते इति चेन्न। घृतादि स्नेहविकलं पार्थिवत्वात् लोष्टवत्। अथवा भौमाग्नीन्धनत्वात् तृणादिवत्' इति जिनवर्द्धनः। 'तैले उपलभ्यमानः स्नेहोऽपि जलीय एव। तस्य प्रकृष्टत्वादग्नेरानुकूल्यम्। अपकृष्टस्नेहं हि जलं वह्निं नाशयति' इति मुक्तावली। 7. '-संबन्धो' A. 8. 'परम्परया संबन्ध-' A. 9. 'विषय-' नास्ति A. 10. 'प्रबन्ध-' नास्ति B. 11. 'पापफलेन दुःखभोगेन अवसानं पर्यन्तो विनाशो यस्य स फलावसानः, यथा अधर्मं हिंसादिकं विधाय मत्वा नानायोनिषु छेदनभेदनादीनि फलानि भुक्त्वा तेन पापेन जीवो मुच्यते, न पुनर्दुःखभोगं विना। तथा नाश्यते इति नाश्यः। यो धर्मस्तपश्चरणादिना क्षीयते न पुनरात्मफलेन दुःखभोगेन, यतो विहितानेकपातकोऽपि तपोभिः संशोधितात्मा नाधर्मफलानि भुङ्क्ते इत्यर्थः' इति जिनवर्द्धनः। 12. '-दिनाश्य-' B. 13. 'विभागान्तरं' B. 14. 'अत एतेषु गुणेषु गन्धादयो गुणा नित्येषु परमाण्वाकाशादिषु स्थिता अनित्येषु द्व्यणुकघटादिषु स्थिताः सर्वत्रानित्यमेवैकं रूपं येषां ते अनित्यैकरूपाः, यावद्द्रव्यभावित्वान्न कश्चिन्नित्या इत्यर्थः।

गुरुत्वद्रवत्वस्नेहाः[1]। तत्र रूपरसस्पर्शाः पृथिव्यन्यपरमाणुतदितरभेदेन, परिमाणगुरुत्व[2]-स्नेहा नित्यानित्याश्रयभेदेन। द्रवत्वमपि सांसिद्धिकं पूर्ववत्। नैमित्तिकं तु[3] नित्याश्रयमप्यनित्यमेव। संख्यापृथक्त्वे जन्याजन्यभेदेनैव[4], बुद्धीच्छाप्रयत्ना जीवेश्वरभेदेन नित्यानित्यरूपा द्रष्टव्याः। अव्यापकदण्डके संस्कारो भावनैव, वेगादौ [5]तदसंभवात्। अन्ये [6]स्वाश्रयेति। रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वपरत्वापरत्वगुरुत्वद्रवत्वस्नेहवेगस्थितस्थापकाः ॥

४०। उत्क्षेपणाद्य इति। प्रत्येकं [7]वात्र वाक्यपरिसमाप्तिः। रूपान्तः[8] पाठः स्पष्ट एव। क्वचिद्विषयान्तः[9] पाठस्तत्र विहितादिशब्दाः शब्दपराः। तेन विहितादिशब्दव्यपदेश्या इत्यर्थो विवक्षितः, कर्मविषयस्य [10]सन्ध्यार्घ्यजलादेरविधेयत्वादिति ध्येयम् ॥

४१। सामान्यं जातिरूपमिति। [11]ननु दण्डित्वाद्युपाधिः कथं सामान्यम्, नित्यानेकसमवेतत्वाभावात्? तथा हि, 'कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेने'ति वचनाद् दण्डसंबन्धः संयोगो दण्डित्वम्, न चासौ नित्यः। एवं रूपवत्त्वं तत्समवायो नानेकसमवेतः। संयोगसमवायपृथग्भूतमपि वा तद्यदि नित्यं [12]तदा दण्डादिसंबन्धाभावेऽपि प्रतीयेत। अथ अनित्यं न सामान्यं तल्लक्षणक्षयात्। अथ नित्यस्यापि तस्य व्यञ्जकसंबन्धाभावादप्रतीतौ को दोषः? नित्यानेकसमवेतत्वसाम्येऽपि बाधकसद्भावासद्भावाभ्यामेव विशेष उपपत्स्यते। वक्ष्यति चाबाधकं सामान्यं जातिः सबाधकमुपाधिरिति चेत्; सत्यम्। किं तु कादाचित्कदण्डपाकपाठादिसंबन्धव्यङ्ग्येषु नित्यवृत्तिषु [13]दण्डित्वपाचकत्वपाठकत्वादिषु परस्परपरिहारेणाऽऽवर्तमानेषु सङ्करादिबाधकमेव दुर्निरूपमिति कथमुपाधिः सामान्यमिति चेत्; सोऽयं सामान्यलक्षणस्याव्याप्त्युद्भावन[14]पर्यवसितः श्रमो[14]* भवत इति [15]सामान्यलक्षणनिरूपणावसर एव तमपाकरिष्याम

पार्थिवपरमाणुषु गन्धस्य पाकजत्वान्न नित्यत्वमपरपरमाणुषु च गन्धस्यैवाभावादिति। अन्ये पूर्वोक्तेभ्यो गुणेभ्योऽवशिष्टा रूपरसस्पर्शसंख्यापरिमाणपृथक्त्वबुद्धीच्छाप्रयत्नगुरुत्वद्रवत्वस्नेहाख्या बुद्धीच्छाप्रयत्नवर्जा नित्यद्रव्येषु नित्यरूपाः, अनित्येषु द्व्यणुकादिषु अनित्यरूपाः। बुद्धीच्छाप्रयत्ना अस्मदादिनिष्ठा अनित्या मुक्तताया-मेतेषामुच्छेदात्। ईश्वरनिष्ठाः पुनर्नित्या एव, तेषां सार्वदिकत्वात्' इति जिनवर्द्धनः।

1. '-स्नेहान्ताः' B. 2. '-गुरुत्वद्रवत्वस्नेहा' B. 3. 'तु' नास्ति B. 4. 'एव' नास्ति B. 5. 'तदभावात्' B. 6. 'एते संयोगादयोऽव्यापकाः स्वाश्रयैकदेशवृत्तयः। बुद्धीच्छाप्रयत्ना उभयरूपाः,—स्वाश्रयैकदेशवृत्तयः अस्मदादिषु, स्वाश्रयव्यापका ईश्वरे। अन्ये एतेभ्योऽवशिष्टा रूपादयो द्वादश गुणाः स्वाश्रयव्यापका एव' इति जिनवर्द्धनः। तथा च प्रशस्तपाद-भाष्ये—

'संयोगविभागशब्दात्मविशेषगुणानां प्रदेशवृत्तित्वम्, शेषाणामाश्रयव्यापित्वम्। अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वसांसिद्धिकद्रवत्वगुरुत्वस्नेहानां यावद्द्रव्यभावित्वम्। शेषाणामयावद्द्रव्यभावित्वं चेति'। 7. 'वा-' B. 8. '-न्तपाठः' B. 9. '-न्तपाठः' B. 10. 'सन्ध्यार्घ-' B. 11. 'सामान्यमित्यनन्तरं त्रिविधमपीति विशेषो विभक्तविभागप्रकरणात्' इत्यधिकः B. 12. 'तदा' नास्ति A. 13. 'दण्डिपाचक-' B. 14. '-पर्यवसितश्रमो' B. 15. '-लक्षणावसर एव' A.

इत्यलमनेन । [1]सामान्यमित्यनन्तरं त्रिविधमपीति शेषो द्रष्टव्यः, विभक्तविभागप्रकरणात्[1] * । तत्र परजातेरुदाहरणमाह—जातिः सत्तेति । परापरजातेरुदाहरणमाह—द्रव्यत्वेत्यादि[2] । आदिपदेन देवदत्तत्वाद्यपर[3]जातेरुदाहरणोपसंग्रहः । परापरोपाधेरुदाहरणमाह—उपाधिरूपं पाचकत्वमिति । परोपाधिः प्रमेयत्वादिः । अपरोपाधिरेतत्कालीनैतद्व्यक्तिविशेषत्वादिः स्वयं द्रष्टव्यः ॥

४३ । विभागन्यूनतां परिहरति—मध्यत्वमित्यादिना ॥

४४ । ननु नीलं तमश्चलतीत्यनुभवसिद्धाभ्यां क्रिया-रूपाभ्यां न तावदद्रव्यं तमः । द्रव्यमपि [4]वा नाऽऽकाशादिचतुष्टयमिति स्पष्टमेव । रूपादेव न [5]मनोवायू । नीलादेव न जलतेजसी । [6]निर्गन्धत्वनिस्पर्शत्वाभ्यां न पृथिवीति परिशेषाद् द्रव्यान्तरमेव तमस्तत्कथं नवैव द्रव्याणीत्याशङ्क्याऽऽह—अन्धकारोऽपीति । तमःप्रदेशेषूभयवादिसंप्रतिपन्नेनाऽऽलोकाभावेनैव[7], तद्व्यवहारोपपत्तेर्वैपरीत्यस्य[8] चोष्णस्पर्शाद्यन्यथानुपपत्तेरशक्यशङ्कत्वाद्रूपादिप्रतीतेर्भ्रमत्वेनाप्युपपत्तेर्न द्रव्यान्तरकल्पनेति भावः ॥

४५ । ननु मण्यादिसमवधानासमवधानयोर्वह्नौ दृष्टादृष्टान्यतरवैगुण्यानुपपत्तेः सतोऽप्यदृष्टवैगुण्यस्य दृष्टसकलकारणाप्रतिद्वन्द्वितया प्रतिनियतपुरुषीयदाहादाहव्यवस्थानुपपत्तेः किंचिदतीन्द्रियमग्नेरनुग्राहकमुन्नीयते । तच्च द्रव्यादिकारणमात्रवृत्तित्वान्न द्रव्यादिमात्रमिति पदार्थान्तरमेव सैव शक्तिरिति कथं सप्तैव पदार्था इत्यत आह—[9]शक्तिः स्वरूपमेवेति । [10]स्वमसाधारणं प्रति-

1. अयमंशो नास्ति B. 2. '-त्वेत्यादिना' B. 3. '-जात्युदा-' B. 4. 'च' A. 5. 'न मनो न वायुः' B. 6. 'निर्गन्धनि-' A. 7. तथा हि कणादसूत्रम्—'द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः' ( वै० सू० ५।२।१९ ) । विस्तरश्च सर्वदर्शनसंग्रहे अवगन्तव्यः । 8. '-वैपरीत्यचोष्ण-' ? A. 9. 'ननु एते सप्त अपि पदार्थाः शक्तिमन्तः कार्याणि कुर्युस्तद्रहिता वा ? द्वितीयपक्षे पृथिवीव दहनोऽपि दहनक्रियां न कुर्यात्, दाहकत्वरहितत्वाविशेषात् । शक्तिमन्तश्चेत् तर्हि सा शक्तिः अष्टमपदार्थः किं नावादीत्याशङ्क्याऽऽह—शक्तिः स्वरूपमेव । शक्तिर्दहनादीनां स्वरूपमेव, न पुनः पृथक् पदार्थ इत्यर्थः । ननु दाहकत्वस्य स्वाभाविकत्वाङ्गीकारे मणिमन्त्रौषधीनां सान्निध्येऽपि ज्वलनोऽङ्गुल्यादि प्रज्वालयेत्, स्वभावस्यान्यथाकर्त्तुमशक्यत्वात् । न चैवं दृश्यते, तस्माद् दाहकत्वं नाम शक्तिर्वस्तुतः पृथग्भूताऽस्ति, सा च मणिमन्त्रादिसान्निध्येन प्रतिबध्यते, ततश्च अदाहकत्वं पावके इति चेत्; तदपि फल्गु, यतो दहनस्येदृश एव स्वभावो यत्तादृशमणिमन्त्रादीनामसान्निध्य एव दाहकत्वम्, न तत्सान्निध्ये; यथा लोहस्य अयस्कान्तपाषाणसान्निध्य एव स्वतन्त्रा क्रिया, न पुनरसान्निध्ये, तस्य तथाविधस्वभावत्वात् । ननु शक्त्यनङ्गीकारे गगनेन्दीवरवत् न किञ्चिद् वस्तु कार्यं कुर्यात्, निःशक्तिकत्वाविशेषादिति चेद्; उच्यते । शक्तिः शक्तिमतो सद्रहिता वा ? आद्ये, सैव शक्त्यन्तरं वा ? सा चेदात्माश्रयः । शक्त्यन्तरत्वे स्पष्टैवानवस्था । द्वितीयपक्षे, सा शक्तिः स्वाश्रये किञ्चिद्विशेषं करोति न वा ? करोति इति चेत्, व्याहतोऽसि ; भवन्मते निःशक्तिकस्य गगनेन्दीवरायमाणत्वात् । नेति चेत्, पूर्ववत् शक्त्युत्पत्तावपि अदाहकत्वमेव पावके विशेषानाधानात् । अथ पूर्वमपि दाहकत्वमस्तीति चेत्, तर्हि शक्त्याः किं फलम् ? तस्मात् न शक्तिः स्वरूपात् पृथगिति'—जिनवर्द्धनः । 10. 'स्वमधारणं' A.

बन्धकवृत्त्यव्यावृत्तं रूपं धर्मः । [1]प्रतिबन्धकाभावः कारणतावच्छेदकं दण्डत्वादिकं वाऽसाधारण[2]-रूपमिति ध्येयम् । न पुनर्वह्निरेव शक्तिः, शक्तो वह्निरिति हि प्रयोग-प्रत्ययौ, न [3]शक्तिर्वह्निरिति । अयमाशयः—प्रतिबन्धक[4]विनाशितशक्तेः शक्त्यन्तरोत्पादे प्रतिबन्धकाभावसहकारिताया आवश्यकत्वात्, दोषाणामुभय[5]समाधेयतया तेनैवोपपत्तौ न पदार्थान्तरकल्पनेति ॥

४६ । ननु दण्डीति व्यवहारो न दण्डदेवदत्ततत्संबन्धावलम्बनः, प्रत्येकं[6] तदापत्तेर्मिलिताव[7]-लम्बनत्वेऽपि मेलकस्यानतिरेके स एव प्रसङ्गः, अतिरेके नाममात्रे विवादपरिशेषापत्तेः, दण्डदेवदत्त[8]तत्संबन्धा इत्यतोऽविशेषप्रसङ्गाच्च । अतः पदार्थान्तरमेव विशिष्टमिति सप्तैवेत्यनुप-पन्नमित्याशङ्क्याऽऽह—विशिष्ट ( वैशिष्ट्यं ? ) त्विति । यथायथं गुणप्रधानभावापन्ना इति शेषः । इदमिहाभिसंहितम्—दण्डीति दण्डदेवदत्ततत्संबन्धा इति चानयोर्नास्त्येव विषयभेदः, तमादायाऽपि जायमानसमूहालम्बनादविशेषप्रसङ्गे तदुत्तरोत्तरविषयभेदाभ्युपगमेऽनवस्थापातात् ; किन्तु गुणप्रधानभावापत्तिकृत एव विशेषः । दण्डीत्यत्र हि दण्डो गुणभावेन [9]भासते प्रकारत्वात्, देवदत्तः प्राधान्येन, संबन्धस्तु न गुणो नापि प्रधानम्, अतः स्वरूपेणैवावभासते[10] । समूहालम्बने दण्डादयः सर्वे प्राधान्येन, दण्डत्वादीनामेव तत्र प्रकारत्वेनाप्राधान्यात् । अतो यो यन्निरूपितो यन्निष्ठः संबन्धः, स एव तत्र तद्वैशिष्ट्यमिति न कश्चिद् दोष इति । इदं च पदार्थान्तरतावादिपक्षप्रतिक्षेपाविष्टस्य[11] समानतन्त्रसिद्धान्तस्योपादानं नात्यन्तमसङ्गतम्, 'अन्यैः सह विरोधे तु वयं पञ्चोत्तरं शतम्' [ महा० भा० ] इत्यादिदर्शनात् । अत एव, 'परस्परविरोधे [12]हि वयं [13]पञ्चैव [14]ते शतम्[14]* [ महा० भा० ] इत्यादि निदर्शनीकृत्य तमप्युन्मूलयन्नसाधारणं स्वसिद्धान्तं वक्ष्यति—'वैशिष्ट्यमन्यव्यावृत्ति'रिति । अतो न तत्स्वरूपस्य द्विर्वचनं दोष इति [15]द्रष्टव्यम् ॥

४७ । नन्वात्मधर्मेण ज्ञानेन घटादेरसंबन्धात् 'ज्ञातो घट' इति व्यवहारानुपपत्तिरतिप्रसङ्गो[16] वा, इष्ट इत्यादिव्यवहारप्रति[17]बन्धस्य स्वविषयतानियामकज्ञानविषयतासद्भावेनानवस्थानात्[18] । अतो विषयतानियमाय ज्ञातता पदार्थान्तरमेष्टव्यमिति विभागन्यूनतामाशङ्क्याऽऽह—[19]ज्ञाततेति । ज्ञाततायाः ज्ञानान्तराविषयत्वेऽसिद्धिप्रसङ्गात्, विषयत्वे च ज्ञातान्तरकल्पनेऽनवस्थानात्, [20]स्वभावसम्बन्धेनैव [21]विषयतानियम इति भावः ॥

४८ । ननु सप्तस्वपि पदार्थेषु केन केनचिदाकारेण प्रतीयमानं सादृश्यं न सप्तान्तर्भूतमेवेति

---

1. 'स च' अधिकः B. 2. '-ऽसाधारणं रूप-' A. 3. 'शक्तिरिति' A. 4. '-कनाशित-' B. 5. '-णां तूभय-' B. 6. 'अपि' अधिकः B. 7. '-र्मिलितालम्बन-' B. 8. 'तत्' नास्ति A. 9. 'अवभासते' B. 10. '-णैव भासते' B. 11. '-प्रतिक्षेपेऽभिनिविष्टस्य' B. 12. 'तु' B. 13. 'पञ्च' B. 14. 'शतानि ते' B. 15. 'द्रष्टव्यम्' नास्ति B. 16. '-रिति प्रसङ्गो-' A. 17. '-बन्धाश्च' A. 18. '-नानुत्थानात्' A. 19. 'ज्ञाते वस्तुनि ज्ञातताखचणो यो धर्मः प्रतीयते सः, ज्ञानेन सह यः सम्बन्धः विषयिविषयभावलक्षणः स एव, न वस्तुविषयो धर्म इति'—जिनवर्द्धनः । 20. '-भाव-' नास्ति A. 21. 'विषयत्व-' A.

पदार्थान्तरमेव तदित्यत आह—[1]सादृश्यमिति। तथा च सामान्यस्य समवायेन सर्वत्रा-वृत्तावपि परम्परासम्बन्धेन सर्वत्र वृत्तिरविरुद्धेति भावः॥

४९। गुरुत्ववल्लघुत्वमपि गुणान्तरमेव विनिगमकाभावे विपरिवर्तप्रसङ्गेन भावाभावरूप[2]-विभागस्य दुर्वचत्वादित्यत आह—लघुत्वमिति। गुरुद्व्यणुकारब्धस्य गुरुतरत्ववत्[3] लघुद्व्यणुकारब्धस्य लघुतरत्वप्रसङ्गादेव विनिगमकात्। अनन्यथासिद्धपतनहेतुतया गुरुत्वस्यैवासाधारणफलहेतुतया लघुत्वस्याकल्पनाच्च अभावरूपता [4]लघुत्वस्येति भावः॥

५०। शङ्किष्यमाणन्यूनतापरिहारमाह—एवमन्यस्यापीति। अन्यस्योक्तेभ्यो मध्यत्वा-दिभ्य इति शेषः। किं तत्रोदाहरणगवेषणया[5], संख्यैव [6]तावदुदाहरणमित्याह—यथा संख्याया इति। अन्ये तु यथा संख्याया गुण एवेति व्यस्तमन्वयमाहुः[7]। तत्रैव-कारवैयर्थ्यमिति[8] [9]भाति॥

५१। नित्यानां कारणत्वमेवेति। एव-कारेण नित्यभावेषु कार्यत्वयोगो व्यवच्छिद्यते, न कारणत्वायोगः, अतो नाकाश[10]परिमाणादीनाम्[11] अकारणत्वेऽप्यसामञ्जस्यम्। वस्तुतस्तु[12] [13]पारिमाण्डल्यादिभिन्नसंप्रतिपन्नकारणताकनित्यभावपरमेव नित्य-पदमिति नैव-कारोपदर्शित-व्यापकताविरोध इति द्रष्टव्यम्॥

---

1. 'सादृश्यञ्च तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्' इति मुक्तावली। 2. '-रूप-' नास्ति A. 3. '-त्व-' नास्ति A. 4. 'गुरुत्व-' A. 5. '-गवेषणाया' A. 6. 'तदुदा-' B. 7. '-मित्याहुः' B. 8. '-मिव' B. 9. 'भाति' नास्ति A. 10. 'आदि' अधिकः A. 11. 'परिमाणं स्वसमानजातीयोत्कृष्टपरिमाणजनकम्' इति न्यायात्। 12. 'वस्तुपारि-' A. 13. पारिमाण्डल्यादीति—तथा हि भाषापरिच्छेदे विश्वनाथः—

'पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम्'।

'कार्योत्पादकत्वं कारणत्वम्' इति शिवादित्याः। कार्योत्पत्तौ यदुपयोगं गच्छति (तत् कारणम्) इति जिनवर्द्धनः। 'अनन्यथासिद्धनियतपूर्ववर्त्ति कारणम्' इति सुष्ठुतरं कारणलक्षणञ्चावगन्तव्यम्।

(१) येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तत्तेनान्यथासिद्धम्; (२) अन्यं प्रति पूर्ववृत्तित्वे ज्ञात एव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तदन्यथासिद्धम्; (३) अन्यत्र क्लृप्तनियतपूर्ववृत्तिन एव कार्य-सम्भवे तत्सहभूतमन्यथासिद्धम्—इत्यादि तर्कसंग्रहादौ द्रष्टव्यम्।

भाषापरिच्छेदे तु—

'येन सह पूर्वभावः (१) कारणमादाय वा यस्य (२)।
अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् (३)॥
जनकं प्रति पूर्ववर्त्तितामपरिज्ञाय न यस्य गृह्यते (४)।
अतिरिक्तमथापि यद् भवेन्नियतावश्यकपूर्वभाविनः (५)॥
एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम्।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम्॥
तृतीयं तु भवेद् व्योम कुलालजनकोऽपरः।
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ'॥

९२। चतुर्थीं शङ्कां निराकरोति—एतेषामिति। [1]निःश्रेयसहेतुत्वं च तत्प्रागभावव्याप्यप्रागभावप्रतियोगित्वं कारणतत्कारणसाधारणम्। तत्राऽऽत्मतत्त्वज्ञानं संसारकारणीभूततन्मिथ्याज्ञाननिवर्तकतया कारणम्। तत्तत्त्वज्ञानसाधनतया चेतरपदार्थतत्त्वज्ञानमिति विवेकः। [2]एवमेव च साक्षात्परम्परासाधारणप्रयोजकभावमभिप्रेत्यैतेषामिति बहुवचनं [3]प्रायुङ्क्त। एतेनात्मतत्त्वज्ञानं संसारवृक्षशाखामूलस्तम्भायमानस्वाज्ञाननिवर्तकतया परमुद्दिश्यताम्, कृतमितरपदार्थतत्त्वज्ञानोपदेशप्रयासेनेत्याद्यपशङ्कान्तर्गतसर्वपदे शङ्कान्तरमनवकाशं वेदितव्यम्। [4]तत्त्वमनारोपितमिति। यद्यप्यनारोपितमिति प्रसज्यप्रतिषेधे भ्रमविषयत्वस्य केवलान्वयित्वेनाप्रसिद्धिः, पर्युदासे तु क्वचित्प्रमाविषयः सर्वत्र तत्त्वं स्यात्, आरोपाविषयत्वस्यालाभात्; तथाऽपि यत्र विशेष्ये यदनारोपितमस्तीति यावत्तत्र तत्तत्त्वम्। पर्युदासेन तदर्थसमर्पणं तु 'नञिवयुक्त'न्यायेन व्यतिरेकितया आरोपितसादृश्यलाभाय। तेन निःश्रेयसोपयोगिपरस्परव्यावृत्तपदार्थज्ञानजनकज्ञानविषयस्तत्त्वमिह लक्ष्यमिति केवलान्वयिन्यतिव्याप्तिरिति निरस्तम्। न चास्तीति लडर्थवर्तमानत्वविवक्षायां श्यामोऽयमासीदिति ज्ञानविषये श्यामत्वेऽव्याप्तिः। अविवक्षायां तु पाकरक्ते श्यामत्वं तत्त्वं स्यादिति वाच्यम्. संबन्धस्यैवास्त्यर्थत्वात्; घटस्वरूपे श्यामत्वस्य तत्त्वतयेष्टत्वात्, पाकजरागविशिष्टे च संबन्धस्यैवाभावादप्रसङ्गात्॥

९३। स च [5]श्रवणेति। [6]श्रुतिपदपक्षकसंसर्गज्ञानानुमितिः श्रवणम्; तदितरेतरभेदानुमितिर्मननम्; मतेऽर्थे सजातीयज्ञानधाराकरणं निदिध्यासनम्; साक्षात्कारः प्रसिद्धः। एते चत्वारो यथासंभवं पदार्थानां, न तु सर्वेषाम्। तत्राऽऽत्मनश्चत्वारोऽपि॥

९४। निःश्रेयसं पुनरिति। इदानीं कतिपयदुःखध्वंसनिवृत्त्यै [7]समस्तेति। श्रोत्रमनःप्रभृतेर्नित्यदुःखस्याविनाशादप्रसिद्धिं वारयति—कार्येति। स्वावच्छिन्नभोगजनकादृष्ट-

---

अत्र मुक्तावली।

'एतेषु पञ्चसु अन्यथासिद्धेषु मध्ये पञ्चमोऽन्यथासिद्ध आवश्यकः, तेनैव परेषां चरितार्थत्वात्'।

(१) 'स्वसमवेतकार्योत्पादकत्वं समवायिकारणत्वम्'।

(२) 'समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यमसमवायिकारणत्वम्'।

1. 'धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्' ( वै० सू० १।१।४ ) इति कणादः।

तथा च 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' ( न्याय० सू० १।१।२ ) इति गौतमः।

2. 'एतदेव' A. 3. 'प्रायुक्तम्' B. 4. 'अनारोपितं रूपमिति—अतस्मिंस्तदध्यवसाय आरोपः, तद्रहितं वस्तुनः स्वरूपं तत्त्वम्' इति जिनवर्द्धनः। 5. 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' ( बृ० २-४-५ ) 6. 'श्रुतिपदपक्षिका सं-' A.

7. '( पदार्थानां ) तत्त्वज्ञानेन उत्पाद्यो मिथ्याज्ञानरूपस्य कारणस्य प्रध्वंसः तेन समानाधिकरणः तत्( मिथ्याज्ञान )कार्यभूतानां समस्तदुःखानामभावः' इति शिवादित्योक्तमोक्ष( निःश्रेयस )लक्षणविमर्शः।

क्षयेणौदासीन्येनावस्थानेऽपि दोषाभावात् मुक्तौ शारीरेन्द्रियादिकार्य[1] समस्तदुःखविनाशेऽपि प्रमाणाभावात् पुनरप्रसिद्धिं वारयति—तद्विति । तेन देवदत्तमिथ्याज्ञानेन कार्यस्य समस्तदुःखस्याभावो देवदत्तनिःश्रेयसमित्यर्थः । तथाऽपि देवदत्तमिथ्याज्ञानसाध्यतदीयसमस्तदुःखाभावो यज्ञदत्तेऽपि, सोऽपि मुक्तः स्यात्, अत आह—मिथ्याज्ञानध्वंससमानाधिकरणेति । ननु सौषुप्तिकसकलदुःखाभावो भूतभाविमिथ्याज्ञानध्वंसैरसमानकालीनोऽपि तत्समानाधिकरण एवेत्यतिव्याप्तिरिति चेत् ? न ; अधिकरण-पदेन काल-रूपाधिकरणस्यैव ग्रहणात् । तथाऽप्यतीतमिथ्याज्ञानध्वंससमानकालीनत्वं तस्यापीति दोषतादवस्थ्यपरिहाराय समस्तमिथ्याज्ञानमेव तदर्थ इत्यभ्युपेयम् ; न चैवं संभवति, शुकमुक्तिकाले व्यधिकरणसमस्तमिथ्याज्ञानप्रध्वंसाभावात् । अत आह—कारणेति । मोक्षत्वाभिमताभावप्रतियोगिदुःखकारणं च मिथ्याज्ञानं समानाधिकरणमेवेति [2]तल्लक्षणया समानाधिकरणसमस्तमिथ्याज्ञानप्रध्वंससमानकालीनत्वलाभान्न पूर्वदोषः । न चैवमुत्तरसमस्तपदानर्थक्यम्, तादृशि चरमदुःखकालीने पूर्वदुःखाभावेऽतिव्याप्तेरन्यथा दुःपरिहरत्वात् । न च सुखान्तमुक्तौ भोगदशायामतिव्याप्तिस्तदाऽपि मिथ्याज्ञानस्यात्यन्तमनुच्छेदात् इति श्रुतपदार्थस्तावदुपवर्णितः ; किमिह मिथ्याज्ञानध्वंसोऽपि भूतभाविवर्तमानप्रतियोगिविकल्पनेन कथं तत्त्वज्ञानोत्पाद्यः, वासनानाशाभिधाने वा कथं न ग्रन्थविरोध इत्यादिना शोध्यस्वरूपविलयमात्रफलकेन कुसूलक्षालनायासेन ? नन्वीदृशि निःश्रेयसे कथं तत्त्वज्ञानं हेतुः ? तस्य मिथ्याज्ञाननिवर्तकतयैव लोकप्रसिद्धेरित्यत आह—तत्त्वज्ञानोत्पाद्येति । ध्वंसविशेषणं चैतत् । तथा च विशेषणीभूतमिथ्याज्ञानध्वंसजनकतया चरमदुःखध्वंसं संपादयतो युक्तं समस्तदुःखाभावात्मकनिःश्रेयसहेतुत्वं तस्य एकदेशोपगमापगमहेतूनामिव राश्युपगमापगमहेतुत्वमिति भावः ॥

९९ । ननु न तत्कार्यं दुःखमस्ति यद्व्यवच्छेदाय तत्कार्येत्युच्यत इत्याशङ्क्याऽऽह—दुःखं त्विति । तथा चाकार्यदुःखव्यावृत्त्यर्थं तदुपादानमुचितमिति भावः ॥

९६ । वृत्तवर्तिष्यमाणयोः सङ्गतिं दर्शयन् लक्षणाभिधानस्य चाऽऽवश्यकतां दर्शयन्नेव तत् प्रतिजानीते—इदानीं लक्षणाधीनत्वादिति । प्रागुद्देशप्रवृत्तेन प्रसङ्गात् कस्यचिल्लक्षणमप्यभिहितम्, यथा विभक्तवायुभेदोदाहरणप्रदर्शनप्रवृत्तेन प्राणस्य ; अत एवाग्रे तदनभिधानम्, इदानीं लक्षणमेवोच्यते, इत्येव-कारेण सूचयति । यद्वा, बालव्युत्पादके प्रकरणे बहुयत्नसाध्यायाः परीक्षाया अनिरूपणं तदर्थः । [3]केवलव्यतिरेकीति । हेतुविशेषत्वमेव लक्षणत्वम् । इतरत्तु विवरणं विशेषस्य । तत्रापि न केवल-पदमन्वयव्यतिरेकिणोऽपि क्वचिल्लक्षणत्वात् । क्वचिदन्वयस्य लक्षणताविरोधित्वे

---

1. 'समस्त' नास्ति A. 2. 'तल्लक्षणया' A.

3. केवलव्यतिरेकी ( हेतुविशेषः ) इति—

'व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ।
तयोरभावयोस्तस्माद् विपरीतः प्रतीयते ॥ श्लो० वा० अनु० १२१ ॥

क्वचिदन्वये व्यतिरेकि गन्धवत्त्वमपि न लक्षणं स्यात्। एवं च [1]धूमादेरपि लक्षणत्वादग्निमे व्यावृत्त्यनुमाने वैधर्म्यदृष्टान्तसमर्पकं धूम-पदं प्रमेयत्वाद्युपलक्षणमित्याहुः ॥

५८। ननु पदार्थसामान्यलक्षणं किंचिदस्ति न वा ? आद्ये, तदन्वयि—व्यतिरेकि वा ? आद्ये, न तल्लक्षणम्; लक्षणलक्षणाभावात्, व्यावृत्त्याद्यसाधकत्वाच्च। द्वितीये तु, यन्निष्ठ-व्यतिरेकप्रतियोगि तत्तत्रैवाव्यापकं स्यात्। आद्यद्वितीये विशेषलक्षणाशक्यत्वम्, तस्य सर्वत्र सामान्यलक्षणपूर्वकत्वदर्शनादित्याशङ्क्याऽऽह—तत्र पदार्थलक्षणं कृतमेवेति। पदार्थानां द्रव्या-दीनां सामान्यलक्षणासंभवेऽपि लक्षणमभियुक्तैस्तत्र तत्र कृतमेव, अतो न सामान्यलक्षणमनभि-धाय विशेषलक्षणाशक्यत्वमिति विशेषलक्षणमेवास्माभिरभिधीयत इत्यर्थः ॥

५९। तत्र द्रव्यं लक्षयति—द्रव्यं त्विति। गुणादिव्यावृत्त्यै [2]द्रव्यत्वेति। सामान्यपदं जातिपरम्। तच्च सौगताशङ्कितमपोहवादं प्राभाकराशङ्कितं च संस्थानाभिव्यङ्ग्यत्वेनाजातित्वं निराकर्तुम्, न लक्षान्तर्गतम्। ननु द्रव्यत्व एवातिव्याप्तिस्तद्योगस्योभयसाधारण्यात्; अथ द्रव्यत्वसामान्येन योगो विवक्षितः, न तु द्रव्यत्वसामान्यस्य योग इति; न च तस्यैव तस्य योग इव तेनैव [3]योगः संभवतीति चेत्, तत् किं द्रव्यत्वसामान्येन यः संबन्धो द्रव्यस्य स तन्मात्रवृत्तिः ? ओमिति वदन् स्ववचनविरोधस्तावत् स्मारयितव्यः। ततः सिद्धान्तविरोधः पुत्रेण सह आगत इत्यादावागमनादेरुभयवृत्तितैव सह-भावार्थः। तदिह तेन समं तस्य योग इति वदतैव तावदुभयवृत्तित्वमनुमतमिति कथं न विरोधः ? नेयं [4]सहार्थ-योगे तृतीया, अपि तु निरूपण-क्रियाकरणे। तन्निरूपितश्च योगो न तत्रैव तेनैव तद्युक्तमित्यप्रतीतेरिति चेत्, न; द्रव्यत्व-निरूपितयोगवद्द्रव्यनिरूपितयोगो द्रव्यत्वेऽस्ति न वा ? यद्यस्ति स प्राचीनद्रव्यत्वनिरूपितयोगाद-भिन्न इत्युभयनिरूप्यतयोभाभ्याममादीयमानोऽनेकप्राघुणक इव निराश्रयः प्रसज्येत। अथ

---

अपि च—

'अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते।
साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः' ॥

तथा चायं प्रयोगः—

'पृथिवी इतरेभ्यो भिद्यते। गन्धवत्त्वात्। यद् इतरेभ्यो न भिद्यते तत् गन्धवत् न भवति यथा आपः। पृथिवी गन्धवती न भवति इति न। तस्मात् पृथिवी इतरेभ्यो न भिद्यते इति न। अपि तु भिद्यते एव'।

1. 'अनुमानादेरपि' A.

2. 'सामान्यापेक्षितो योगः समवायः, तद्वत् समवेतम्। द्रव्यत्वं समवेतं यस्मिन् तत् द्रव्यत्व-सामान्ययोगि' इति लक्षणपरिष्कारः। 'क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम्' (वै० सू० १।१।१५)।

3. 'तद्योगः' A.

4. 'सहार्थे योगे' B.

नास्ति, द्रव्यत्वमेव तन्न स्यात्, द्रव्येणासंबन्धात्। किं च तथा योगः स्वरूपसंबन्धो महाकाल इव तदुपाधावादित्यकर्मण्यपीत्यतिव्याप्तिरिति चेत्, न; सामान्यापेक्षितो योगः समवायः, सोऽस्यास्ति तत् सामान्ययोगि समवायीति यावत्। ततो द्रव्यत्वं सामान्ययोगि यत्रेति विग्रहेण समवायेन द्रव्यत्वं यत्रेत्यर्थलाभात्। न च द्रव्यत्वे तदस्ति। न वा कालोपाधौ समवायेन तदिति नातिव्याप्तिः। अत एव सामानाधिकरण्यं योगमादाय गुणेऽतिव्याप्तिरप्यनवकाशा, सामान्य-पद-[1]समभिव्याहारेण योग-पदस्य [2]समवायत्वलाभात्। इदमपि सामान्य-पदप्रयोजनम्। एवमेवं-जातीयके सर्वत्र। समर्पकपदाभावस्थले तु विवक्षैवास्य शरणमिति द्रष्टव्यम्। अन्ये तु मानं परिमाणं तेन सह भूतं समानं तद्भावः सामान्यम्। परिमाणवत्त्वं तद्योगित्वं तद्वृत्तिपदार्थ-विभाजकोपाधिमत्त्वं लक्षणान्तरमित्याहुः। गुणवदिति। गुणवदन्यान्यदित्यर्थः। तेन नोत्पत्स्यमानगुणे द्रव्येऽव्याप्तिः, अन्योन्याभावस्य व्याप्यवृत्तित्वात्। अनुत्पन्नगुणद्रव्य-प्रध्वंसपक्षे तु गुणवद्वृत्तिपदार्थविभाजकोपाधि[3]मदित्यर्थोऽतो द्रव्यजनकचरमतन्तुसंयोगजनककर्म-जन्यविभागोत्तरक्षणोत्पन्नेन प्रथमतन्तुकर्मणा द्रव्योत्पत्तिसमसमयमेव संयोगनाशान्नश्यति द्रव्ये गुणतत्प्रागभावप्रध्वंसासंभवेऽपि नाव्याप्तिः। न चैवमसंभवि, प्रक्रियाक्रमेण कदाचित् तथाऽपि संभवात्। एतेन गुणात्यन्ताभावविरोधिमद्द्रव्यमित्यादि प्रत्यादिष्टम्। समवायिकारणं चेति। स्वसमवेतकार्यजनकतावच्छेदकजातीयमित्यर्थः। अतो न प्राचीनदोषानुषङ्गः॥

६०। [4]गुण-लक्षणं पूर्वं पूर्ववत्। द्वितीये तु सामान्यादिनिवृत्त्यै पूर्वविशेषणम्। उत्तरे क्रमेण कर्म-द्रव्ययोः। समवायिकारणराहित्यं च स्वरूपायोग्यत्वं विवक्षितमतो नोत्पद्यमाने द्रव्येऽतिव्याप्तिः॥

६१। कर्म-लक्षणमपि पूर्वं पूर्ववत्। द्वितीये तु क्रमेण संयोगविभागाजन्यत्वमुभयोराद्यत्वम्। तदुभयगर्भं च लक्षणद्वयमत्र विवक्षितमतो नेतरभेदसाधने वैयर्थ्यमन्यतरस्य। असमवायिकारणत्वं च स्वरूपयोग्यत्वं विवक्षितमिति न विनश्यदवस्थकर्मण्यव्याप्तिः। संयोगविभागव्यावृत्त्यै आद्येति॥

६२। [5]सामान्यमिति। नित्यत्वमात्रं गगने समवेतत्वविशेषितमपि विशेषेष्वतिव्याप्त-मित्यनेकेत्यपि। अनेकसमवेतत्वं च सर्वविशेषान्योऽन्याभाववत्समवेतत्वमिति न रूपत्वादा-

---

1. 'समभिहारेण' A. 2. 'समवायिपरत्वलाभात्' A. 3. 'मदित्यर्थतो' A. 4. 'द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः' इति तर्कसंग्रहः। 'द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुण-लक्षणम्' (वै० सू० १।१।१६)। 5. 'नित्यत्वे सति अनेकसमवेतत्वम्' सामान्यत्वमिति मुक्तावली। 'नित्यमेकमनेकानुगतं' सामान्यम् इति तर्कसंग्रहः। अत्र नीलकण्ठी—'एकपदं स्वरूपकथनमिति द्रष्टव्यम्'। 'न तु व्यावर्तकमित्यर्थः' इति भास्करोदया।

'समवेतमित्यनेन समवायाभाववन्नित्यद्रव्याणामसमवेतानां व्युदासः। अनेकसमवेतमित्यनेन विशेषाणां

ऽव्याप्तिरिति वृद्धाः। एक-पदं तु न लक्षणान्तर्गतं किं तु विशेषवत् प्रतिव्यक्ति नानेकं सामान्यं किं त्वेकमिति एकाकारप्रत्ययनिर्वाहक्षमत्वं तस्योपदर्शयितुम्। अन्ये तु 'द्रव्यकिरणावलीप्रकाशा'नुसारेण समवेत-पदं वृत्तिमन्मात्रपरमङ्गीकृत्याऽभाव-समवाययोरतिव्याप्तिनिरासायैकमित्याचक्षते। तत्र तदर्थ-तयाऽभिमतमसहायत्वं नोत्पत्तौ, नित्यभावेऽसंभवात्। ससहायोत्पत्तिकान्यत्वं चाऽतिव्यापक-मेव प्राग्वत्। नापि ज्ञप्तौ, इतरनिरूपणानधीननिरूपणकत्वपर्यवसाने इदंत्वादिना प्रतियोगि-संबन्धिनिरूपणानधीननिरूपणयोरभाव-समवाययोरेवातिव्याप्तेः, तद्भिन्नैवान्योन्याभावव्याप्यवृत्ति-प्रत्याशया तदधीननिरूपणकान्यत्वपर्यवसाने तु स्फुट एव जातिपरित्यागः। स्वविशेष्यक-जातिप्रतीतेर्विशेषणीभूतव्यक्तिनिरूपणाधीनत्वेन जातेरपि तथात्वाभावादित्यादि दूषणजातं यद्यप्य-भावसमवायसविकल्पकैकवेद्यतापक्षेऽविशिष्टप्रतीतिविषयत्वपर्यवसानेनानुपमृदितासहायपदस्वरसेन--सुपरिहरम्, [1]अनेकपदवैयर्थ्यमपि योगिनिर्विकल्पकपक्षे विशेषादिनिरासेन; तथाऽप्यन्यपरस्यापि समवेत-पदस्यैवोपादाने लक्षणानन्तर्गतस्याप्येक-पदस्येव न प्रयोजनान्तरं प्रतिभाति। भगवदिच्छा-त्मनि च संकेते स्वरूपसंबन्धेनानेकवृत्तौ विशेषादिवन्निर्विकल्पकविषयेऽतिव्याप्तिः। ननु जात्यु-पाधिसाधारणसामान्यलक्षणस्यास्य दण्डित्वाद्युपाधयोऽपि लक्ष्यास्ते च 'कृत्तद्धितसमासेभ्यः संबन्धाभिधान'मित्यादिन्यायेन दण्डसंयोगादिपर्यवसिताः कथं नित्यानेकसमवेता इति चेत्? न; परम्परासंबद्धाया जातेरेवोपाधित्वात्तस्याश्च नित्यत्वात्। कुतस्तर्हि जात्युपाधिवैचित्र्यम्? संबन्धभेदादेवेति गृहाण॥

६३। विशेषस्त्विति। रूपादिनिवृत्त्यै पूर्वभागस्तत्र सामान्यं जातिस्तद्राहित्यमपि साक्षात्-संबन्धेन विवक्षितम्। अन्यथा, विशेषत्वोपाधिप्रविष्टाया जातेः परम्परयाऽपि तत्रावृत्तौ विशेषानु-गतस्य व्यवहारस्यैवोच्छेदप्रसङ्गात्। विशेषणोपादानसामर्थ्यादवधारणगर्भः सामान्यनिवृत्त्यै चरमभागः। तत्र वृत्तिः [2]समवाय इति नाप्रसिद्धिर्न वा ज्ञानप्रागभावादावतिव्याप्तिः॥

६४। [3]नित्यः संबन्ध इति। गगनादिव्यावृत्त्यै परभागः, संयोगव्यावृत्त्यै पूर्वभागः। ननु सुखादिसाक्षात्कारजनकमनःसंयुक्तसमवायसंबन्धशरीरप्रविष्टे[4] नित्ये चाऽऽत्मन्यतिव्याप्तिः। तथाऽ-तीतानागतसाक्षात्कारे चक्षुःसंबन्धभूते सामान्ये नित्यस्वरूपसंबन्धे वाच्यवाचकभावे चातिव्याप्तिः। मुख्यः संबन्धो विवक्षित इति [5]चाविनिगमपराहतम्। जातिशून्यत्वे सत्यसमवेतभावत्वं तु स्फुट-

---

कर्मणां रूपादीनां गुणानां च तेषामेकमात्रसमवेतत्वात्। नित्यमित्यनेन कार्यद्रव्यसंयोगविभागद्वित्व-पृथक्त्वादीनां निरासः। अनेके सन्तो विशेषा अपि अनेकसमवेताः स्युरिति तदातिप्रसक्तिसन्निरासाय एकमिति। केचित् स्वरूपपरमेवैतत्पदं व्यवच्छेद्याभावेऽपि राभस्यात् प्रयुक्तमित्याहुः' इति जिनवर्द्धनः।

1. '०वैयर्थ्यमिव' A. 2. 'समवायेन' A. 3. 'गुणक्रियादिविशिष्टबुद्धिः विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात्, दण्डी पुरुष इति विशिष्टबुद्धिवत् इत्यनुमाने संयोगादिबाधात् समवाय-सिद्धिः' इति मुक्तावली। 4. 'शरीर' नास्ति A. 5. 'अविनिगमकपराहतम्' A.

आत्माश्रयग्रस्तम् । न जातिस्वरूपान्तर्गतानेकसमवेतत्वप्रयुक्तेनान्योन्याश्रयेणापि निहन्तुमुचितम् । अथ 'सविशेषणे ही'ति न्यायेन संबन्धत्वेन नित्यत्वान्वयाद् यस्य संबन्धत्वं नित्यं संबन्धत्वमेव यस्य न कदाचित् स्वभिन्नसंबन्धसंबन्धित्वमपि संयोगादिवत् स समवाय इत्यक्षरार्थः । समवायान्ये च केचिदन्यत्र समवेततया, केचिदन्यसमवायवत्तया, केचिदुभयरूपतया स्वभिन्नसंबन्धसंबन्धिन एवेत्यदोषः । अभावस्वरूपसंबन्धव्यावृत्त्यर्थं भाव इत्यपि द्रष्टव्यमिति मतम् । तन्न, समवायस्यापि समवायपदसंकेतनात्मकस्वभिन्नसंबन्धसंबन्धित्वेनासंभवप्रसङ्गात् । तस्मात् सन्निन्नस्वभिन्नसंबन्धाधेयभिन्नभावत्वं समवायत्वम् । प्रलये च जात्यादेः स्वरूपसंबन्धेन काले वृत्तावपि प्राक् समवायेनाधेयस्य न स्वाभिन्नसंबन्धाधेयभिन्नत्वम्, अन्योन्याभावस्य व्याप्यवृत्तित्वात् । अवृत्तिव्यावृत्त्यै सन्निन्नेति द्रष्टव्यम् ॥

६५ । प्रतियोगिज्ञानाधीनज्ञान इति । अत्र यद्यपि प्रतियोगी न निरूपकमात्रं संयोगसमवायादावतिव्याप्तेः, नापि विरोधी, तस्याभावगर्भत्वेनान्योन्याश्रयात् ; अत एव न स्वाभावविरहः, सर्वत्र ज्ञाने विषयीभूतादभावादन्यस्य कार्यतावच्छेदकस्यापरिचये प्रतियोगिज्ञानाधीन[1]त्वस्य ज्ञातुमशक्यत्वं च[2] ; तथाऽप्यभावत्वमखण्डोपाधिरेव लक्षणतया विवक्षितमित्याहुः ॥

६६ । पृथिवीत्वसामान्यवती पृथिवी[3] त्यादौ पृथिवीत्वादिना सामान्यवतीति विग्रहात् न कर्मधारयान्मतुबनुपपत्तिः । सामान्यादिपदं च सामान्यनिर्वाहकसंबन्धेन तद्वत्त्वालाभायेति न कालादावतिव्याप्तिः ।

७० । [4]शब्दगुणमिति । बहुव्रीहिः [5]प्रतीतं मत्वर्थमात्रं समवायेन शब्दवदन्यान्यत्वं चेह लक्षणम् । तस्य विभुत्वे[6] गगनस्य तद्वृत्तानुपपत्तिरजसंयोगाभावात् । [7]अयुतसिद्ध्यभावादतिप्रसङ्गाच्चेति शङ्कानिरासाय तु गुण-ग्रहणम् ॥

---

1. '०धीनज्ञानत्वस्य' A. 2. '०शक्यत्वाच्च' A.

3. 'गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्', 'स्वरूपेण गन्धाश्रययोग्यत्वम्' वा पृथिवीत्वमिति बोध्यम् । सुवर्णं न पार्थिवम् । तथा च प्रयोगः—

सुवर्णमपार्थिवम्, असति प्रतिबन्धके अत्यन्तानलसंयोगेऽपि तद्गतद्रवत्वनाशादर्शनात्, यन्नैवं तन्नैवम्, यथा—घृतम् ।

4. तथा हि, प्रशस्तपाद-भाष्यम् (पृ० ५८, वै० सू० २।१।२५, २६, २७)—शब्दः प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वाद् अयावद्द्रव्यभावित्वाद् आश्रयादन्यत्रोपलब्धेश्च न स्पर्शवद्विशेषगुणः । बाह्येन्द्रियप्रत्यक्षत्वाद् आत्मान्तरग्राह्यत्वाद् आत्मन्यसमवायाद् अहङ्कारेण विभक्तग्रहणाच्च नाऽऽत्मगुणः । श्रोत्रग्राह्यत्वाद् वैशेषिकगुणभावाच्च न दिक्कालमनसाम् । परिशेषाद् गुणो भूत्वा आकाशस्याधिगमे लिङ्गम् । विस्तरस्तु भाषापरिच्छेद-मुक्तावल्यां ( का० ४४ ) कणादसूत्राणां ( वै० सू० २।१।२५, २६, २७ ) विवृत्युपस्कारयोश्चानुसन्धेयः ।

5. 'प्रतीत-म-' B. 6. 'विभुद्रव्यत्वे' B.

7. '( पृथक् ) अविद्यमानयोः आधाराधेययोः सम्बन्धः अयुतसिद्धिः' इति शिवादित्यः । 'ययोर्द्वयोर्मध्ये एकमविनश्यद् अपराश्रितमेवावतिष्ठते तौ एव द्वौ अयुतसिद्धौ विज्ञातव्यौ' इति तर्कभाषा । पदार्थानाम् अयुतसिद्धत्वं ब्रह्मसूत्रभाष्ये [ २-२-१३,१७ ] खण्डितमाचार्येण ।

७१। [1]'आदित्येत्यादि। परत्वापरत्वगर्भं लक्षणद्वयमिह विवक्षितम्। अतो नान्यतरवैयर्थ्यम्। तत्र 'परत्वानधिकरण'मात्रं गुणादावतिप्रसक्तमित्यतः 'परत्वासमवायिकारणाधार' इति। तत्कारणाधारतामात्रमदृष्टाधारतयात्मन्यतिव्याप्तमि'त्यसमवायी'ति। ज्ञानासमवायिकारणाधारतया पुनस्तत्रैवातिव्याप्तिरिति 'परत्वे'ति। तादृशदिक्पिण्डसंयोगाश्रये दिश्यतिव्याप्तिं परिहर्तु'मादित्ये'त्यादि। पिण्ड एव तां परिहर्तुं 'परत्वानधिकरण'मिति। एवमपरत्वगर्भलक्षणेऽपि विशेषणकृत्यं द्रष्टव्यम्॥

७२। एवमेव च दिग्लक्षणद्वयेऽपि॥

७३। बुद्धिगुण इति तु शब्दगुणमितिवद् व्याख्येयम्[2]॥

७४। [3]स्पर्शशून्यमिति। घटादिव्यावृत्त्यै पूर्वभागः। गगनादिव्यावृत्त्यै चोत्तरभागः। स्पर्शवदवृत्तिकर्मवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमिति तु तात्पर्यम्॥

७५। चक्षुर्मात्रेति। विशेष्यमात्रं रसे चक्षुर्ग्राह्यत्वविशेषितं संयोगादौ विशेषपदमुपादायापि तत्परिहारे स्नेहे गुणरहितं रूपत्वादावतिप्रसक्तमतः समस्तं लक्षणम्। ननु दैवाच्चक्षुर्मात्रगृहीतविनष्टे संयोगादावतिव्याप्तिः, प्रभातेजस्त्वपक्षे तत्संयोगे तु स्फुटैव, परमाणुरूपे चाव्याप्तिरिति चेत्, अत्राहुः—चक्षुर्मात्रग्राह्यजातिमत्त्वमिह लक्षणम्। रूपत्वादिजातिव्यावृत्तिश्च जातिमत्त्वपदेनैवेति गुणपदमप्यप्रयोजनमिति, तन्न; रूपत्वादिजातेरनुमानादिग्राह्यत्वेनासंभवात्, चक्षुरन्येन्द्रियाग्राह्यत्वस्यापि मनोग्राह्यत्वेनासंभवात्, बाह्यत्वेनेन्द्रियविशेषणे गुरुत्वादावतिव्याप्तेः। चक्षुःप्रमाणकलौकिकप्रत्यक्षमात्रविषयत्वं तु तदन्याविषयत्वपर्यवसाने[4] गुरुत्व एवातिव्याप्तम्। तस्माच्चक्षुरन्यबहिरिन्द्रियजलौकिकप्रत्यक्षाविषयचक्षुर्ग्राह्यजातिमान् गुणो रूपमिति लक्षणं विवक्षितम्। गुण-पदं चानुगतप्रत्ययसिद्धप्रभात्वजातिमत्प्रभावारणाय। तद्रहितमेव वा लक्षणमिति दिक्॥

७६। रसनग्राह्य इति। अत्र रसत्वजातावतिव्याप्तिवारणाय रसनग्राह्यजातिमत्त्वं विवक्षितमपि सत्तामादायातिप्रसङ्गीति मात्र-पदमपि द्रष्टव्यम्। तन्महिम्ना च रसनान्यबहिरिन्द्रियजलौकिकप्रत्यक्षाविषयरसनग्राह्यजातिमान् रस इति पर्यवस्यतीति न कश्चिद्दोषः। गुण-पदं तु स्वरूपकथनाय।

---

1. 'अतीतादिव्यवहारहेतुः काल' इति तर्कसंग्रहः। भाषापरिच्छेद ( का० ४५ ) तु—

जन्यानां जनकः कालो जगतामाश्रयो मतः।
परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः॥

इति लक्षणं द्रष्टव्यम्।

2. तच्च चान्तःकरणपरिणामरूपतया सांख्याद्यभिमतं द्रव्यत्वमपाकर्तुं गुण-ग्रहणम्।

3. तथा च कणाद-सूत्रम्—

'आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्' ( वै० सू० ३।२।१ )।

गोतम-सूत्रञ्च—

'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' ( न्याय० सू० १।१।१६ )।

4. 'तदन्यबाह्येन्द्रियप्रमाणकलौकिकप्रत्यक्षाविषयत्वपर्यवसाने' इत्यर्थः।

अतीन्द्रियरसेऽव्याप्तिवारणाय ग्राह्य-पदेन ग्राह्यतावच्छेदकधर्मवत्त्व[1] विवक्षित्वा रसत्वाद्यतिव्याप्ति-निरासाय गुण-पदोपादानमिति तु असिद्धिमात्रवारकविशेषणवैयर्थ्यादयुक्तम्। अन्यार्थयाऽपि विवक्षया दोषनिवृत्तिश्चेति ॥

७७-७८। एवं गन्ध-स्पर्श-शब्दलक्षणेष्वपि ॥

७९। संख्यात्वसामान्यसद्भावे कार्यलिङ्गकं प्रमाणं सूचयन्नेव संख्याया लक्षणान्तरमाह—गणनाव्यवहारेति। जन्यगणनासाक्षात्कारत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयो गुणः संख्या इत्यक्षरार्थः। गणनाभिवदनव्यवहारत्वावच्छिन्नकार्यतानिरूपितज्ञानवृत्तिकारणतावच्छेदकविषयो गुण इति। अयमाशयः—शतं गणना सहस्रं गणनेति शतादिषु परार्द्धपर्यन्तेषु जायमानोऽयमनुगतो गणनाव्यवहारो न तावच्छतादिसंख्याव्यक्तिभिरननुगताभिः शक्य उपपादयितुम्, नापि शतत्वादिनाऽनुगतीकृताभिः शतसंख्याव्यक्त्यनुगमेऽपि सहस्रादौ तदसंभवात्। अतो गणनात्वमेवानुगतं शतादीनामीदृशव्यवहारकारणतावच्छेदकं विषयतया कारणं च विषयस्थोद्भूतरूपत्वादिवत् तद्वती संख्येति। तत्र विषयतया कारणे संख्यात्वेऽतिव्याप्तिपरिहाराय गुण-पदम्। संख्येति भावपरो निर्देश इति तु प्रकरणविरोधादयुक्तम् ॥

८०। [2]एवमेवंजातीयकेषूत्तरलक्षणेष्वपि द्रष्टव्यम् ॥

८१। पृथक्त्वजातियोगीति। यद्यपि पृथक्त्वं गुणो न जातिस्तथाऽपि भावान्तरपरोऽयं निर्देशः। एवमन्यत्रापि द्रष्टव्यम् ॥

८२। अनित्यः संबन्ध इति। समवायव्यावृत्त्यै पूर्वम्, घटादिव्यावृत्त्यै चोत्तरपदम्। ननु तन्तुपटप्रागभावस्वरूपसम्बन्धेऽनित्येऽतिव्याप्तिः? संबन्धिभिन्नत्वविवक्षायामपि रूपादि-प्रत्यासत्तिभूतचक्षुःसंयुक्तसमवायान्तर्गतानित्यघटादिस्वरूपेऽतिव्याप्तिरेव? अत एव तत्स्थाने गुण-विशेषणमपि निरस्तम्। संयुक्तसमवेतसमवायान्तर्गतेऽनित्ये रूपादावतिव्याप्तिरिति। अत्र ब्रूमः—अनित्यः सम्बन्ध इति समभिव्याहारबलादनित्ये यस्मिन् सम्बन्धत्वं पर्याप्तं स संयोग इत्यर्थलाभाददोषः। संयुक्तसमवायादिस्थले हि नानित्यघटादिमात्रांशे सम्बन्धत्वपर्याप्तिर्यत्र च विशिष्टे पर्याप्तिर्न तदनित्यमिति नातिव्याप्तिः। अनित्योभयस्वरूपसंबन्धव्यवच्छेदाय सम्बन्धि-[3]भिन्नत्वे सतीत्यपि विशेषणीयम्[3]*। मम शरीरमित्यत्र षष्ठ्यर्थभूतेऽदृष्टात्मनि सम्बन्धेऽति-

---

1. '०धर्मवत्त्वस्य विवक्षितत्वात् जातिमत्त्व' A.

2. तथा च वैशेषिकसूत्रविवृतौ जयनारायणः—

'त्रसरेणुमहत्परिमाणं प्रति द्व्यणुकगतं त्रित्वरूपं बहुत्वमसमवायिकारणम्। यत्र तूलकपिण्डाभ्यां प्रचययुक्ताभ्यां तूलकपिण्डान्तरमारब्धं तत्र शिथिलाख्यसंयोगरूपः प्रचयस्तद्गतावयविपरिमाणस्यासमवायिकारणम्। घटादिगतपरिमाणं तु कपालादिगतं महत्परिमाणमसमवायिकारणम्'।

3. '०भिन्नत्वेनापीदं विशे०' A.

ध्याप्तिनिरासाय ऐन्द्रियकत्वेन चेत्यप्याहुः। इन्द्रिय-लक्षणं चानन्तर्भूतसंयोगमपि सम्भवतीति नान्योन्याश्रयः॥

८३-८५। [1]विभाग-परत्वापरत्व-लक्षणानि संख्या-लक्षणेन व्याख्यातानि॥

८६। आत्माश्रयः प्रकाश[2] इति। प्रकाशपद-वाच्य इत्यर्थः। प्रदीपप्रभादेरपि प्रकाश-पदवाच्यतया तद्व्यावृत्त्यर्थमात्माश्रय इति। इच्छादिव्यावृत्त्यै 'प्रकाश' इति। ननु कर्मादिव्युत्पन्न-प्रकाशपदवाच्यत्वमिच्छादेरपीत्यतिव्याप्तिरिति चेत्, न; प्रोत्तर-काशि-धात्वर्थस्यैव लक्षणत्वात्, इच्छादेश्च कर्माद्यर्थ-घञर्थत्वात्। न चैवं प्रदीपादिव्यावर्तक-पूर्वपदवैयर्थ्यम्, प्र-काशेरनेकार्थतया ज्ञानालोक-साधारणतयाऽऽलोकव्यावर्तनार्थत्वात्॥

८७। [3]निरुपाध्यनुकूलवेद्यमिति। अनुकूलमिच्छाविषयः, उपाधिः प्रयोजकः, स चाऽनु-कूलपद-समर्पितेच्छोपरागादिच्छात्मा पर्यवस्यति। [4]निरश्च तत्सम्बन्धादिच्छाप्रयुक्तेच्छाविषय इत्यक्षरार्थः। जन्येच्छाजन्येच्छाविषयो भाव इति तु तात्पर्यार्थः। तत्र दुःखाभावव्यावृत्त्यै भाव-पदम्। वेद्य-पदं तु [5]लक्ष्यस्य ज्ञानासिद्धिनिरासायैव॥

८८। निरुपाधिप्रतिकूलवेद्यमिति। द्वेषाप्रयुक्तद्वेषविषय इत्यर्थः। अहिकण्टकादौ तु द्वेषस्तत्साध्यदुःखप्रयुक्त[6] इति न तत्रातिव्याप्तिः। वेद्य-पदं तु पूर्ववत्॥

८९। अर्थित्वेति। अर्थित्वमर्थि-व्यवहारः, स कार्यतया लक्षणं चिह्नं लिङ्गं गमकं यस्याः सा तथा। यद्विशेषज्ञयोगज्ञानादर्थी याचक इत्यादिव्यवहारः सा इच्छेत्यर्थः। तेनाऽऽत्मधर्मोऽर्थित्वं कथमिच्छा-लक्षणम्, कथं वा स्व-योगादर्थि-व्यवहारप्रयोजके धने नातिव्याप्तिरिति निरस्तम्॥

९०। प्रज्वलनात्मक इति। क्रोधादिपद-वाच्य इत्यर्थः॥

---

1. 'संयोग-नाशको गुणो विभागः' इति तर्कसंग्रहः। 2. 'सर्वव्यवहारहेतुर्गुणो बुद्धिः' इति तर्कसंग्रहे अन्नंभट्टः। 3. 'सर्वेषामनुकूलवेदनीयं सुखम्' इति तर्कसंग्रहः। अत्र दीपिका—''सुख्यहम्' इत्याद्यनुव्यवसायगम्यं सुखत्वादिकमेव लक्षणम्'। नीलकण्ठस्तु—''ननु सर्वेषामनुकूलवेदनीयम्' इत्यादि मूलं सुखादिलक्षणपरं न सम्भवति, परद्रव्योपभोगादिजन्य-सुखे साधूनां द्वेष-दर्शनादव्याप्तेरित्याशङ्कायां 'सुख्यहम्' इत्यादिप्रत्यक्षसिद्ध-सुखत्वादिकमेव लक्षणम्' इत्याह।

'विषयादयोऽनुकूलत्वेन संवेद्यन्ते, मोहावष्टब्धमनोभिरात्मभिरतस्तेऽपि सुखं स्युस्तन्निवृत्त्यर्थमुक्तं—निरुपाधीति। विषयास्तु उपाधिरूपेण मोहादिनैवानुकूलवेद्याः स्युः। परं तत्त्वज्ञाने समुत्पन्ने विगतमोहादिमलः शुद्धस्फटिक इव समुज्ज्वलो नानादुर्योनिसम्भूतदुःखदायकान् विषयान् विषसन्निभानेव पश्यति नानुकूलान्। तस्माद् योगज-धर्मानुग्रहादात्मनि यः परमाह्लादो भवेत् तत् सुखम्' इति जिनवर्द्धनः।

4. 'निर्' इत्युपसर्गस्यैतदर्थः; 'निरस्ततत्सम्बन्धा०' A. 5. 'लक्षणस्य' A. 6. '०स्तत्साध्यदुःख-द्वेषप्रयुक्तः' A.

९१। [1]प्रयत्नव्यवहारेति। प्रयत्नविशिष्टव्यवहारत्वावच्छिन्नकार्यतानिरूपितज्ञानवृत्तिकारणताया विषयत्वेनावच्छेदकः प्रयत्न इत्यर्थः ॥

९२। एकवृत्तीति। अदृष्टादिव्यावृत्त्यर्थमसमवायीति। तन्तुरूपादिव्यावृत्त्यै पतनेति। उद्गच्छतः कन्दुकादेरुपरि कराघातादधःपतनदर्शनात्तदसमवायिकारणं संयोगं व्यावर्तयितुमेकवृत्तीति। ननूद्गमनवेगप्रतिबद्धगौरवतया [2]यावद्वेगमपततोऽप्युपरि करसंयोगादुन्मुखवेगविनाशे निष्परिपन्थिनो गुरुत्वादेव पतनं न करसंयोगात्, असत्यपि करसंयोगे वेगक्षये स्वतोऽपि पतनदर्शनात्। न च फलादिपतनहेतुर्वाय्वादिसंयोग[3] एव व्यावर्त्यस्तत्रापि[4] प्रतिबन्धकवृन्तसंयोगापगमे गुरुत्वादेव पतनसंभवात्। वदन्ति च—संयोगाद्यभावे गुरुत्वात्पतनमिति चेत्; न। प्रतिबन्धकवृन्तसंयोगापगमो हि न वायुसंयोगादेव, विद्यमानाश्रयसंयोगस्य विभागैकनाश्यत्वात्; नापि गुरुत्वप्रयुक्तात्पतनकर्मणः, सति प्रतिबन्धके वृन्तसंयोगे गुरुत्वस्य पतनाजनकत्वात्; किन्तु विभागद्वारा पूर्वसंयोगविरोधिनः पवनसंयोगजात्पतनकर्मण एवेति युक्तं संयोगस्य पतनासमवायिकारणत्वमिति साधूक्त'मेकवृत्ती'ति। क्व तर्हि संयोगाद्यभावे गुरुत्वात् पतनमिति'? न्यङ्मुखकरतलाकलितमुक्तमुक्ताफलादावेवेति गृहाण। आद्यत्वेन चात्र पतनं विशेषणीयमतो नोत्तरपतनासमवायिकारणे वेगेऽतिव्याप्तिः। केचित्तु वेगः पतन-कारणमेव न भवति, भवति चेन्निमित्तमेव, नासमवायिकारणम्। असमवायिकारणं तु सर्वत्र जातिविशेषावच्छिन्नेष्वाद्यादिपतनेषु गुरुत्वमेवेति वदन्ति। केचित्तु पतनासाधारणं कारणमिति पाठमाश्रित्य पतनप्रागभावे साधारणासाधारणभेदभिन्नकारणताश्रयेऽतिव्याप्तिमाशङ्क्य साधारणभिन्नत्वमसाधारणत्वम्; न च प्रागभावोऽपि तत्त्वेन कार्यमात्रसाधारणोऽपि तत्तत्प्रागभावत्वेन साधारणभिन्न एव; एवमपि हि कारणताऽवश्यमाश्रयणीया, अन्यथा यत्किंचित्प्रागभावसत्त्वे जातमपि पुनर्जायेत; न हि कारणीभूततत्तत्क्षणविशेषाभावादेव कार्यानुदयोपपादनं युक्तिमत्, तथा सति दण्डादिसकलकारणविशेषोच्छेदप्रसङ्गात्, पाकजोत्पादस्थले प्रतिनियतप्रागभावकारणताया निर्णीतत्वाच्चेति वाच्यम्; अन्योन्याभावस्य व्याप्यवृत्तित्वेनात्यन्ताभाववदवच्छेदभेदेनावृत्तेरिति परिहृत्याप्यभ्युच्चयमाहुः। 'अग्रे वृक्षः कपिसंयोगी न मूले' इति प्रतीतिबलादन्योन्याभावस्यापि स्फुटमव्याप्यवृत्तित्वम्। 'सविशेषणे ही'त्यादिन्यायेन संयोगात्यन्ताभावमात्रावलम्बनत्वे तु 'घटः पटो न भवती'त्यादिप्रतीतीनामपि पटत्वाद्यत्यन्ताभावावलम्बनत्वस्य सुवचत्वेनान्योन्याभाव एवोच्छिद्येतेति कस्य व्याप्याव्याप्यवृत्तिविचारः स्यादिति? तन्न; घटत्ववतद्वृत्तिधर्मप्रकारकघटघटत्वप्रतियोगिज्ञान[5]वैचित्र्येण तज्जन्यज्ञाने विषयवैचित्र्यकल्पनात्। न हि 'घटः पटो न भवती'त्यत्र प्रकारीभवति पटत्वेऽपि प्रकारान्तरमवभासते, न चानवभासमाने तस्मिन्निःप्रकारकादपि प्रतियोगिज्ञाना-

---

1. प्रशस्तपाद-भाष्ये तु—
   'हिताहितप्राप्तिपरिहारसमर्थस्य व्यापारस्य हेतुः' प्रयत्न इति।
2. 'यावद्व्योम पततोऽप्यु०' A. 3. '०संयोगादिर्व्यावर्त्य०' A. 4. 'पतनम्' B. 5. '०ज्ञाने' A.

दभावप्रत्यक्षमुदेतुमलम् ; सत्सम्बन्धिकपदार्थप्रत्यक्षस्य संबन्धितावच्छेदकप्रकारकतद्धीसाध्यत्वात् । अतः पटत्वप्रकारकपटज्ञानात्तदभावोऽयमित्यवधारिते [1]प्रतियोग्यारोपहेतुकनिषेधधीविषयत्वेन [2]संसर्गाभावभिन्नत्वावगमादन्योन्याभाव एवायमित्यवगम्यते । तदिह क्वान्योन्याभावोच्छेदप्रसङ्गो येन 'सविशेषणे ही'त्यादिन्यायेन संयोगात्यन्ताभावावलम्बनतोदाहृत[3]प्रतीतेर्निषिध्येत । अस्ति चात्यन्ताभावप्रतियोगिताभिमतस्य संयोगस्य सम्बन्धितावच्छेदकप्रकारकं ज्ञानमिति न घटत्वादि-तुल्यताऽपीत्यलमनेन । अस्मिंश्च पक्षे 'एकवृत्ती'ति स्वरूपकथनम्, संयोगस्य कर्ममात्रसाधारण-त्वयैव व्यवच्छेदात् । अत एव वेगेऽतिव्याप्तिर्न, तस्य कर्ममात्रसाधारणत्वादिति आद्यत्व-विशेषणप्रक्षेपोऽप्ययुक्त इति द्रष्टव्यम् ॥

९४ । द्रवत्वशून्य इति । तद्भिन्न इत्यर्थः । एकेनैव भावप्रत्ययेन द्वितीयभावस्यापि लाभाद् द्रवत्वगतजातिशून्य इति वा । इदं च द्रवत्वेऽतिव्याप्तिवारणाय, स्निग्धादपि प्रति-बद्धद्रवत्वात्करकादेः संग्रहानुदयेन स्नेहस्येव द्रवत्वस्यापि संग्रहासाधारणकारणत्वात् । संग्रहः स्वारभ्यस्य धारणविकर्षणादिक्षमतासम्पादकः संयोगविशेषस्तत्कारणतामात्रं कालादेरपीति तद्व्यावृत्त्यर्थ'मसाधारणे'ति । दण्डादिव्यावृत्त्यै 'संग्रहे'ति । असाधारणत्वं साधारणभिन्नत्व-मेवेति न संग्रहप्रागभावेऽतिप्रसङ्गः । न चाव्यभिचारिणः सांसिद्धिकद्रवत्वादेव तदुत्पत्तेर्न स्नेहः संग्रहहेतुरित्यसम्भवो लक्षणस्येति वाच्यम्, अनुभवविरुद्धद्रवत्वाद्युत्कर्षप्रयोजकभावस्य[4] पिण्याक-चणकचूर्णादिप्रयुक्तचिक्कणतोत्कर्षेण संग्रहोत्कर्षस्य तयोः कार्यकारणभावाभावेऽसम्भवप्रसङ्गात् । 'पिण्याकादिचूर्ण एव स्नेहोऽस्तु, किं तद्व्यङ्ग्येन जलस्नेहेने'ति तु प्रतिनियतगुणव्यवस्थापनावसरे निराकरिष्यामः । तथाऽपि, 'जलस्नेहद्रवत्वयोः संग्रहहेतुत्वे या मूर्तक्रिया अदृष्टाद्वारकयद्व्यधि-करणगुणनिमित्ता, सा तत्समानाधिकरणगुणजन्या, स्पर्शवद्वेगवद्द्रव्याभिघातजक्रियावदि'ति व्याप्त्या जलसंयोगस्यापि तद्धेतुतावश्यम्भावात्संयोगिनो जलस्यापि असति बाधके संग्रहहेतुत्व-मिति तत्रातिव्याप्तिरिति चेत्, न ; तदुभयवैशिष्ट्याधारत्वेनाजहत्स्वार्थलक्षणया द्रवत्वतद्वृत्ति-जात्योर्लाभेन तदुभयशून्यत्वस्य द्रवत्वशून्यपदार्थत्वाज्जलस्य द्रवत्वाश्रयत्वादिति दिक् ॥

९५ । [5]स्वोत्पत्त्यवस्थापादक इति । स्वोत्पत्तिकालीनस्य स्वाश्रयस्य या कर्मज्ञानार्जव-शालितावस्था तस्याः पुनरसाधारणकारण[6]त्वमित्यर्थः । अत एवेश्वरेच्छादौ नातिप्रसङ्गः । स्वोत्पत्तिकालीनसंयोगितावस्थापादकं कर्म व्यावर्तयितुं 'गुण' इति । ननु स्वोत्पत्तिकालीना स्वाजन्या [7]स्वजनककर्मज्ञानार्जवावस्था कथं स्वापाद्या ? तज्जातीयस्यापादनविवक्षायां तु यद्यत्यन्तं साजात्यमभिमतं तदाऽनुभवावस्थामापादिकायां[8] भावनायामव्याप्तिः । यदि यथा-

1. '०रोपाहेतुक०' A. 2. 'संसर्गाभावे' A. 3. '०प्रतीतिर्नि०' A. 4. '०भाव-पिण्याक०' A. 5. 'संस्कारत्वजातिमान् संस्कारः' इति तर्कसंग्रहः । 'सामान्यगुणात्मविशेषगुणोभय-वृत्तिगुणत्वव्याप्यजातिमान्' संस्कारः इति तर्कसंग्रहटीकायां सिद्धान्तचन्द्रोदयाभिधायां श्रीकृष्णधूर्जटिदीक्षितः । 6. 'असाधारणं कारणं' A. 7. 'च' A. 8. '०ऽनुभवावस्थायां भावनाया०' A.

कथञ्चित्तदा जनकज्ञानसम्पन्नं गुणवत्तां प्रयत्नादिगुणजननेनेच्छादिकमप्यापादयतीति स्फुटैव तत्रातिव्याप्तिः। कर्मजे कर्मजनके संयोगे तु स्फुटतरैव। [1]यदीययदवस्थोत्पाद्यस्तत्र तदवस्थापादक इति विवक्षितेऽपि[1] * [2]प्राचीनरूपशालिनि वृत्तस्य भाविरूपादिकं तत्रैवाऽऽपादयतस्तेजःसंयोगस्याव्यावृत्तिरेव। एवं ज्ञानधारान्तर्गतज्ञानानामपि। अथ यद्रूपपुरस्कारेण यदवस्था स्वोत्पत्त्युपयोगिनी तत्पुरस्कारेण तत्र तदापादकत्वं विवक्षितम्? अनुभवावस्थाऽपि न तत्त्वेन भावनोत्पत्तावुपयुज्यते, किन्तु उपेक्षाभिन्नविशिष्टनिश्चयत्वेन ; सा चावस्था पुरस्कृततद्रूपा स्वाश्रये भावनया जन्यत एवेति नाव्याप्तिः[3] ; स्वाश्रयकर्मजसंयोगेन तत्रैव कर्मानापादनान्नातिव्याप्तिरिति ; तेजःसंयोगोत्पत्तौ तु, घटादे रूपवदवस्थाया अनुपयोग एवेति न दोषः। अत एवाऽऽहुः—"[4]यज्जातीयसमुत्पाद्यः' (तार्किकरक्षा०) इत्यादीति मतम्। तन्न ; शिलामभिहत्य परावृत्तेऽश्मखण्डादावनुभूयमानस्य कर्मणः स्वाश्रयकर्मजसंयोगजनितत्वेन तज्जनकसंयोगे तथाऽप्यतिव्याप्तिः। स्थितस्थापकस्य कारणगुणपूर्वकत्वेन [5]तदुत्पत्तावार्जवावस्थाया अनुपयोगाच्चेति चेत्, न ; अनुत्पाददशायामव्याप्ति[6]परिहाराय तज्जातीयत्वविवक्षाया आवश्यकत्वे स्वोत्पत्त्यवस्थापादकशब्देन[5] * वेगं भावनां वा विवक्षित्वा गुणपदसमभिव्याहारबलेन भावनावृत्तिगुणत्वसाक्षाद्व्याप्यजातिमान् संस्कार इति लक्षणात्। न च पौनरुक्त्यम्, जातिगर्भत्वेऽप्युपहितानुपहितभेदभिन्नतद्गर्भत्वेनादोषादित्यलमतिपल्लवेन ॥

९६। **सुखासाधारणकारणमिति।** सुखत्वावच्छिन्नकार्यतानिरूपितकारणताश्रय इत्यर्थः। [7]पारदार्यादिषु सुखमपि[7] * धर्मजमेवेति नासम्भवः। न च तथात्वे नरकफलत्वानुपपत्तिः, निषिद्धस्य पारदार्यस्यैवाधर्मद्वारा नरकजनकत्वेन तत्फलभूतस्य सुखस्यातत्फलकत्वात् ॥

९७। **दुःखासाधारणकारणमिति।** दुःखत्वावच्छिन्नकार्यतानिरूपितकारणताश्रय इत्यर्थः।

---

1. 'यदीया यदवस्था तत्र तदीयावस्थापादक-सजातीयविकल्पा इति विकल्पितेऽपि' A. 2. 'सजातीयत्वविकल्पाभ्यामुक्तदोषसादवस्थ्याच्चेति' A. 3. 'नातिव्याप्तिः' A.

4. 'यज्जातीयसमुत्पाद्यस्तज्जातीयस्य कारणम्।
स्वयं यस्तद्विजातीयः संस्कारः स गुणो मतः' ॥ पृ० १४७ ॥

इति तार्किकरक्षा।

अत्र स्वकृतटीकायां सारसंग्रहाभिधायाम्—

'स्वोत्पादकसजातीयस्योत्पादकः स्वयं च तद्विजातीयो गुणः संस्कार इति। यथा स्मृतिहेतुः संस्कारः, स ह्यनुभवज्ञानजन्यः स्मृतिज्ञानहेतुः, स्वयं न ज्ञानजातीयः। यथा वा वेगः कर्मजः कर्महेतुः, स्वयं कर्म न भवति। यथा स्थितिस्थापकः वेष्टनादिकर्मजन्यः, वेष्टनादिकर्मकारणम्, स्वयं च न कर्मरूपः' इति वरदराजः।

5. 'तदुत्पत्तावार्जवावस्थापादकशब्दे' A. 6. '०मतिव्याप्ति०' A. 7. 'पारदार्यादिसुख०' A.

अत्रापि प्रागुक्तन्यायेन सितासितसरित्सम्भेदे स्नानसम्भूतशीतवेदनाया अधर्मजत्वान्नासम्भव इति ज्ञेयम् ॥

९८। शब्द-लक्षणं रूपादि-लक्षणवद् व्याख्येयम् ॥

१००। व्यापकमात्रमिति। अपरनिवृत्त्यै 'व्यापके'ति। परापरनिवृत्त्यै 'मात्रमि'ति। ननु परस्य सत्तासामान्यस्य प्रमेयत्वादिव्याप्यत्वादसम्भवः? न च स्वभिन्नजात्यव्याप्यत्वं विवक्षितम्, परापरभावत्वाद्युपाधावतिव्याप्तेरिति चेत्, न; स्ववृत्तिसामान्यविभाजकोपाधिमदन्यूनवृत्तित्वस्य लक्षणत्वात्। तत्र सत्तावृत्तिः सामान्यविभाजकोपाधिर्जातित्वम्। तद्वदन्यूनवृत्तिरेव सत्तेति नासम्भवः। भावत्ववृत्तिश्च सामान्यविभाजकोपाधिरुपाधित्वम्[1]। तद्वत्प्रमेयत्वादिन्यूनवृत्त्येव भावत्वमिति नातिव्याप्तिरपि। प्रमेयत्वादिकं च स्ववृत्तिसामान्यविभाजकोपाध्युपाधित्ववदभिधेयत्वाद्यन्यूनवृत्त्येवेति नौपाधिकपरसामान्याव्याप्तिरपीति द्रष्टव्यम्। एवं स्ववृत्तिसामान्यविभाजकोपाधिमदनधिकवृत्तित्वं व्याप्यमात्रत्वम्। स्ववृत्तिसामान्यविभाजकोपाधिमन्न्यूनवृत्तित्वे सति तदधिकवृत्तित्वं व्याप्यव्यापकरूपत्वं क्रमेणोत्तरलक्षणयोर्द्रष्टव्यम् ॥

१०१। अनादिरिति। आकाशादिव्यावृत्त्यै 'सान्त' इति। घटादिव्यावृत्त्यै 'अनादि'रिति। नन्वनादित्वं प्रागभावाप्रतियोगित्वमेवेत्यात्माश्रयः। अनुत्पत्तिकत्वस्य तदर्थत्वेऽप्युत्पत्तेः प्रागभावनिरूप्यत्वेन तत्तादवस्थ्यम्। सान्तत्वं च ध्वंसप्रतियोगित्वम्। ध्वंसश्च सादिरनन्त इति प्रागभावगर्भ इत्यन्योन्याश्रयोऽपि। गन्धानाधारसमयानाधाराभावस्य च प्रागभावपदार्थत्वे महाप्रलयमनभ्युपगच्छतो मीमांसकादेर्विद्यमानप्रागभावप्रतियोगित्वावगाहिभविष्यद्व्यवहारानुपपत्तिः। गन्धान्तमात्रप्रलये मानाभावेन गन्धध्वंसोत्तरभाविप्रागभावेष्वव्याप्तिश्च। [2]समयस्य च कारणतामनन्तर्भाव्य निरूपयितुमशक्यत्वेन तदन्तर्गतप्रागभावापेक्षया चक्रकमपि। अत्राऽऽहुः—भविष्यत्पदासाधारणविषयत्वं प्रागभावत्वम्। ननु भविष्यत्पदप्रवृत्तिनिमित्तान्तर्गतप्रागभावत्वाज्ञाने[3] भविष्यत्पदप्रयोगस्यैवानुपपत्तिः; न चैवं प्रयत्नव्यवहारासाधारणं कारणं प्रयत्न इत्यादिलक्षणोच्छेदः, प्रयत्नत्वजातेरपि सद्भावेन तदुपजीवनप्रवृत्तस्य व्यवहारस्यापिलक्षणत्वसम्भवात्? प्रागभावत्वस्य चैतदतिरिक्तस्यानिर्वचनान्न प्रकृते तत्संभव इति चेत्, न; पूर्वपूर्वपदप्रयोगविषयत्वज्ञानादुत्तरोत्तरपदप्रयोगोपपत्तेः। न चाविषयत्वदशायाम् अव्याप्तिः, दशायास्तद्वैशिष्ट्यस्य वा अप्रागभावत्वेनालक्ष्यत्वात्, लक्ष्यस्य च प्रागभावस्य विषयत्वादेवाव्याप्त्यनवकाशात्। न हि तत्तत्कालीनविषयत्वं लक्षणं येन सा स्यात्। किं च, अव्याप्तिर्नाम भागासिद्धिरेव। न च किंचिदवच्छेदकावच्छिन्नपक्षावृत्त्या सा भवति, धूमरहितप्रदेशावच्छिन्ने पर्वते धूमावृत्त्या भागासिद्ध्यापत्तेः। एवमपि सा भवत्येवेत्यत एव धूम-

1. '०पाधिमत्त्वम्' A. 2. 'समवायस्य' A. 3. 'प्रागभावज्ञाने' (?) A.

वत्पर्वतत्वं पक्षतावच्छेदकमाहुरिति चेत्, न। निर्धूमपर्वतव्यक्त्यन्तरं व्यावर्तयितुं हि तत्, न तु तमेव देशकालविशेषावच्छिन्नम्, असामर्थ्यात्। धूमसंबन्धिपरं हि धूमवत्पदं धूमसंबन्धिभिन्नमेव व्यावर्तयति, न तु तमेव क्वचित्कदाचिद्धूमसंबन्धेनाप्युपपन्नधूमवद्व्यपदेशम्। पाकजरागदशायामश्यामेऽपि प्राचीनश्यामसंबन्धाभिसंबन्धिना श्यामोऽयं घट इति, मूलावच्छेदेन कपिसंयोगशून्येऽपि अग्रावच्छिन्नतत्संयोगाभिप्रायेण सामान्यतोऽयं वृक्षः कपिसंयोगीति व्यवहारदर्शनात्। अतो यस्यार्वाग्भागे परभागे वा धूमसंबन्ध आसीदस्ति भविष्यति वा, स सर्वः सर्वदा धूमवानेवेति न तेन तस्य व्यवच्छेदः, किन्तु धूमवद्भिन्नस्यैवेति, अवच्छेदकभेदेनावृत्त्याऽपि भवन्ती प्राचीना भागासिद्धिर्दुरुद्धरा[1] प्रसज्येत। तस्मान्नैतादृश[2]विषये भागासिद्धिः [3]पक्षतावच्छेदकव्यापकताया अविघाते[3]* भागासिद्धेरकिंचित्करत्वाच्च। एतेन 'गुणवद्द्रव्यमि'त्यादीनि लक्षणान्यपि यथाश्रुतानि स्वस्थानि, उत्पत्ति[4]कालावच्छेदेन गुणावृत्तावपि संयोगित्वस्येव गुणवत्त्वस्य द्रव्यत्वव्यापकताया अविघातात्, द्रव्यत्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वात्तस्येति। प्रागभावत्वमखण्डोपाधिरेवेत्यपि कश्चित्। सादिरनन्त इति। स्वप्रागभावानवच्छिन्नकालत्वव्यापक इत्यर्थः। तेनान्तो ध्वंस एवेत्यात्माश्रयशङ्काऽनवकाशा। प्रागभावलक्षणं चानन्तर्भूतध्वंसमिति नान्योन्याश्रयोऽपि। न च नित्येऽनित्ये वा भावेऽतिव्याप्तिः, पूर्वस्य प्रागभावासिद्धेरुत्तरस्य च ध्वंसदशायामसत्त्वात्। अत्यन्ताभावलक्षणे ध्वंसं व्यावर्तयितुमनादिरिति; प्रागभावमनन्तमिति; [5]नित्यभावमभाव इति; अन्योन्याभावं च संसर्गेति। न च संसर्गान्योन्याभावेऽतिव्याप्तिः, अधिकरणे प्रतियोग्यारोपहेतुकनिषेधधीविषयाभावत्वस्य संसर्गाभावपदार्थत्वात्। [6]तादात्म्यनिषेध इति। प्रतियोगितावच्छेदको धर्मस्तादात्म्यम्, ज्ञानयोर्जन्यजनकभावस्य ज्ञेययोरारोपात्। 'धूमाद्वह्निमानि'तिवत् उभयत्र ज्ञानलक्षणया षष्ठीतत्पुरुषमुपपाद्य अधिकरणे प्रतियोगितावच्छेदकारोपहेतुकनिषेधधीविषयत्वमेव तदर्थोऽवगन्तव्यः। तेन तादात्म्यात्यन्ताभावे नातिव्याप्तिरिति ध्येयम्॥

१०२। [7]नित्यत्वं ध्वंसाप्रतियोगित्वम्। तेन यथाश्रुते बुद्ध्यादिध्वंसवत्यात्मादौ नाव्याप्तिः। अनित्यत्वं ध्वंसप्रतियोगित्वम्। तेन तत्रैव नातिव्याप्तिः॥

१०३। निरवयवः क्रियावानिति। अनारब्धः समवायेन क्रियावानित्यर्थः। तेन न[8] द्व्यणुकाद्यवयवानिष्क्रान्ते परमाणावव्याप्तिर्यथाश्रुते अवयवानारभ्यत्वस्य तदर्थत्वे अवयववैयर्थ्यं च निरवकाशम्। काल-व्यावृत्त्यै 'समवायेने'ति। आकाशादि-व्यावृत्त्यै 'क्रियावानि'ति।

---

1. '०दुर्निवारा' A. 2. '०तादृशि विषयभागा०' A. 3. 'पक्षतावच्छेदकव्यापकताया अविघाते' नास्ति A. 4. '०कालावच्छिन्ने' A. 5. 'नित्यभावं वारयितुम०' A. 6. 'त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकः अत्यन्ताभावः। तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकः अन्योन्याभावः' इति तर्कसंग्रहः। 7. वस्तुतस्तु, नित्यत्वं 'प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम्'। 8. 'न' नास्ति A.

१०४। प्रागविभक्तमपि परमाणुलक्षणप्रविष्टमवयवं लक्षयति—द्रव्येति। गगनादि-व्यावृत्त्यै 'द्रव्ये'ति। संयोगादि-व्यावृत्त्यै 'समवायी'ति। कारण-पदं प्रामादिकम् ॥

१०५। प्रागभाववदिति। प्रागभावप्रतियोगीत्यर्थः। तेन नाऽऽत्मादावतिव्याप्तिः। ( उपोद्घातेनान्त्यावयविनं लक्षयति—द्रव्यानारम्भकमिति। द्रव्यसमवायितावच्छेदकवद्भिन्न-मित्यर्थः। तत्राद्यमसंभवव्यावृत्त्यै; द्वितीयं [1]निमित्तदण्डाद्यव्याप्ति-व्यावृत्त्यै; तृतीयमनारब्ध-द्रव्यविनष्टतन्त्वादि-व्यावृत्त्यै; तुरीयमनुत्पन्नस्पर्शतन्त्वादि-निवृत्त्यै; तदा तस्य तद्राहित्येऽप्यन्यो-न्याभावस्य व्याप्यवृत्तितया तद्भेदासंभवात्। वस्तुतस्तु तत्तद्द्रव्य[2]समवायितावच्छेदकान्युत्पत्ति[3]-विशिष्टानि तन्त्वादीन्येव द्रव्यसमवायिकारणतावच्छेदकत्वेनानुगतीकृत्य तदत्यन्ताभाव एव लक्षणं वा वाच्यम्। अन्यथा, स्पर्शवदनन्त्यावयवित्वस्यैव सामान्यतो द्रव्य[4]समवायितावच्छेदक-स्याभिधानेऽन्योन्याश्रयप्रसङ्गात्। गगनादिव्यावृत्त्यै 'कार्ये'ति। कार्यगुणादि-व्यावृत्त्यै 'द्रव्य'मिति ॥ )

१०६। यदर्थमन्त्यावयविलक्षणं तदाह—[5]भोगायतनमिति। भोगायतनवृत्त्यन्त्यावयविमात्र-वृत्तिजातिमदित्यर्थः, अतो न घटादावतिव्याप्तिर्न वा क्षुपुसशरीरेऽव्याप्तिः; न चाहल्या-शरीरवृत्तिप्रतिमात्वजातिमत्त्वात् प्रतिमास्वतिव्याप्तिः, शिलावस्थायां भोगे मानाभावेन प्रतिमा-त्वस्य भोगायतनवृत्तित्वासिद्धेः; न चेशस्य नृसिंहादिशरीरे भोगानवच्छेदकेऽव्याप्तिः, तदुपा-सनालब्धतदाकारेषु योगिषु तज्जातीयस्यापि [6]भोगावच्छेदकत्वेनोपपत्तेः। करादि-निवृत्त्यै 'अन्त्या-वयवी'ति। न च राहुमस्तकेऽनन्त्यावयविन्यव्याप्तिः, तस्याशरीरत्वेनालक्ष्यत्वात्। यद्यपि भोगपदार्थान्तर्गतसाक्षात्कारमात्रगर्भशरीरलक्षणसंभवे भोगपदोपादानं तल्लक्षणाभिधानं चायुक्तम्, तथाऽपि वृद्धप्रसिद्धलक्षणानुगमनायैव तदुपादानम्।

१०७। स्वसमवेतेति। घटादिसाक्षात्कार-व्यावृत्त्यै 'सुखदुःखान्यतरे'ति। तत्राप्येकैक-मात्रोपादाने एकैकसाक्षात्कारेऽव्याप्तिः, युगपदुभयोपादाने चासंभवः, अतः 'अन्यतरे'ति। सुखान्यत्वे सति यद्दुःखान्यत् तदन्यत्वमन्यतरत्वमिति नाननुगमः। विशिष्टभावस्य चाखण्ड-त्वान्नाव्याप्तिवारकविशेषणवैयर्थ्यम्। ईश्वरसाक्षात्कारं व्यावर्तयितुं 'स्वसमवेते'ति। यद्वृत्तिः साक्षात्कारो भोगत्वेन लक्ष्यस्तत्समवेतसुखदुःखान्यतरविषयसाक्षात्कार इत्यर्थः। भाविसुख-दुःखादिगोचरसामान्यलक्षणादिजन्यसाक्षात्कारव्यावृत्त्यै समानकालीनत्वमपि विशेषणमत्र द्रष्टव्यम्। यदा तु 'कर्तृकरणे कृता (बहुलम्)' [पा० २-१-३२] इति तृतीयातत्पुरुषो विवक्ष्यते तदा यथाश्रुतं स्वसमवेतेत्यपि निरर्थकमेव, पुरुषान्तरीयसुखादिसाक्षात्कारस्य स्वीयभिन्नकालसाक्षात्-कारस्य च सुखादिविषयाजन्यत्वात्। अत एव स्वपदार्थखण्डनमप्यनवकाशमिति द्रष्टव्यम् ॥

1. '०दण्डाद्यतिव्याप्ति०' A. 2. '०समवायिकारणता०' A. 3. '०न्युत्पत्तिशिष्टानि' A. 4. '०समवायिकारणता०'। 5. तथा हि—'चेष्टेन्द्रियार्थाश्रयः शरीरम्' (न्याय० सू० १-१-११)। चेष्टा—हिताहितप्राप्तिपरिहारार्था क्रिया। 6. 'भोगावच्छेदकत्वोपपत्तेः। न च शरीरत्वजात्यनभ्युप-गमबीजपृथिवीत्वादिसङ्करतौल्यादजातित्वं नृसिंहत्वादेः, तच्छरीरस्य तैजसमात्रत्वात्' A.

१०८ ।[1] यद्यप्यायतनपदस्याधिकरणार्थत्वेऽप्यनन्त्यावयवित्वादेव नाऽस्मादावतिव्याप्तिर्न वाऽसंभवः, अवच्छेदकस्य शरीरादेरपि वनादेः सिंहादिनादमिव भोगं प्रत्यधिकरणत्वात्, तथाऽपि गुणस्य सतो भोगस्याधिकरणमौत्सर्गिकं समवाय्येव बुद्धिमध्यारोहेदित्यधिकरणतावच्छेदकत्वं तदर्थ इति स्पष्टयति—यदवच्छिन्न इति। भोग इति। प्रकृतान्वयबललब्धानुवादः। अतो न शरीर-लक्षणे भोगपदवैयर्थ्यमाशङ्कनीयम् ॥

१०९। एतावता शरीर-लक्षणं निर्वाह्येन्द्रिय-लक्षणमाह—साक्षात्कारीति। यद्यपि [1]साक्षात्कारत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं न तदर्थः, साक्षात्त्वस्य जन्याजन्यवृत्तित्वेन कार्यतानवच्छेदकत्वात्, जन्यसाक्षात्कारगर्भमपि तन्न तथा कारणतावच्छेदकस्येन्द्रियत्वस्य [2]साक्षात्कारणतागर्भत्वेनाऽऽत्माश्रयप्रसङ्गात्; तथाऽपि साक्षात्कारमात्रवृत्तिधर्मावच्छिन्नकार्यता-निरूपितकारणताश्रयव्यापारवदतीन्द्रियमिन्द्रियमिति तदर्थो द्रष्टव्यः[3]। अत्र चेन्द्रियाधिष्ठान-व्यावृत्त्यै 'अतीन्द्रिय'मिति। एवं च तत एव मननादिप्रयोज्यजातिविशेषावच्छिन्नचरम-साक्षात्कारवृत्तिकार्यतानिरूपितकारणताश्रयव्यापारवन्मननादिव्यावृत्तिः। इन्द्रियसन्निकर्षादिनिवृत्त्यै '[4]व्यापारवदि'ति ॥

११०। ज्ञायमानतयेति। यत्साक्षात्कारो भुज्यमानसुखदुःखहेतुरित्यर्थः। विषयतया साक्षात्कारवृत्तिसुखादिहेतुतावच्छेदक इति यावत्। तेन स्वाप्नसंभोगज्ञानादपि सुखोत्पत्तेर्व्या-सङ्गादिना तदज्ञाने चानुत्पत्तेस्तज्ज्ञानमेव हेतुः, तदपि च सुख एव न तत्साक्षात्कारे, सति सुखे स्वापरोक्षज्ञानहेतौ विषयज्ञानविलम्बेन साक्षात्कारविलम्बाभावात्। असति तस्मिन् तदभावादेव कार्यविलम्बे विषयज्ञानविलम्बस्याकिञ्चित्करत्वादित्यपास्तम्। कामुकशरीरयो-रन्योन्यं विषयत्वेऽप्यदोषः, 'उपधेयसंकरेऽप्युपाधेरसंकरात्' (तत्त्वचिन्तामणि० अनुमानखण्ड० ख०२ पृ० ९२६) इति द्रष्टव्यम् ॥

१११। भौमादि-लक्षणानि स्पष्टानि ॥

११२। सकलकारणेति। एतन्मते कार्याव्यवहितपूर्वक्षण उत्पत्तिक्षण इति ज्ञेयम् ॥

११३। यौगपद्यलक्षणप्रविष्टतया क्षणं लक्षयति—विभागानुत्पाद्येति। विभागानुत्पाद्यः कर्मज इत्यर्थः। तथा च तत्कर्मतज्जन्यविभागप्रागभावावच्छिन्नकालः क्षण इति लक्षणं पर्यवस्यति। तत्र च [5]क्षणद्वयेऽतिव्याप्तिनिवृत्त्यै 'तज्जन्ये'त्यादि। दण्डादावतिव्याप्तिनिवृत्त्यै 'कर्मे'ति। यत्किञ्चित्कर्मजविभागप्रागभावयत्किञ्चित्कर्मावच्छिन्ने क्षणद्वयेऽतिव्याप्तिनिवृत्त्यै 'तदि'ति। नन्वी-दृशकर्मावच्छिन्नकालस्य क्षणत्वे तदवस्थायिनो विश्वस्यैव क्षणिकताप्रसङ्गस्तदवस्थायितादि-

1. 'साक्षात्त्वावच्छिन्न०' A. 2. 'साक्षात्कारकारणता०' A. 3. 'द्रष्टव्यः। अत्र च साक्षात्त्व-साक्षाद्व्याप्यायाश्चाक्षुषत्वजातेरुपादानम्' A. 4. 'जात्यपेक्षमेव साक्षाद्व्याप्यत्वमिह विवक्षितम्। अन्यथा साक्षात्त्वव्याप्यतया वा चाक्षुषत्वादेः साक्षात्त्वमात्रव्याप्यत्वाभावादसम्भवापत्तेरिति दर्शयितुं जातिपदम्' A. 5. 'क्षणद्वयेऽव्याप्ति०' A.

रिक्तायाः क्षणिकताया अभावादतोऽन्य एव कश्चिद्वस्तुमात्रानधिकरणं कालोपाधिः क्षणो वाच्यः, यदनवस्थायित्वाद्विश्वस्याक्षणिकतासिद्धान्तसंरक्षणमित्यत आह—तन्मात्रेति। तथा च मात्रार्थव्यतिरेकादेव विश्वस्याक्षणिकतानिर्वाह इति न क्षणलक्षणान्तरानुसरणमित्यर्थः ॥

११६। तच्च प्राक्सम्बद्धस्वाभावविरहरूपत्वमिति। प्राक्सम्बद्धः स्वाभावः प्रागभावस्तद्विरहस्तत्संसर्गाभावः, स च प्रागभावस्य प्रागभावाभावात्प्रध्वंसोऽत्यन्ताभावश्च, तदन्यतररूपत्वमित्यर्थः। एवं च नित्यानित्योभयवर्तमानत्वं संगृहीतं भवति, अनित्यानां प्रागभावप्रध्वंसरूपत्वात्, नित्यानां च तदत्यन्ताभावरूपत्वादिति वृद्धाः। ननु प्राक्सम्बद्धः स्वाभावः स्वप्रागभावः प्रागभावमात्रं वा विवक्षितम्? नाद्यः, नित्यवर्त्तमानतायामव्याप्तेर्नित्यानां प्रागभावाप्रसिद्धेः। न द्वितीयः, अभावप्रतियोगिकाभावान्तरानभ्युपगमेन बुद्ध्यादिप्रागभावात्यन्ताभावस्य घटादिरूपत्वेनानुत्पन्नस्यापि घटादेर्वर्तमानतापत्तेः। न च प्रागभावात्यन्ताभावरूपो घट एव नास्तीति क्व वर्तमानताप्रसङ्ग इति वाच्यम्, तथा सत्यभावरूपतामात्रस्यैव तथात्वसंभवे शेषवैयर्थ्यप्रसङ्गाद् इत्यरुचेर्लक्षणान्तरमाह—स्वकार्येति, स्वकार्यप्रागभावसमयसम्बन्धित्वमित्यर्थः। तेन रूपादेः स्वकार्यप्रागभावासम्बन्धित्वेऽपि तत्समयवृत्तित्वान्न तद्वर्तमानतायामव्याप्तिः। वस्तुतो विषयविषयिभावेन ज्ञानादिमति रूपादौ तत्प्रागभावोऽपि न दुर्लभः, तस्य प्रतियोगिसमवायिमात्र[1]देशतानियमादिति ध्येयम्। न च महाप्रलये प्रागभावाभावेन तदा नित्यानामप्यवर्तमानतापत्तिः, तदत्यन्ताभावानधिकरणत्वस्य लक्षणार्थत्वात्। न चाजनकपारिमाण्डल्यादिकार्याप्रसिद्ध्या तद्वर्तमानतायामव्याप्तिः, योगिज्ञानस्य विषयजन्यताश्रयेण तस्यापि ज्ञानादिजनकत्वात्। यद्यपि [2]स्वसमयसम्बन्धित्वं प्रागभावसमयसम्बन्धित्वात्यन्ताभावानधिकरणत्वं वा समयसम्बन्धित्वमेव वा वर्तमानत्वलक्षणं भवति, तथाऽपि स्वकार्यप्रागभावसमयसम्बन्धित्वात्यन्ताभावानधिकरणत्वस्य विशिष्टस्याभावे लक्षणीकृते नास्ति वैयर्थ्यमखण्डत्वादिति हृदयम् ॥

११७। नित्यज्ञानादिकमीश्वरलक्षणं स्पष्टत्वादुपेक्ष्य क्षेत्रज्ञं लक्षयति—शरीरसम्बन्धेनेति। तृतीयार्थमात्रं पूर्वपदे विवक्षितम्। तेन सकरणज्ञानत्वं लक्षणम्; जन्यज्ञानवत्त्वमिति यावत् ॥

११८। एकत्वाणुत्वादिलक्षणेषु द्वितीयभावपरनिर्देशान्नासंभवः ॥

११९। कर्मजसंयोगादिलक्षणेषु असमवायिपदं स्वरूपानुवादो न लक्षणान्तर्गतम्। ननु कर्मजस्यापि ईश्वरप्रयत्नादृष्टादिव्यधिकरणगुणनिमित्तत्वे तत्समानाधिकरणगुणजन्यत्वावश्यंभावेन [3]तत्संयोगजन्यत्वात् तस्य चासमवायिलक्षणाक्रान्तत्वात् संयोगासमवायिकारणकत्वमिति

---

1. '०देशतानियमाभावा०' A. 2. 'स्वसमवायसम्बन्धित्व' A. 3. 'तत्संयोगयोगजन्यत्वात्' A.

कथं तयोरसङ्करः ? विजातीयानेकासमवायिकारणत्वमेकस्य विरुद्धमपि युक्तिबलादापाद्यमानं न विरोधमात्राद् बिभेतीति चेत्; सत्यम्। तदप्यसमवायि भवत्येव किन्तु साधारणम्। इह चासाधारणासमवायिकारणत्वपुरस्कारेण विभाग इति न सङ्करः॥

१२१। भावनासाधारणकारण(क)मिति। नन्वत्र न भावनामात्रजन्यत्वं तस्वमभिमतमप्रसिद्धेः। इन्द्रियासहकृतभावनाजन्यत्वमित्यपि न, मनसाऽपीन्द्रियेण स्मृतिजननात्। नापीन्द्रियत्वावच्छिन्नकारणत्वासमवहितभावनाजन्यत्वम्, प्रत्यभिज्ञानेऽपीन्द्रियत्वेन कारणत्वाभावादतिव्याप्तेः। न च तदभावेऽसाक्षात्कारत्वापत्तिः। इन्द्रियत्वस्य साक्षात्कारकारणतागर्भत्वेन साक्षात्त्वावच्छिन्नकार्ये इन्द्रियत्वेन कारणत्वादिति चेत्, अत्राऽऽहुः—अनुभवसामग्र्यसहकृतभावनाजन्यत्वं लक्षणार्थः। न हि स घट इति ज्ञानकाले तदनुभवसामग्री तत्सन्निकर्षघटिताऽस्ति। संस्कारश्च न तत्र सन्निकर्षः, घटं साक्षात्करोमीत्यनुव्यवसायाभावेन तस्य तथात्वकल्पने मानाभावात्, प्रत्यभिज्ञाने च तथानुव्यवसायसद्भावेन तस्य तथात्वकल्पनादिति॥

१२२। तत्त्वानुभव इति। यदनवच्छेदेन यो यत्र यत्संबन्धस्तदनवच्छेदेन तत्संबन्धपुरस्कारेण तत्र विशेष्ये तत्प्रकारकोऽनुभव इत्यर्थः। अत्र च मूलानवच्छेदेन कपिसंयोगवद्वृक्षविशेष्यके मूले वृक्षः कपिसंयोगीति भ्रमेऽतिव्याप्तिनिरासाय 'यदनवच्छेदेन तदनवच्छेदेने'ति। कपिसंयोगवद्वृक्षनिष्ठकपिसंयोगानवच्छेदकमूलानवच्छेदेन कप्यसंयुक्तवृक्षविशेष्यके कपिसंयोगभ्रमेऽतिव्याप्तिनिरासाय 'यत्र तत्रे'ति। विषयतया ज्ञानसम्बन्धिनि घटे समवायपुरस्कारेण ज्ञानवत्ताभ्रमेऽतिव्याप्तिवारणाय 'यः सम्बन्धस्तत्सम्बन्धपुरस्कारेणे'ति। किञ्चिद् विशेषणसम्बद्धविशेष्यकासम्बद्धविशेषणकभ्रमव्यावृत्त्यै 'यत्सम्बन्धस्तत्प्रकारक' इति। स्मृतिं निरसितुमनुभव इति संक्षेपः। किन्त्वेवं प्रागुक्तो निर्विकल्पकस्य प्रमान्तर्भावोऽपि विरुध्येत, तस्य निःप्रकारकत्वात्। तस्माद्विशेष्यतावच्छेदकधर्मावच्छिन्नात्यन्ताभावप्रतियोग्यप्रकारकोऽनुभव इति ग्रन्थकर्तुर्लक्षणमभिमतम्।

'अतत्त्वानुभव[1] इति। यदवच्छिन्ने यत्र येन संबन्धेन यन्नास्ति तदवच्छिन्ने तत्र तेन संबन्धेन तत्प्रकारकोऽनुभवो भ्रम इत्यर्थः। वृक्षः कपिसंयोगीति प्रमां व्यावर्तयितुं 'यदवच्छिन्ने तदवच्छिन्न' इति। न चात्र वृक्षत्वं संयोगनास्तितावच्छेदकं किन्तु मूलादि, तदवच्छिन्नतद्विशेष्यका च तत्प्रतीतिर्भ्रम एवेति नातिव्याप्तिः। घटस्य ज्ञानमित्यादिप्रमां व्यवच्छेत्तुं 'येन संबन्धेन तेन संबन्धेने'ति। [2]संबन्धप्रकारकप्रतीतिं व्यावर्तयितुं 'यन्नास्ति तत्प्रकारक' इति। अनवधारणमिति। अवधारणत्वरहितमित्यर्थः, तेन व्याप्यवृत्तेरन्योन्याभावस्यालक्षणार्थत्वान्न कश्चिद् दोषः। एकस्यापि ज्ञानांशभेदेन संशयत्वनिश्चयत्वयोरविरोधः। विपर्ययलक्षणे संशयसत्यज्ञाननिवृत्त्यै क्रमेण विशेषणे। अज्ञायमानकरणेति। नञः समस्तेन

1. 'अतत्त्वानुभव' इति टीकाकृत्सम्मतः पाठः, मूले तु 'अतत्त्वज्ञानम्' इति। 2. 'सम्बद्ध०' B.

पदेनान्वयान्नेश्वरप्रमायामव्याप्तिः। नन्वनुमितावतिव्याप्तिः[1], अज्ञायमानलिङ्गज्ञानकरणत्वात्? न च लिङ्गकरणतापक्षाश्रयणाददोषः, तच्च व्याप्तिपक्षधर्मताविशिष्टलिङ्गज्ञानमित्युत्तरग्रन्थविरोधादिति चेन्न; 'सविशेषणे ही'ति न्यायेन ज्ञानकरणाजन्यत्वस्यैव विवक्षितत्वात्। तस्यापि च निःकृष्यमाणस्यानुभवत्वसाक्षाद्व्याप्यज्ञानकरणप्रयोज्यजातिशून्यतत्त्वज्ञानत्वे[2] पर्यवसानात् न मननादिकरणके साक्षात्कारादावव्याप्तिः।

ज्ञायमानकरणेति। अनुभवत्वसाक्षाद्व्याप्यज्ञानकरणप्रयोज्यजातिमत्तत्त्वज्ञानमित्यर्थः। तेन न मननविशेषदर्शनादिप्रयोज्यजातिविशेषवतोरात्मसाक्षात्कारसंशयोत्तरप्रत्यक्षयोरतिव्याप्तिः॥

१२३। प्रसङ्गात् [3]प्रमाणलक्षणमाह—'प्रमाऽयोगव्यवच्छिन्नमि'ति। प्रमासंबन्धमात्रं विषयादिसाधारणमित्ययोगव्यवच्छिन्नमिति; व्याप्तमित्यर्थः। नन्वीश्वरप्रमाव्याप्तत्वात् सर्वत्रातिव्याप्तिः? न च जन्यप्रमा विवक्षिता, तथाऽपि सुखादावतिव्याप्तेः, इन्द्रियलिङ्गपरामर्शयोः प्रमाव्याप्तत्वाभावादव्याप्तेश्च। न च स्वव्यापकप्रमासाधनाश्रययोरन्यतरस्य लक्षणत्वान्नातिव्याप्तिः, इन्द्रियलिङ्गपरामर्शयोश्च प्रामाण्यानभ्युपगमान्नाव्याप्तिरपीति वाच्यम्; 'तच्चेश्वरघ्राणरसने'त्यग्रिमग्रन्थेन स्फुटमभिहितस्येन्द्रियप्रामाण्यस्य त्यागप्रसङ्गात्, सुखादिव्यावृत्तस्य व्यापारगर्भसाधनत्वस्येन्द्रियसन्निकर्षादौ दुर्वचत्वाच्च, स्वरूपेण प्रमाव्याप्तेः सहकारिसाहित्यावच्छेदेन च तद्व्याप्तेः [5]सकलसाधारण्येन विना विनिगमकमहमेव प्रमाणमिति प्रामाण्ये तेषामन्योन्यमुन्मत्तकेलिप्रसङ्गाच्च। एतेन विशेषलक्षणे व्याख्याते। अत्राहुः—'अनुभवत्वसाक्षाद्व्याप्यैकजातीयसकलजन्यमात्रवृत्तिकार्यतानिरूपितकारणताश्रयप्रमाव्यापारकस्वव्यापकज्ञानाश्रयान्यतरत्वं' ग्रन्थकृदभिमतं तल्लक्षणम्। अयमस्यार्थः—अनुभवत्वस्य साक्षाद्व्याप्या एका या जातिः साक्षात्त्वम् अनुमितित्वं वा तद्वन्ति यावन्ति जन्यानि तेष्वेव [6]वर्तमाना या कार्यता तया निरूपितायाः[6] * कारणताया आश्रयः प्रमासंबन्धी व्यापारो यस्य तच्च स्वव्यापकस्य ज्ञानस्याऽऽश्रयश्च तयोरन्यतरत्वं प्रमाणत्वमिति। अत्र च 'स्वव्यापके'त्यादिकमीश्वरसंग्रहाय; ततः पूर्वं सर्वं करणप्रामाण्यसंग्रहायेति स्थूलविभागः। तत्रापि ज्ञानाश्रयत्वमस्मदादिसाधारणमिति 'स्वव्यापके'ति। न च यदेश्वरस्तदा तत् ज्ञानमितिवद् यदा वयं तदाऽस्मज्ज्ञानमिति

1. '०तिप्रसङ्गः' A. 2. '०जातिशून्यत्वे' A. 3. 'प्रमाणलक्षणान्याह' A.

4. 'साधनाश्रययोरन्यतरत्वे सति प्रमाऽयोगव्यवच्छिन्नं प्रमाणम्' इत्यर्थः। 'प्रमायाः करणं प्रमाणम्'। 'फलायोगव्यवच्छिन्नं कारणं करणम्'। 'व्यापारवदसाधारणं कारणं करणं' वा। 'तज्जन्यत्वे सति तज्जन्यजनको व्यापारः'। अतः 'अनुभवत्व······स्वव्यापकज्ञानाश्रयान्यतरत्वम्' (पदार्थचन्द्रिका) इति प्रमाणलक्षणम्। 'प्रमायाः व्यापारवदसाधारणं कारणं नित्यज्ञानाश्रयो वा प्रमाणम्' इति निष्कर्षः। तथा हि—

'यद्यपि इन्द्रियार्थसन्निकर्ष एव प्रमाव्याप्तोऽस्ति, इन्द्रिये सत्यपि सुप्तावस्थादौ प्रमाया अनुत्पादात्, तथाऽपि तस्य इन्द्रियार्थसन्निकर्षस्य आश्रयभूतत्वात् इन्द्रियमेव प्रमाणत्वेनोक्तमाश्रयाश्रयिणोरभेदोपचारात्' इति जिनवर्द्धनः।

5. 'सकलतद्धेतुसाधारण्येन' A. 6. 'वर्तमानायाः कार्यतानिरूपितायाः' A.

व्यापकताऽस्मदादिज्ञानस्य यस्य चेशज्ञानस्यास्मदादिव्यापकता न तदाश्रयत्वमस्माकमिति नातिव्याप्तिः। सन्निकर्षव्यावृत्त्यै 'व्यापारे'ति। शरीरात्मादिव्यावृत्त्यै 'मात्रे'ति। असंभवव्यावृत्त्यै 'जन्ये'ति। आलोकव्यावृत्त्यै 'सकले'ति। कारणमात्रेऽतिप्रसङ्गनिवृत्त्यै 'अनुभवजातीये'ति। असंभवव्यावृत्त्यै 'व्याप्ये'ति। '[1]मननप्रयोज्यजातिमादाय'* मननव्यावृत्त्यै 'साक्षादि'ति। असम्भवान्तरव्यावृत्त्यर्थ'मेके'ति। न च साधनाश्रययोः परस्परमव्याप्तिपरिहाराय विशेषणोपादानवैयर्थ्यम्, अखण्डाभावस्यान्यतरत्वस्यैतावता विनाऽशक्यनिरूपणत्वादिति।

प्रत्यक्षप्रमेति। जन्यप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितकारणताश्रय[2]प्रमाव्यापारकत्वव्यापकसाक्षात्काराश्रयान्यतरदित्यर्थः॥

१२४। अनुमितिप्रमाऽयोगेति। अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयप्रमा[3]-व्यापारकत्वमित्यर्थः। अतो नासंभवो 'न वा'[4]* शरीरात्मादावतिप्रसङ्गः। व्यापारपदं तर्केऽतिव्याप्तिवारणाय, इन्द्रियकरणतास्वरसेन व्यापारवतः करणत्वसूचनाल्लिङ्गपरामर्शस्य च करणस्य व्यापारान्तरानिरूपणात्तर्कस्यैव तद्व्यापारत्वात्। न च साध्याभावशङ्काया लिङ्गपरामर्शात्मना विशेषदर्शनेनैव निरासादन्तरा तर्कावतारे मानाभावः, स्वारसिकसाध्याभावशङ्काया विशेषदर्शनादुच्छेदेऽपि तदप्यभिभूय भवन्त्या विरोधिप्रमाणसत्सद्भावशङ्कोत्थापितायाः साध्यविरहशङ्कायास्तेनैवानुच्छेदात्, स्वारसिकार्थनिश्चयेन ज्ञानाप्रामाण्यशङ्काहितार्थसंशयानुच्छेदवत्; अतस्तन्निवृत्तये विषयपरिशोधकतर्कावतारस्यावश्यकत्वात् (?)। तदुक्तमाचार्यैः—"विरोधिप्रमाणसद्सद्भावशङ्कायां तु मुहूर्तमनुमितौ विलम्बन्तेऽनुमातार" इति। व्याप्तिज्ञानं तत्समानप्रकारकं पक्षधर्मताज्ञानं चानुमितिहेतुरिति प्राभाकरमतानभिमतिं सूचयितुं तत्स्वरूपमाह—तच्च [5]व्याप्तिपक्षधर्मताविशिष्टलिङ्गज्ञानमिति। प्रकृतहेतुगोचर[6]पक्षावृत्तिव्यभिचारज्ञानविरोधिप्रकारेण व्याप्तिपक्षधर्मताविषयज्ञानमित्यर्थः। तेन व्याप्तिपक्षधर्मताविषयत्वमात्राभिधाने प्रमेयत्वादिना तद्विषयकज्ञानेऽतिप्रसङ्गः। तदुभयप्रकारत्वाभिधाने तु विशकलितव्यभिचाराभाव[7]सहचारगोचरव्याप्तिज्ञाने व्याप्यधूमादिप्रकारकतया पक्षधर्मत्वाप्रकारके वह्निव्याप्यधूमवानयमित्यादिज्ञाने [8]चाप्रसङ्ग इत्यादिदूषणमलग्नकं द्रष्टव्यम्। [9]अत्र मनोलिङ्गव्याप्तिज्ञानकरणतानिराकरणमन्यतोऽवगन्तव्यम्[9] *॥

१२५। [10]व्याप्तिश्चेति। अत्रोपाध्यभावविशिष्टः सम्बन्ध इति लक्षणम्। इतरत्तन्निरूपक-

---

1. 'मनन...आदाय' नास्ति A. 2. '॰प्रमाव्यापारक॰' नास्ति A. 3. 'प्रमा' नास्ति A. 4. 'न वा' नास्ति A. 5. व्याप्तिश्च पक्षधर्मता च ताभ्यां विशिष्टं लिङ्गं तस्य ज्ञानम्—व्याप्तिपक्षधर्मताविशिष्टलिङ्गज्ञानम्। तथा च—'व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते' (भाषापरिच्छेद॰ ६८) इति विश्वनाथः। 6. '॰पक्षवृत्तिज्ञान॰' A. 7. '॰सहचारगोचरस्मरणजज्ञाने' A. 8. 'अतिप्रसङ्गः' A. 9. 'अत्र मनोलिङ्ग......निराकरणमन्यतोऽवगन्तव्यम्' नास्ति A. 10. 'हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम्' व्याप्तिरिति तर्कसंग्रहे अन्नंभट्टः। यथा—यत्र यत्र धूमः तत्र तत्र वह्निः; न तु यत्र यत्र वह्निः तत्र तत्र धूमः; 'व्यभिचारज्ञानविरहसहकृतसहचारज्ञानस्य व्याप्तिग्राहकत्वात्' (तर्कदीपिका)।

मतो न वैयर्थ्यम्। उपाध्यभावविशिष्टत्वं [1]यावत्स्वव्यभिचारिव्यभिचारिप्रतियोगिकत्वम्। यावत्स्वव्यभिचारिव्यभिचारित्वं तु साध्यस्य [2]यावत्स्वाव्यापकाव्याप्यत्वमेव। सम्बन्धः सामानाधिकरण्यम्। तेन यावत्स्वव्यभिचारिव्यभिचारिसामानाधिकरण्यं व्याप्तिरित्युक्तं भवति। यावत्पदं सोपाधावतिव्याप्तिवारणाय॥

१२६। [3]व्याप्यस्य पक्षसम्बन्ध इति। पक्षतावच्छेदकाश्रययावद्व्यक्तिवृत्तिरित्यर्थः। तेन भागासिद्धव्यावृत्तिः। 'व्याप्यस्ये'ति समभिव्याहारबललब्धानुवादः। यद्वा पक्षसम्बन्धमात्रं भागासिद्धसाधारणमत उक्तं 'व्यापी'ति। अस्य पक्षस्य व्यापीति पूर्व एवार्थो विवक्षितः। भागासिद्धं च न पक्षतावच्छेदकस्य धर्मस्य व्यापी पक्षसंबन्ध इति तद्व्यवच्छेदः। अत्र च प्राग्विवक्षितोऽर्थः शब्दादेव सुलभ इति विशेषः। 'व्यापी'त्याङ्-प्रश्लेषादुदासारिण्यः प्रत्यासारिण्य इतिवत् साधुः। व्याप्यव्यापकयोर्लक्षणान्तर्भावमभिप्रेत्य तयोर्व्याप्तिनिरूप्यत्वादात्माश्रय इत्याशङ्क्याऽऽह—व्यापकं साध्यमित्यादिना। न चैवमपि साध्यत्वं प्रकृतव्याप्तिनिरूपकत्वाल्लिङ्गत्वं च 'व्याप्तिपक्षधर्मताविशिष्टत्वादन्यद् दुर्वचमित्यात्माश्रय[4]* एवेति वाच्यम्, साध्यलिङ्गशब्दयोस्तत्त्वेनाभिमतपरत्वाद् यस्य यदधिकरणे उपाध्यभावविशिष्टः सम्बन्ध इत्यर्थपर्यवसानात्॥

१२७। [5]साधनाव्यापकेति। साधनत्वाभिमतवन्निष्ठात्यन्ताभावप्रतियोगित्वे सति स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यत्वाभिमतसमानाधिकरणात्यन्ताभावाप्रतियोगीत्यर्थः। तेन साध्यत्वसाधनत्वनिर्वचनस्य व्याप्तिगर्भतयाऽव्यापकत्व-समव्यापकत्वयोरपि तथात्वेनाऽऽत्माश्रय इत्यपास्तम्। न चैवमप्यनाद्यनन्तसंसर्गाभावत्वरूपत्वस्यात्यन्ताभावत्वस्य नियमघटितहेतुत्वगर्भसंसर्गाभावत्वगर्भतया चक्रकादीति वाच्यम्, संसर्गाभावस्याखण्डोपाधेरेव विवक्षितत्वादित्याहुः। अनित्यत्वसाधने कृतकत्वे सावयवत्वस्योपाधित्वं वारयितुमुत्तरभागः। तत्रापि पक्षेतरत्वेऽतिव्याप्तिं वारयितुं 'स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं' 'साध्यत्वाभिमत'-विशेषणम्। कृतकत्वेनानित्यत्वे साध्ये कृतकत्वस्यैवोपाधित्वं वारयितुं पूर्वभागः। अत्रात्यन्ताभावे 'प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वं' विशेषणं द्रष्टव्यम्। तेन संयोगाद्युपाधिसंग्रहः। स्वगतधर्मासङ्क्रमक एव यौगिकोपाधिपदशक्य इति मतमनुसृत्येदं द्रष्टव्यम्॥

१२८। [6]पक्षव्यापक इति। पक्षतावच्छेदकव्यापक इत्यर्थः। इदं च 'पर्वतमहानसा-

1. 'यावत्स्वव्यभिचारिप्रतियोगिकत्वम्' A. 2. '०स्वव्यापकाव्याप्यत्वमेव' A. 3. 'व्यापी अस्य (हेतोः) पक्षसम्बन्धः'—व्याप्यस्य पक्षसम्बन्धः। व्यापी—पक्षतावच्छेदकाश्रययावद्व्यक्तिवृत्तिरित्यर्थः।
4. 'व्याप्तिनिरूप्यत्वादात्माश्रय' A. 5. 'साध्येन समा व्याप्तिर्यस्य' इति साध्यसमव्याप्तिः। तथा हि—
'व्यभिचारोन्नयं कुर्वन्नुपाधिर्याति दोषताम्'।

6. तथा च प्रयोगः—

केवलान्वयी—घटः अभिधेयः, प्रमेयत्वात्। यद् यत् प्रमेयं तत्तद् अभिधेयम्। यथा पटः।
न तु 'यत्र यत्र अभिधेयत्वाभावः तत्र तत्र प्रमेयत्वाभावः', दृष्टान्तस्याप्रसिद्धेः।

वभिधेयौ पर्वतेतरत्वादि'त्यादिभागासिद्धकेवलान्वयिनिरासाय । 'सर्वमभिधेयं प्रमेयत्वादि'त्यनुपसंहारिनिवृत्त्यै 'सपक्षस्पर्शी'ति । अन्वयव्यतिरेकिनिवृत्त्यै 'विपक्षशून्य' इति । निश्चितकिञ्चिद्वृत्त्यत्यन्ताभावाप्रतियोगिसाध्यक इत्यर्थः । तेन निश्चितसाध्याभाववच्छून्यत्वं विपक्षशून्यत्वम् । तत्र च साध्याभावप्रसिद्ध्याप्रसिद्ध्योस्तद्वच्छून्यत्वं दुर्निरूपमिति दूषणमपास्तम् । उक्तरूपत्रयवति घटो घटभिन्नः प्रमेयत्वादित्यादौ बाधितेऽतिव्याप्तिनिरासार्थ'मबाधितविषय' इति । सत्प्रतिपक्षदशायामत्रैवातिव्याप्तिनिवृत्त्यर्थ'मसत्प्रतिपक्ष' इति । ननु बाधे पक्षस्यैव विपक्षत्वान्न तच्छून्यता हेतोः तदनवतारेण साध्याभावानिश्चयदशायां तु तदभिधानेऽबाधितविषयत्वविशेषणादपि न तद्व्यावृत्तिरित्युभयथाऽनर्थकं तदिति चेत्; सत्यम् । विपक्षत्वस्यापि बाधोपजीवकत्वादावश्यकप्रथमोपस्थितिना बाधेनानुमितिबोधप्रतिबन्धे तदभावस्याप्यनुमित्यनुकूलतामात्रप्रदर्शनायैव तदुपादानं, न लक्षणान्तर्गततयेति ।

१२९ । [1]पक्षव्यापकः सपक्षशून्य इति । पृथिवीतरभेदसाधके चित्ररूपवत्त्वादिव्यतिरेकिणि भागासिद्धेऽतिव्याप्तिवारणाय 'पक्षव्यापक' इति । असाधारणानैकान्तिकनिवृत्त्यै 'सपक्षशून्य' इति । पृथिवीतरभेदसाधकगुरुत्वादिव्यभिचारिव्यावृत्त्यर्थं 'विपक्षाद् व्यावृत्त' इति । 'अबाधितविषयत्वा'दिकृत्यं पूर्ववत् ।

१३० । [2]पक्षव्यापकः सपक्षस्पर्शीति । परमाणवोऽनित्याः कृतकत्वादित्यादिव्यावृत्त्यै भागासिद्धव्यावृत्त्यै च 'पक्षव्यापक' इति । केवलव्यतिरेकिव्यावृत्त्यै 'सपक्षस्पर्शी'ति । केवलान्वयिव्यावृत्त्यै 'विपक्षाद् व्यावृत्त' इति । शेषं पूर्ववत् । अन्ये तु केवलान्वयसहचारनिश्चयावसेयव्याप्तिकः केवलान्वयी । केवलव्यतिरेकसहचारनिश्चयावसेयव्याप्तिकः केवलव्यतिरेकी । उभयसहचारनिश्चयावसेयव्याप्तिकोऽन्वयव्यतिरेकी । धूमगन्धवत्त्वादयो दशाविशेषेऽन्वयिनो व्यतिरेकिणोऽन्वयव्यतिरेकिणश्चेत्याहुः ।

१३१ । [3]संदिग्धेति । स्वविशेष्यकसाध्यकोटिकसंदेहयोग्यत्वं संदिग्धसाध्यत्वम् । पृथिवीत्वजलत्वकोटिकद्रव्यत्वविषयकसंदेहयोग्यतया तैलस्य द्रव्यत्वानुमाने सिद्धसाधनेऽपि पक्षतां वारयितुं 'साध्ये'ति । द्रव्यत्वेतरसत्तावान्तरजात्यधिकरणताकोटिक[4]द्रव्यत्वविषयकसंदेहयोग्यतामादाय घटो

---

1. तथा च प्रयोगः—
केवलव्यतिरेकी—जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् । यत्र सात्मकं तत्र प्राणादिमत्त्वमपि । यथा घटः । न तु, 'यत् प्राणादिमत् तत् सात्मकम्', दृष्टान्ताप्रसिद्धेः ।

2. तथा च प्रयोगः—
अन्वयव्यतिरेकी—पर्वतो वह्निमान्, धूमवत्त्वात् । यत्र यत्र धूमवत्त्वं तत्र तत्र वह्निमत्त्वम् । यथा महानसः । अपि च—यत्र यत्र वह्निमत्त्वाभावः तत्र तत्र धूमवत्त्वाभावः । यथा महाह्रदः ।

3. 'सिषाधयिषाविरहविशिष्टसिद्ध्यभावः (सिषाधयिषाविरहविशिष्टायाः सिद्धेः अभावः) पक्षता' इत्यन्नंभट्टः । 'सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते स पक्षः……' इति विश्वनाथः । 4. '०द्रव्यत्वविषयक०' नास्ति A.

द्रव्यमिति सिद्धसाधने द्रव्यत्वानुमाने घटस्य पक्षतां वारयितुं 'तत्कोटिके'ति। साध्य एवाति-व्याप्तिनिरासाय 'स्वविशेष्यके'ति। लिङ्गपरामर्शादिना [1]तन्नाशेऽपक्षतां वारयितुं 'योग्यत्वमि'ति। तच्च प्रकृतसंशयतज्जन्यानुमित्यन्तरालकालावच्छिन्नत्वमिति न योग्यताया यावद्वस्तुभावित्वेन पूर्वोत्तरकालयोरतिप्रसङ्गः। इदमेव च योग्यत्वं मौलिकतृतीयादर्शितोपलक्षणभावसाध्यसन्देहोप-लक्ष्यतावच्छेदकं द्रष्टव्यम्। न चाप्रसिद्धसाध्यके व्यतिरेकिणि साध्यकोटिकसंशयाप्रसिद्ध्या तत्पक्षेऽव्याप्तिः[3], सामान्यतो दृष्टेन मनसा वा तत्र साध्यप्रसिद्धेः पक्षस्याङ्गीकारात्। इदं च कथोपयोग्यनुमानपक्षनिर्वचनमेव न साधारणमिति सिषाधयिषया साधकप्रमाणाभावाद्वा पक्षतायां [2]नातिव्याप्तिः। अत एव कथाङ्गस्यानुमानस्योच्चारणाव्यभिचारादनुच्चारिते पक्षतुल्येऽतिव्याप्तिं परिहर्तुं तदर्थकमुपात्तपदमाह। वस्तुतस्तु, तदनर्थकमेव, स्वविशेष्यकसंदेहविषयत्वेन तस्यापि [4]पक्षत्वादन्यदा चाप्रसङ्गादिति[4]*॥

१३२। [5]अर्थरूपत्वं शब्दाप्रयोज्यपरामर्शविषयत्वम्। [6]शब्दरूपत्वं शब्दप्रयोज्यपरामर्श-विषयत्वं परमार्थतो द्रष्टव्यम्। वह्निव्याप्यधूमवानयमित्याप्तवाक्योत्थपरामर्शोऽपि परार्थ एव, तत्रापि प्रतिज्ञाद्यङ्गपञ्चकनियमस्य [7]वादिवाक्यविषयत्वात्। ननु शब्दप्रमाणस्य पृथग्विभाग-लक्षणयोरनभिधाने को हेतुस्तत्राऽऽह—शब्दस्येति। अनुमानस्य विषय उद्देश्यं जन्यं परोक्षज्ञानं तदेव विषयो जन्यं यस्येति मध्यमपदलोपिबहुव्रीहिणा परोक्षज्ञानजनकत्वं हेतूकृतम्। तेन तस्यानु-मानत्वसाधनात् पृथक् तदनभिधानमित्यर्थः। प्रसाध्याङ्गकं हेत्वन्तरमाह—अविनाभावोपजीवक-त्वेनेति। प्रमाणान्तरत्वकल्पने गौरवादविनाभावोपजीवकत्वस्य कल्पनेत्यर्थः। कथं तदिति चेदित्थम्—'एतानि पदानि स्वस्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बक-त्वात्, यदुक्तसाधनं तदुक्तसाध्यम्, यथा स्वोच्चारितपदजातमि'ति केचित्। [8]तन्न।

1. 'तन्नाशे पक्षतां' A. 2. 'नातिव्याप्तिः' A. 3. '॰दव्याप्तिः' A. 4. '॰दन्यथा च प्रसङ्गा॰' A.
5. 'यत् परवचनानपेक्षमर्थं पदार्थेनैवावलोक्य अनुमितिज्ञानमुत्पद्यते तत् स्वार्थम्' इति जिनवर्द्धनः।
6. 'शब्दः परोपदेशः पञ्चावयवं वाक्यं तद्रूपकम्' ( परार्थकम् ) इति जिनवर्द्धनः।

वैशेषिकमते—शब्दः अनुमानम्। प्रमाणत्वे सति परोक्षविषयत्वात् परोक्षज्ञानजनकत्वाद् वा। अनुमानवत्। प्रयोगश्च—एतानि पदानि स्वस्मारितार्थसंसर्गज्ञानपूर्वकाणि। आकाङ्क्षायोग्यतासन्निधिमत्पद-कदम्बकत्वात्। अन्यदोच्चारितपदजातवत्। तथा च, प्रशस्तपाद-भाष्यम् ( पृ० २१३ )—

'शब्दादीनामपि अनुमानेऽन्तर्भावः समानविधित्वात्। यथा प्रसिद्धसमयस्यासन्दिग्धलिङ्गदर्शनप्रसिद्ध्यनु-स्मरणाभ्यामतीन्द्रियेऽर्थे भवत्यनुमानमेवं शब्दादिभ्योऽपीति'। अत्र न्यायकन्दली—

'यथा व्याप्तिग्रहणबलेनानुमानं प्रवर्त्तते तथा शब्दादयोऽपीत्यर्थः। शब्दोऽनुमानं व्याप्तिबलेनार्थ-प्रतिपादकत्वाद् धूमवत्। ......तावद्धि शब्दो नार्थं प्रतिपादयति यावदयमस्याव्यभिचारीति नावगम्यते। ज्ञाते त्वव्यभिचारं प्रतिपादयन् धूम इव लिङ्गं स्यात्'।

7. 'कथाविषयत्वात्' A. 8. 'तत्र' A.

लिङ्गकरणतापक्षमाश्रित्याप्यभिधाने पदकदम्बकत्वमेवानुमानं स्यान्न पक्षीकृतानि पदानि। [1]अविनाभावज्ञानसहकारित्वं च पक्षतादिष्वनैकान्तिकम्। किं चास्य ग्रन्थस्य प्रमाणाधिक्याशङ्कानिराकरणार्थत्वे विभागान्त एवान्तर्भावाभिधानं स्यात्, मध्यत्वलघुत्वाद्यन्तर्भावाभिधानवत्; प्रकृतप्रतिज्ञाद्यनुमानपरिकरनिरूपणान्ते वा ? न पुनर्मध्य एवेत्यन्यथा व्याख्येयम्। तद् यथा—शब्दप्रयोज्यलिङ्गपरामर्शात्मनः [2]परार्थानुमानस्य कुतः शब्दरूपत्वमित्याशङ्क्य प्रयोजकतयोपचारेण प्रसिद्धानुमानभावस्य शब्दस्य यथाश्रुतमपि सुवचमिदं लक्षणमिति मन्वानः शब्दस्यानुमानोपचारत्वे बीजमाह—शब्दस्यापीति। अनुमानविषयत्वं लिङ्गपरामर्शप्रयोजकत्वमनुमितिप्रयोजकत्वं वा। अविनाभावोपजीवकत्वं तु व्याप्त्युपजीवकत्वं लिङ्गपरामर्शस्याप्यनुमित्यनुकूलत्वे[3] विषयीभूताविनाभावोपजीवकत्वात्, शब्दस्यापि व्याप्तिं प्रतिपाद्य [4]तत्र जिज्ञासोत्थापनेन मानसपरामर्शजननद्वाराऽनुमित्युपयोगिनोऽविनाभावोपजीवकत्वाविशेषादिति ॥

१३३[5]। *साध्यवत्त्वेनेति। निगमनावयवत्वे सति प्रकृतव्याप्त्यगोचरानुमित्सितसंसर्गबोधजनकं वाक्यमित्यर्थः। निगमनोत्तरभागव्यावृत्त्यै पूर्वविशेषणम्। न्यायनिगमनव्यावृत्त्यै 'व्याप्त्यगोचरे'ति बोध-विशेषणम्। व्याप्तिपक्षकानुमानप्रतिज्ञायामव्याप्तिवारणाय 'प्रकृते'ति। हेत्ववयवव्यावृत्त्यर्थ'मनुमित्सितसंसर्गे'ति। पक्षतावच्छेदकावच्छेदेन साध्यसंसर्गविशेषोऽनुमित्सितसंसर्गः। तत्परित्यागेन पक्षसाध्यसंसर्गपदोपादाने संख्याज्ञानं संख्यावदित्यादिप्रतिज्ञापूर्वभागेऽव्याप्तिरित्यनुमित्सितपदम्। संख्याया ज्ञानमिति षष्ठ्यर्थो विषयविषयिभावसंबन्धश्च नानुमित्सितः, किं तु समवाय इति न दोषः। न च शब्दोऽभिधेयवानित्यादिप्रतिज्ञायामभिधेयत्वेन प्रकृतव्याप्तिं गोचरयन्त्यामव्याप्तिः, व्यभिचारिज्ञानविरोधिप्रकारेण तदविषयत्वस्यैव तदगोचरपदार्थत्वात्। उदाहरणजन्यज्ञानस्य तु व्याप्ति[6]विषयत्वेन तत्प्रकारकत्वमवश्यं संपादनीयमतो नातिव्याप्तिः। न च पदान्तरसाचिव्यादनुमित्सितसाध्यसंसर्गबोधके प्रतिज्ञावयवेऽतिव्याप्तिः, वाक्यस्य पद[7]समुदायत्वेन यावद्भिः पदैरनुमित्सितसंसर्गबोधस्तावत्पदसमुदायः प्रतिज्ञेत्यर्थलाभाददोषात्। लिङ्गस्य पक्षधर्मत्ववचनमिति। साध्यस्य पक्षधर्मतावचने प्रतिज्ञायामतिव्याप्तिवारणाय 'लिङ्गस्ये'ति। ननु धूमवान् पर्वत इति प्रतिज्ञैकदेशे उपनये निगमनपूर्वभागे न्याये चातिव्याप्तिरिति चेत्, न; [8]प्रकृतव्याप्त्यविषयहेतुविभक्त्यर्थान्वितलिङ्गपक्षसंबन्ध-

---

1. 'अविनाभावज्ञानस्य पदसहकारित्वं च' A. 2. 'परार्थानुमानस्य' नास्ति A. 3. '॰नुकूले' A. 4. 'तत्त्वजि॰' A. 5. प्रतिज्ञा—पर्वतः वह्निमान्। हेतुः—धूमवत्त्वात्। उदाहरणम्—यो यो धूमवान् स स वह्निमान् यथा महानसः ('सव्याप्तिकं दृष्टान्तवचनमुदाहरणम्')। उपनयः—अयं वह्निव्याप्यधूमवान्। निगमनम्—तस्मादयं वह्निमान्। 6. '॰विषयत्वे तत्प्रकारकत्वम॰' A. 7. '॰समुदायपरत्वेन' A. 8. 'प्रकृतव्याप्तविषय॰' A.

* 'साध्यवत्त्वेने'ति मूलपाठोऽधिकः, पदार्थचन्द्रिकाकृत्सम्मतः प्रतिभाति।

बोधजनकं वाक्यमिति विवक्षितत्वात्। अत्र च निगमनपूर्वभागव्यावृत्त्यै '[1]व्याप्त्यविषये'ति बोध-विशेषणम्। इदमेतदनुमितिजनकमेतद्वाप्तत्वादित्यादिहेत्वव्याप्तिनिरासाय 'प्रकृते'ति। धूमवान् पर्वत इति प्रतिज्ञैकदेशव्यावृत्त्यै 'हेतुविभक्त्यर्थान्विते'ति। पर्वतो वह्निमान् महानसे धूमादित्या-द्यसद्धेतुनिरासाय 'पक्षसंबन्धे'ति। व्याप्तिपक्षधर्मतयोरनुमितिप्रयोजकतातौल्येन[2] तदाकाङ्क्षयोः पौर्वापर्यनियमे मानाभावेन मतुबादिप्रयोगौचित्यादप्रयोगेऽपि [3]वा पक्ष समभिव्याहृतं हेतुवाक्यं तद्धर्मतयैव तमुपस्थापयति, [4]अवयवासाधकतानुमानवदिति भावः। दृष्टान्तवचनमिति। यद्वाक्यत्वावच्छेदेनापेक्षितसव्याप्तिकं[5] दृष्टान्ताभिधानं तदित्यर्थः। अनुपदर्शितव्याप्तिक-व्यावृत्त्यर्थं 'सव्याप्तिके'ति। विपर्यस्तोपदर्शितव्याप्तिकव्यावृत्तये'ऽपेक्षिते'ति। यत्र धूमस्तत्राग्नि-रित्येवोक्ते कुत्रेदं दृष्टमिति पर्याकुलितमना न तावद् व्याप्तिं प्रत्येति यावन्न दृष्टान्तोपन्यास इति तदभिधानावश्यकतापक्षे तद्रहितोदाहरणभागव्यावृत्त्यर्थं '[6]दृष्टान्तवचनमि'ति। न्यायमहावाक्य-व्यावृत्त्यर्थं[6] * 'यद्वाक्यत्वावच्छेदेने'ति। लिङ्गपरामर्शवचनमिति। हेतुविभक्त्यर्थान्वयाविषय-प्रकृतव्याप्यवत्ताप्रकारकपक्षज्ञानजनकं वाक्यमित्यर्थः। प्रतिज्ञाव्यावृत्त्यर्थं 'व्याप्यवत्ताप्रकारके'ति। पर्वतो वह्निव्याप्यधूमवानिति प्रतिज्ञाव्यावृत्त्यै 'प्रकृते'ति। न्यायनिगमनैकवाक्यव्यवच्छेदाय 'हेतुविभक्त्यर्थान्वयाविषये'ति। लिङ्गसम्बन्धप्रयुक्तेति। हेतूपरागबलेन पक्षे साध्यनिश्चायकत्वं यदवच्छेदेन तद्वाक्यत्वमित्यर्थः। न्यायवाक्यव्यवच्छित्त्यै 'यदवच्छेदेने'ति। न्यायवाक्यत्वं चाधिकवृत्तित्वात् न तदवच्छेदकमिति नातिव्याप्तिः। प्रतिज्ञाव्यावृत्त्यै 'हेतूपरागबलेने'ति ॥

१३४। [7]अङ्गवैकल्यमिति। स्वापेक्षिताङ्गवैकल्यमित्यर्थः। तेन सत्केवलान्वयिकेवल-व्यतिरेकिणोश्चतुरङ्गयोर्नातिव्याप्तिः। लिङ्गत्वेनानिश्चिततत्वमिति। व्याप्तिविशिष्टपक्षधर्मत्वेना-

---

1. 'व्याप्तविषयेति' A. 2. '°तौल्येऽपि न' (?) A. 3. 'बाधक°' A. 4. 'वावयवा°' A. 5. 'सापेक्षितव्याप्तिकं' A. 6. 'दृष्टान्त......वाक्यव्यावृत्त्यर्थं' नास्ति A.

7. हेतोराभासः हेत्वाभासः, 'अनुमितितत्कारणान्यतरप्रतिबन्धकयथार्थज्ञानविषय' इत्यर्थः; हेतु-वदाभासमानो वा हेत्वाभासः, 'अङ्गविकलहेतु'रित्यर्थः। असिद्धो विरुद्धः संदिग्धश्च त्रयो हेत्वाभासा इति कणादः। असिद्धो विरुद्धः सन्दिग्धोऽनध्यवसितश्च चत्वार इति प्रशस्तपादः। असिद्धो विरुद्धोऽनैकान्तिकः प्रकरणसमः कालात्ययापदिष्टश्चेति पञ्च हेत्वाभासा इति गौतमः। सिद्धिरन्योऽसिद्धः, 'व्याप्तस्य पक्षधर्मत्वप्रतीतिः सिद्धि'रिति तार्किकरक्षायां वरदराजः। 'अमीदयनेन व्याप्तस्य हेतोः पक्षधर्मतया प्रतीतिः सिद्धिस्तदभावो-ऽसिद्धिरित्यसिद्धिलक्षणमुक्तम्। तच्च यद्यपि विरुद्धादिषु सम्भवतीति साङ्कर्यं प्रतीयते, तथाऽपि यथा न साङ्कर्यं तथोच्यते। यो हि यत्र साधने पुरः परिस्फुरति समर्थश्च दुष्टज्ञप्तौ स एव दुष्टज्ञप्तिकारको दूषणमिति यावत् नान्य इति; तेनैव पुरःस्फूर्तिकेन दुष्टौ ज्ञापितायां कथापर्यवसाने जाते तदुपजीविनोऽन्यस्यानुपयोगात्। तथा च सति यत्र विरोधः साध्यविपर्ययव्याप्त्याख्यो दुष्टज्ञप्तिकारकः स एव विरुद्धो हेत्वाभासः। एवं यत्र व्यभिचारादयस्तथाभूतास्तेऽनैकान्तिकादयस्तथा। ये पुनर्व्याप्तिपक्षधर्मताविशिष्टहेतुस्वरूपज्ञप्त्यभावेन पूर्वोक्ता असिद्ध्यादयो दुष्टज्ञप्तिकारका दूषणानीति यावत्, तथाभूतः सोऽसिद्ध' इति तर्कभाषा—पृ० १६७। व्याप्यत्वा-

प्रमितत्वमित्यर्थः। अयं च विशिष्टव्यतिरेको व्याप्यत्वासिद्धे आश्रयासिद्धे स्वरूपासिद्धे ज्ञानासिद्धे चोत्तरोत्तरविशेषणव्यतिरेकप्रयुक्ततयाऽविशिष्ट[1] इति न काप्यव्याप्तिः। यदा तु पक्षधर्मत्वेनानिश्चितत्वमिति वा पाठस्तदा सोपाधिव्याप्यत्वासिद्धो व्यभिचारिणि साध्याप्रसिद्ध्या सहचारशून्यस्तु तत्प्रसिद्धिमूलकसंदेहघटितपक्षताविरहादाश्रयासिद्धे सामग्रीवैकल्यमात्रे वा तदभावमात्रसहचारस्तु विरुद्ध इति "न तत्सं"[2]*ग्रहोपयोग इति हृदयम्। विरुद्धलक्षणे व्यभिचारिव्यावृत्त्यै 'मात्रे'ति। अव्याप्तिनिवृत्त्यै 'पक्षे'ति। न च सोऽपि विपक्ष एव, साध्याभावानिश्चयात्। अनध्यवसितव्यावृत्त्यै 'विपक्षे'ति। यद्यप्यसाधकतानुमाने विपक्षवृत्त्यतिरिक्तविशेषणानर्थक्यं

---

सिद्धाश्रयासिद्धस्वरूपासिद्धभेदेनासिद्धस्त्रिधा भिद्यते। तत्र व्याप्यत्वासिद्धो यथा, पर्वतो धूमवान्, वह्निमत्त्वात्; यज्ञीया हिंसा अधर्मसाधनम्, हिंसात्वात्; मैत्रीतनयः श्यामः, मैत्रीतनयत्वात्। आश्रयासिद्धो यथा, गगनारविन्दं सुरभि, अरविन्दत्वात्, सरोजारविन्दवत्। स्वरूपासिद्धो यथा, शब्दोऽनित्यः, चाक्षुषत्वात्, घटवत्। विरुद्धो यथा, शब्दो नित्यः, कृतकत्वात्। अत्र सपक्षे सत्त्वं विपक्षाद् व्यावृत्तिश्च नास्ति, दृश्यते च यत्र यत्र कृतकत्वं तत्र तत्र अनित्यत्वम्, यथा घटे; न तु यत्र यत्र कृतकत्वं तत्र तत्र नित्यत्वमिति। अनैकान्तिकः सव्यभिचारो (साधारणः) यथा, पर्वतो वह्निमान्, प्रमेयत्वात्। अनध्यवसितो यथा, शब्दोऽनित्यः, शब्दत्वात्। तर्कसंग्रहे तु असाधारणानैकान्तिकलक्षणे एव 'सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्ति'रित्युक्तम्। कालात्ययापदिष्टः (कालस्यात्ययेनापदिष्टः) यथा, अग्निः अनुष्णः, कृतकत्वात्, जलवत् (बाधितः)। 'हेतोरपदेशस्य हि साध्यसन्देहविशिष्टः कालः।……प्रमाणतो विपरीतनिर्णयेन सन्देहविशिष्टकालमतिपततीति सोऽयं कालस्यात्ययेनापदिश्यमानः कालातीत इति'—न्यायवार्त्तिकतात्पर्यटीकायाम् (न्याय० सू० १-२-९) वाचस्पतिमिश्राः। प्रकरणसमो यथा, शब्दो नित्यः, श्रावणत्वात्, शब्दत्ववत्; शब्दोऽनित्यः, कार्यत्वात्, घटवत् (सत्प्रतिपक्षः)। तथा, शब्दो नित्यः, अनित्यधर्मरहितत्वात्; शब्दोऽनित्यः, नित्यधर्मरहितत्वात्। प्रकरणसमः—प्रकरणेन समः, प्रकरणमनतिक्रान्तो वा; 'साध्यतदभावसाधकत्वं प्रकरणसमत्वम्' इत्यर्थः। तथा हि, 'विमर्शाधिष्ठानौ पक्षप्रतिपक्षौ उभौ अनवसितौ प्रकरणम्।……स निर्णयार्थं प्रयुक्त उभयपक्षसाम्यात् प्रकरणमनतिवर्त्तमानः प्रकरणसमो निर्णयाय न प्रकल्पते' इति वात्स्यायनभाष्ये—न्याय० सू० १-२-७।

अत्र मूले 'साध्यतदभावसाध्यत्वं सन्दिग्धत्वम्' इति मितभाषिणीकारसम्मतः पाठः, तेन अनध्यवसितप्रकरणसमयोः पृथग्लक्षणे न व्याख्याते, तस्य मतेन सन्दिग्ध एव तयोरन्तर्भावात्। मितभाषिणी (पृ ८०) द्रष्टव्या। अपि चोक्तं तत्र—'क्वचित्तु अनेकान्तानध्यवसितयोः पृथग्लक्षणं दृश्यते, तदा सन्दिग्धशब्देन सत्प्रतिपक्ष एव ग्राह्यः। पूर्वपाठ एव तु सार्वत्रिकटीकान्तरसम्मतश्चेति' (मितभाषिणी—पृ० ८०-८१)। जिनवर्द्धनस्त्वाह—'साध्यतदभावसाध्यत्वं सन्दिग्धत्वम्। पक्षत्रयवृत्तिरनैकान्तिकः। साध्यासाधकः पक्ष एव वर्त्तमानः अनध्यवसितः। स्वपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः' (मूलम्)। अत्र टीका 'अनैकान्तिकानध्यवसित-प्रकरणसमानां त्रयाणामेकं नाम सन्दिग्धो हेत्वाभास इति तल्लक्षणमाह। एते त्रयोऽपि सन्दिग्धशब्दवाच्या भवन्ति। अतस्त्रयाणामेकं मिलितं लक्षणमभिधाय पृथग्लक्षणमाह—'पक्षत्रयवृत्तिरनैकान्तिक' इत्यादि।

1. 'प्रविष्ट' A. 2. 'मतम्'० A.

तथाऽपि वृषकताबीजभेदावान्तरभेदानाममीषामसंकीर्णत्वोपलक्षणरूपमात्रमत्राभिधीयत इति न विशेषणान्तरवैयर्थ्यम्। एवमुत्तरत्रापि द्रष्टव्यम्। साध्यासाधक इति। सत्केवलव्यतिरेकिव्यावृत्त्यै 'साध्यासाधके'ति। विरुद्धानैकान्तिकव्यवच्छित्त्यै 'मात्रे'ति। न चासाधकतयैवानध्यवसितनिर्वचने असाधकतानुमाने साध्यावैशिष्ट्यम्, साध्यासाधक-पदेन सत्सपक्षताया एव विवक्षितत्वात्। स एव हि पक्षमात्रवृत्तिः साध्यासाधको यः सत्सपक्षः तस्यैव साध्यसंदेहापादनसामर्थ्यनिर्वाहादिति द्रष्टव्यम्॥

१३५। उपजीव्येति। उपजीव्यत्वमधिकबलत्वम्। तच्च न लक्षणान्तर्गतमुपजीव्यकोदासीनयोर्बाध्यसंशायकयोर्विपरीताप्रमापकत्वादेव व्यावृत्तेः, किं तु विपरीतप्रमापकतासामर्थ्योपदर्शनाय। संदिग्धसाध्यविपरीतसत्प्रतिपक्षव्यवच्छेदाय 'निश्चिते'ति। आभासत्वास्फूर्तिदशायामाभासनिश्चितसाध्यविपरीतसदनुमानव्यावृत्त्यै 'प्रमाणे'ति। साध्यविपरीतेति। साध्याभावसाधनस्वरूपयोग्यपरामर्शविषयः प्रकृतसाध्यसाधकपरामर्शविषयाद्धेतोरन्यो हेतुः प्रकरणसम इत्यर्थः। एकत्र पक्षे विपरीतसाधकहेत्वन्तरपरामर्शसमानकालीनसमानाधिकरणसाध्यसाधकपरामर्शविषयो हेतुरिति तात्पर्यार्थः। अत्र च नित्यत्वानित्यत्वव्याप्यविभुत्वकृतकत्ववन्तौ नभःकुम्भाविति परामर्शविषययोर्विभुत्व-कृतकत्वयोर्व्यवच्छित्त्यै 'एकत्र पक्ष' इति। आलोकविशेषव्याप्य[1]वह्नितद्व्याप्यधूमवान् पर्वत इति समूहालम्बनपरामर्शविषययोर्वह्नि-धूमयोर्व्यावृत्त्यै 'विपरीते'ति। अनध्यवसितव्यावृत्त्यै 'हेत्वन्तरे'ति। एकमात्रपरामर्शविषयहेत्वन्तरव्यावृत्त्यै 'साध्ये'ति॥

१३६। अनिष्टे[2]ति। अनिष्टस्य वह्न्यभावव्यापकस्य धूमाभावादेः प्रसञ्जनं तर्क[3] इत्यर्थः। जलह्रदे निर्धूमत्वापादनव्यावृत्त्यर्थ'मनिष्टे'ति। शब्दो यद्यनित्यः स्यात् सावयवः स्यादित्यादिव्युदासाय 'व्यापके'ति॥

१३७। [4]प्रसञ्जनपदार्थमाह—तुल्यत्वेनेति। देशतः कालतो वा तुल्यावस्थानत्वेन व्याप्यव्यापकभावेनेति यावत्। अभावयोरित्युपलक्षणमापाद्यापादकयोः। प्रत्यभाववचनं प्रतिकूलापाद्यवचनम्। अत्र च तुल्यत्वेनेति प्रतीतिश्च पूर्वलक्षणान्तर्गतव्यापकतानिष्टत्वयोरनुवादः। तेन व्यापकतानिष्टत्वयोः प्रसञ्जनपदार्थान्तर्भावे तर्कलक्षणे तदुभयवैयर्थ्यमिति दूषणमपास्तम्। न च शब्दोऽनित्यः कृतकत्वादिति कृतकत्वव्यापकस्य मीमांसकं प्रत्यनिष्टस्यानित्यत्वस्याऽऽपादनेऽतिप्रसङ्गः, [4]वचनशब्देनाहार्यारोपस्य 'तर्हि निर्धूमः स्यादि'त्याकारस्य विवक्षितत्वात्॥

१३८। [5]निद्रादुष्टेति। अत्र च वक्ष्यमाणलक्षणया निद्रया जन्यं ज्ञानमिति लक्षणांशः।

1. '०वह्नितद्व्याप्य०' नास्ति A. 2. 'व्याप्यारोपेण व्यापकारोपस्तर्कः' इति तर्कसंग्रहे अन्नंभट्टः। यथा, यद्यत्र वह्न्यभावः स्यात् तर्ह्यत्र धूमाभावोऽपि स्यात्। 3. 'प्रतिकूलस्याभावस्य वचनम्' प्रसञ्जनम् इत्यर्थः। 4. 'प्रसञ्जन०' A. 5. तथा हि प्रशस्तपाद-भाष्यम्—पृ० १८३—

'उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्येन्द्रियद्वारेणैव यदनुभवनं मानसं तत् स्वप्नज्ञानम्। कथम्? यदा बुद्धिपूर्वादात्मनः शरीरव्यापारादहनि खिन्नानां प्राणिनां निशि विश्रमार्थमाहारपरिणामार्थं वाऽदृष्टकारित-

इतरत् स्वरूपकीर्तनम् । योगजेति । समाधावतिव्याप्तिनिरासाय 'योगजे'त्यादि । निरिन्द्रियप्रदेशः स्वप्नवहनाडीत्याहुः ॥

१३९ । [1]'वस्तुस्वरूपमात्रग्रहणमिति । न चावस्तुस्वरूपग्रहणाप्रसिद्ध्या मात्रपदवैयर्थ्यम्, निष्प्रकारकज्ञानत्वस्य विवक्षितत्वात् । विशिष्टग्रहणमिति, सप्रकारकमित्यर्थः । अतीतावस्थावच्छिन्नस्य वर्तमानभेदावगाहि प्रत्यक्षं [2]प्रत्यभिज्ञानम् । स्वानिष्टसाधनताप्रकारकं ज्ञानं [3]हानम् । स्वेष्टसाधनताप्रकारकं ज्ञानमुपादानम् । उभयाप्रकारकं ज्ञानमुपेक्षा ॥

१४० । [4]'अनालिङ्गितेति । [5]न आलिङ्गिते [6]* विरोधितावच्छेदकरूपेणोल्लिखिते उभे कोटी

---

प्रयत्नापेक्षादात्मान्तःकरणसम्बन्धान्मनसि क्रियाप्रबन्धादन्तर्हृदये निरिन्द्रिये आत्मप्रदेशे निश्चलं मनस्तिष्ठति, तदा प्रलीनमनस्क इत्याख्यायते । प्रलीने च तस्मिन्नुपरतेन्द्रियग्रामो भवति । तस्यामवस्थायां प्रबन्धेन प्राणापानसन्तानप्रवृत्तावात्ममनःसंयोगविशेषात् स्वापाख्यात् संस्काराच्चेन्द्रियद्वारेणैवासतम् विषयेषु प्रत्यक्षाकारं स्वप्नज्ञानमुत्पद्यते । तत्तु त्रिविधम्, संस्कारपाटवाद् धातुदोषाद् अदृष्टाच्च । तत्र संस्कारपाटवात् तावत् कामी क्रुद्धो वा यदा यमर्थमादृतश्चिन्तयन् स्वपिति तदा सैव चिन्तासन्ततिः प्रत्यक्षाकारा सञ्जायते । धातुदोषाद् वातप्रकृतिस्तद्दूषितो वा आकाशगमनादीन् पश्यति । पित्तप्रकृतिः पित्तदूषितो वाग्निप्रवेशकनकपर्वतादीन् पश्यति । श्लेष्मप्रकृतिः श्लेष्मदूषितो वा सरित्समुद्रप्रतरणहिमपर्वतादीन् पश्यति । यत् स्वयमनुभूतेष्वननुभूतेषु वा प्रसिद्धार्थेष्वप्रसिद्धार्थेषु वा यच्छुभावेदकं गजारोहणच्छत्रलाभादि तत् सर्वं संस्कारधर्माभ्यां भवति । विपरीतं च तैलाभ्यञ्जनखरोष्ट्रारोहणादि तत् सर्वमधर्मसंस्काराभ्यां भवति' ।

'स्वप्नस्य मानसविपर्ययरूपत्वात् न त्रैविध्यविरोध' इति तर्कदीपिका । 'स्वप्ने तु सर्वमेव ज्ञानं स्मरणमयथार्थञ्चे'ति तर्कभाषा ।

1. 'विशेषणविशेष्यसम्बन्धानवगाहि ज्ञानं' निर्विकल्पकम् (तर्कदीपिका), यथा—इदं किञ्चित् । 'नामजात्यादिविशेषणविशेष्यसम्बन्धावगाहि ज्ञानं' सविकल्पकम् (तर्कदीपिका), यथा—घटत्ववान् अयं घटः ।

2. 'पूर्वावस्थानुभवजनितसंस्कारसहकृतेन्द्रियप्रभवा प्रत्यभिज्ञा' इति तर्कभाषा । अत्र न्यायप्रदीपः—'तत्तेदन्तोभयविषयकं ज्ञानं प्रत्यभिज्ञा' इति ; यथा, सोऽयं देवदत्तः । 3. 'दोषवति वस्तुनि या हेयत्वबुद्धिः सा हानबुद्धिः । गुणवति योपादेयत्वबुद्धिः सोपादानबुद्धिः । उभयाभाववति योपेक्षणीयताबुद्धिः सोपेक्षाबुद्धि'रिति न्यायप्रदीपे विश्वकर्मा ।

4. ऊहो यथा, अनेन वृन्दावनविहारिणा हरिणा भवितव्यम् । अनध्यवसायो यथा, कोऽप्ययम् । तथा च, न्यायकन्दलीकारश्रीधराचार्याः—

'येऽर्थाः पूर्वं ज्ञातास्तेषु व्यासङ्गादन्यत्राऽऽसक्तचित्तत्वाद् विशेषप्रतीत्यर्थित्वाद् वा किमित्यालोचनमात्रं गते प्रसिद्धे राजनि कोऽप्यनेन पथा गत इति ज्ञानमात्रमनवधारितविशेषमनध्यवसायः । अप्रसिद्धेष्वपरिज्ञानादेवानध्यवसायो यथा वाहीकस्य पनसादिषु । तत्रापि पनसे सत्त्वद्रव्यत्वपृथिवीत्ववृक्षत्वरूपवत्त्वादिशाखाद्यपेक्षोऽध्यवसाय एव, द्रव्यमेतत् पार्थिवोऽयं वृक्षोऽयं रूपादिमान् शाखादिमांश्चेत्यवधारणात् । पनसत्वमपि पनसेष्वनुवृत्तमाम्रादिभ्यो व्यावृत्तं निर्विकल्पकप्रत्यक्षमेव । केवलं त्वस्य पनसशब्दो नामधेयमित्युपदेशाभावाद् विशेषसंज्ञाप्रतिपत्तिर्न भवति पनसशब्दवाच्योऽयमिति प्रतिपत्तिर्न भवति, किन्तु किमप्यस्य नामधेयं भविष्यतीत्येतावन्मात्रप्रतीतिः स्यात् सेयं संज्ञाविशेषानवधारणात्मिका प्रतीतिरनध्यवसायः' ।

5. ''अनालिङ्गिते' A. 6. '०रूपेणानुल्लिखिते' A.

येन तादृगनवधारणं ज्ञानमित्यर्थः। तेन किं स्विदेतदिति अनध्यवसाये किंत्वेन सामान्येनोभयकोट्युल्लेख आवश्यकः। अन्यथा, संशयत्वानुपपत्तेरित्यपास्तम्। ऊहव्यावृत्त्यर्थ'मुभये'ति। निश्चयव्यावृत्त्यर्थ'मनवधारण'मिति। ऊहलक्षणं च स्पष्टत्वादुपेक्षितम्। तच्च प्रागस्माभिरुक्तमेव॥

१४१। यागस्य स्वर्गसाधारणत्वात्तद्व्यावर्तकमाह—प्रयत्नोत्पाद्येत्यादिना। [1]प्रयत्नजन्यस्रगादिजन्यं सुखं सांसारिकमित्यर्थः। स्वर्गव्यावृत्त्यै पूर्वभागः। स्रगादिव्यावृत्त्यै परभागः। ननु स्वर्गसुखमपि यागादिप्रयत्नसाध्यसाधनाधीनमिति तत्रातिव्याप्तिरिति चेत्? अत्राऽऽहुः—समानकालीनानेकावृत्तिजात्या स्वावच्छेदकसजातीयावच्छेद्यप्रयत्नोत्पाद्यं सुखं सांसारिकमिति[2]। वस्तुतो धर्मारब्धदेहावच्छेद्यं सुखमिति लक्षणम्। तेनायत्नजन्यसुहृद्दर्शनादिजन्यसुखे नाव्याप्तिरिति ध्येयम्। इच्छामात्राधीनेति। सांसारिकसुखव्यावृत्त्यर्थ'मिच्छामात्राधीने'ति। यद्यपि स्वर्गस्य प्रयत्नयागादृष्टप्रणालीजन्यत्वेनेदमसंभवि अदृष्टाद्वारकप्रयत्नानधीनसाधनसाध्यत्वं विवक्षितमप्यदृष्टद्वारकचित्रादियत्नोत्पाद्यग्रामपशुपुत्रादिजन्ये सांसारिके सुखेऽतिप्रसक्तं तथाऽपि समानकालीनानेकावृत्तिजात्या स्वावच्छेदकसजातीयावच्छिन्नप्रयत्नानधीन-साधन-साध्यं सुखं स्वर्ग इति लक्षणमित्याहुः। अधर्मानारब्धदेहावच्छेद्यं सुखमिति तु [3]परमार्थः॥

१४३। [4]स्थितस्थापकलक्षणं ऋजुवस्तुनि स्थितस्थापककार्याभिप्रायेणोपात्तमृजुत्वं पूर्वावस्थामात्रोपलक्षणम्। तेन वेष्टितविवृतस्य कटादेः पुनर्वेष्टनापादके स्थितस्थापके नाव्याप्तिरिति ध्येयम्॥

१४४। स्वाभावसादेश्यं स्वप्रतियोगिकात्यन्ताभावसामानाधिकरण्यम्। तेन प्राक्प्रध्वंसाभावसमानाधिकरणे रूपादौ नातिव्याप्तिः॥

१४५ [5]निर्बाधकमिति। यत्सामान्यं यत्र साक्षात्संबन्धेन वृत्तौ व्यक्त्यभेदादिबाधकरहितं तत्तत्र जातिः साक्षात्तद्वृत्ति, अन्यत्तत्रोपाधिः परम्परावृत्तीति यावत्। बाधकबलेन साक्षात्संबन्धत्यागे विशिष्ट[6]प्रत्यक्षबलेनान्यवृत्तिजातेरेव परम्परया तत्र वृत्तिकल्पनमिति भावः॥

---

1. 'यत्न०' B. 2. 'लक्ष्यत्वाभिमतेन समानकालीनत्वम्; स्व-पदेन लक्ष्यत्वाभिमतम्। तथा च तदवच्छेदकं यच्छरीरं तत्साजात्यं तादृशजात्येत्यर्थः' इत्यधिकम् A. 3. 'तात्पर्यार्थः' A.

4. 'अनुभवजन्या स्मृतिहेतुर्भावना'। 'अन्यथाकृतस्य पुनस्तदवस्थापादकः' स्थितस्थापक इति तर्कसंग्रहः। स्थितस्थापकः—'स्पर्शवद्विशेषवृत्ति'रिति तर्कभाषा। भाषापरिच्छेदे तु—

'स्थितिस्थापकः संस्कारः क्षितौ केचिच्चतुर्ष्वपि। १५८। इति—अत्र सिद्धान्तमुक्तावली—

'चतुर्षु क्षित्यादिषु स्थितिस्थापकं केचिन्मन्यन्ते तदप्रमाणमिति भावः'। इति।

5. 'व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः'॥

इति द्रव्यकिरणावल्यामुदयनाचार्याः। 'परस्परात्यन्ताभावसमानाधिकरणयोरेकत्र समावेशः' सङ्कर इति। 6. '०प्रत्यय०' A.

१४६। आरोपितनीलरूप इति। आरोपितं नीलरूपं यस्मिन्नालोकाभावे स इत्यर्थः। इदं च तमसो व्यावर्तकमेव न स्वरूपम्। तेनाऽऽरोपगर्भत्वे तमसश्चाक्षुषत्वानुपपत्तिरित्यपास्तम्। मध्याह्नादिवर्तिनमालोकाभावं व्यवच्छेत्तु'मारोपिते'त्यादि। तेन यादृशालोकाभावे नीलरूपारोपः स एव तम इत्युक्तं भवति ॥

१४७। ज्ञानसम्बन्धो ज्ञाततेत्युक्तम्। तत्सर्वज्ञानेष्वात्मनोऽपि ज्ञातत्वप्रसङ्गादयुक्तमित्यत आह—[1]'ज्ञानसम्बन्ध इत्यादि। ज्ञान[2]संबन्धनिरूपणप्रसङ्गात् प्रमासंबन्धरूपं प्रमेयत्वमपि निरूपयति—तत्त्वज्ञानेति। तत्त्वज्ञानेन प्रमया अवच्छेद्यत्वं विषयीक्रियमाणत्वमित्यर्थ इति केचित्। अन्ये त्वेतद्ग्रन्थानुरोधेनैवमन्यस्यापि पदार्थस्य सत इत्यादिग्रन्थे 'पदार्थ'पदस्थाने 'प्रमेय'पदं पठन्तस्तदाकाङ्क्षानिवर्तकत्वेनैतद्ग्रन्थप्रवृत्तिरित्याहुः ॥

१४८। संख्याया गुणान्तर्भावे गुणादिषु संख्याव्यवहारानुपपत्तिरित्यत आह—गुणादिषु चेति। संख्याप्रत्यासत्तिः [3]संख्यैकार्थाभिधेयता मुख्य एव किं न स्यादित्यत आह—अत एवेति। सर्वनाम्नां बुद्धिस्थपरामर्शकुशलत्वाद् ग्रन्थकर्तुर्बुद्धिस्थं संख्यापदार्थान्तरकल्पनागौरव'मिदमो'ऽर्थः ॥

१४९। कार्योत्पादकत्वमिति। कार्यं प्रत्यनन्यथासिद्धनियतपूर्ववर्तिजातीयत्वम्। [4]बहुवक्तव्यत्वान्नेदमिह प्रपञ्च्यते ॥

१५३। रूपरसगन्धेति। यद्यपि द्रवत्ववेगस्थितिस्थापका न सार्वत्रिकास्तथाऽपि तेषां सर्वेषां पृथिवीत्वसामानाधिकरण्यमात्रं तात्पर्यम्। ननु जलसंपृक्ते माषचणकचूर्णादौ चिक्कणतात्मा स्नेहोऽप्यस्ति; न च जलगत एव माषचूर्णादिभिरभिव्यक्तः प्रतीयते घृतेनेव कुङ्कुमगन्ध इति वाच्यम्, विपर्ययस्यापि सुवचत्वादिति चेत्? उच्यते—पिण्याकचणकचूर्णादौ जले च तदभ्युपगमे तत्समवायितावच्छेदकाननुगमप्रसङ्गात् स्नेहोत्कर्षाधायकचणकचूर्णादिनिरपेक्षस्य जलस्येव तन्निरपेक्षस्येतरस्य संग्रहाजनकत्वेनोभयत्र तत्कल्पने मानाभावाच्च जल एव तत्कल्पनेति परिशेषादितरस्य व्यञ्जकतामात्रं परिकल्प्यत इति। रूपरसस्पर्शेति। न च सांसिद्धिकद्रवत्वादेव संग्रहसंभवे किं स्नेहेनेति वाच्यम्, चणकचूर्णादिना जलतद्द्रवत्वयोरुत्कर्षानाधानादन्यस्य च संग्रहहेतोरभावे तदुत्कर्षस्याऽऽकस्मिकत्वप्रसङ्गात्। आलोकादेरद्रवत्वेऽपि सर्वेषाममीषां तेजस्त्वसामानाधिकरण्यमात्रे तात्पर्यम् ॥

१५४। असमवेतमेवेत्यन्तं स्पष्टम् ॥

१५५। [5]विनाशस्त्विति। क्वचित् समवायिनाशात् क्वचिदसमवायिनाशात् क्वचिदुभाभ्यां चेत्यर्थः। न च व्यभिचारादकारणत्वप्रसङ्गः, निमित्तेतरकारणनाशत्वेन कारणत्वे तदभावात्। यत्तु 'तथा उभयनाशजन्यद्रव्यनाशे का गति'रित्याक्षिप्य 'पृथगेव तत्तद्व्यक्त्योः कार्यकारणभावग्रह'

1. 'प्रमेयत्वलक्षणो धर्मः सर्वशास्त्रप्रसिद्धः श्रूयते, स क इत्याशङ्क्याऽऽह…' इति जिनवर्द्धनः। 2. '०सम्बन्ध०' नास्ति A. 3. '०भिधेयता' A. 4. 'बहुव्यक्तत्वा०' B. 5. (कर्म) 'उत्तरसंयोगात् कदाचिदाश्रयनाशाच्च नश्यति' इति तर्ककौमुदी।

इति कुसुमाञ्जलिप्रकाशकृतोक्तम्, तच्चिन्त्यम्, तत्राप्युक्तरूपेणैव कारणत्वसंभवात्। न हि कुलालद्वयकृते दैवान्मिलितदण्डद्वयकृते वा घटे वैजात्यम्। न वा कुलालदण्डान्तरव्यक्त्योरकारणत्वमविनिगमात्। न वा द्वित्वेन कारणत्वं किन्तु कुलालत्वेन दण्डत्वेनैवेति सिद्धान्त इति। अन्योन्याभावस्य प्रतियोगिविनाशकारणादिति। अन्योन्याभावत्वं ध्वंसप्रतियोगिवृत्ति ध्वंसेतराव्याप्यवृत्त्यप्रतियोगिकप्रतियोगिसमानाधिकरणाभाववृत्तित्वात् प्रागभावत्ववदित्यनुमानादनित्यत्वसिद्धाविति शेषः। न च तस्यानित्यत्वे विनष्टयोर्घटपटयोरभेदापत्तिरिति, स्वरूपाभावेन [1]स्वरूपैक्य[2]रूपाभेदापादनानुपपत्तेः। अन्योन्याभावाभावापादने चेष्टापत्तिरिति। न चैकरूपवद्विनाशे तत्प्रतियोगिकसामान्यावच्छिन्नप्रतियोगिकान्योन्याभावविनाशे वायू रूपवान्न वेति संशयानुपपत्तिः, तन्नाशे तन्नास्तितानिश्चयादिति वाच्यम्, ग्रन्थकृता तस्याप्यनभ्युपगमात्। नन्वाश्रयनाशादाश्रितकार्यनाशदर्शनादन्योन्याभावस्यापि अधिकरणनाशादेव स[3] युक्तो न प्रतियोगिविनाशकारणात्; किं च प्रागभावनाशस्य प्रतियोगिसामग्रीजन्यत्वे प्रतियोग्यात्मकत्ववदन्योन्याभावनाशस्य प्रतियोगिविनाशसामग्रीजन्यत्वे प्रतियोगिविनाशतादात्म्यापत्तिः, तदभिन्नसामग्रीजन्यत्वादिति चेत्? तत्र न तावदाद्यो दोषः, तत्राऽऽश्रयशब्देन समवाय्यभिधानात्, अन्यथा ध्वंसस्यापि विनाशप्रसङ्गात्। अत्रैव तथात्वशङ्कायाश्च प्रत्यधिकरणमेकप्रतियोगिकान्योन्याभावभेदप्रसङ्गप्रतिहतत्वात्। नापि द्वितीयः, प्रागभावादिभेदेन सामग्रीभेदासिद्धेः। प्रतियोगिविनाश एव कारणं तस्मादिति वा तदर्थकरणात्॥

१५६। गुणस्य त्विति। क्वचिदपाकजरूपादौ सजातीयं रूपादि। क्वचित्पाकजरूपादौ विजातीयं [4]संयोगादि। क्वचित्संयोगादौ कर्मेत्यर्थः। सर्वेषामिति, कार्याणामिति शेषः॥

१५७। ननु भावकार्याणामिव अन्योन्याभावध्वंसयोरपि कुतो न समवाय्यसमवायिकारणजन्यत्वम्? असमवेतत्वादिति चेत्, न; तत्रापि प्रश्नतौल्यात्॥

१५८। किं च उद्देशलक्षणवत्परीक्षाऽपि कर्तुमुचिता कुतस्त्यक्ता? 'ये चापरे भेदा' इत्यादिना सामान्यतो भेदाः प्रतिज्ञातास्तल्लक्षणान्यपि वाच्यानि कुतो नोक्तानि तत्राऽऽह—अपरं सकलमिति। ननु विशिष्टं विशेषणविशेष्यतत्संबन्धात्मकमुक्तम्, तदयुक्तम्; वैशेषिकमते समवायस्यातीन्द्रियतया तदघटितवैशिष्ट्यस्याप्यतीन्द्रियत्वेन ऐन्द्रियकविकल्पानां विशिष्टविषयताप्रयुक्तसविकल्पकत्वाभावप्रसङ्गादित्याशङ्क्य [5]वैशेषिकाभिमतं वैशिष्ट्यमाह—वैशिष्ट्यमन्यव्यावृत्तिरिति॥

१५९। ननु व्यावृत्तेरेव वैशिष्ट्यपदार्थत्वे तद्धेतुताप्रयुक्तं विशेषणत्वं व्यावर्तकमात्रस्य स्यात्। तथा च विशेषणोपलक्षणविभागानुपपत्तिरित्यत आह—समानाधिकरणमित्यादिना। जटाभिस्तापस इत्यादौ तृतीयोपलक्ष्यमाणोपलक्षणभावे जटादावतिव्याप्तिनिरासाय 'समानाधिकरण-'मिति। विशेष्यव्यावृत्त्यै 'व्यावर्तक'मिति॥

---

1. 'स्वरूप०' नास्ति A. 2. '०रूपापादना०' A. 3. 'संयुक्तो' A. 4. 'तेजःसंयोगादि' A. 5. 'वैशेषिकमतं' B.

१६० ।* विशेषणलक्षणप्रविष्टतया अन्तरा सामानाधिकरण्यं निरूपयति—एकेति । एकत्वं सारूप्यम् । तच्च व्यावर्त्यवाचकपदविभक्त्या । एतल्लक्षणपक्षे 'जटावान् तापस' इति प्रयोगकाले सा पारिभाषिकं विशेषणमेव । तृतीयाप्रयोगकाले तूपलक्षणमेवेति द्रष्टव्यम् । उपलक्षणलक्षणापेक्षितं वैयधिकरण्यं लक्षयति—भिन्नेति । भेदोऽत्र वैरूप्यम् ॥

१६१ । एवं विशेषणोपलक्षणलक्षणापेक्षिततया पारिभाषिके शाब्दसामानाधिकरण्यवैयधिकरण्ये निरूप्यान्यदपि [1]यौक्तिकमेकाश्रयवृत्तित्वं नामार्थं सामानाधिकरण्यमस्तीति सूचयितुमधिकरणत्वं लक्षयति—जातिप्रत्यासत्तिरिति । न चोपाध्याश्रयेऽव्याप्तिः, तस्यापि परम्परयोपाधितापन्नजात्याश्रयत्वात् । अन्ये तु जातिपदं धर्ममात्रोपलक्षणमित्याहुः । एवं च समानमेकमधिकरणमाश्रयो यस्येति ऐकाधिकरण्यात्मकमार्थं सामानाधिकरण्यमुक्तं भवति । एवं वैयधिकरण्यमपि । एते च विशेषणोपलक्षणलक्षणयोः प्रत्याय्यव्यावृत्त्या सह द्रष्टव्ये । तेन प्रत्याय्य-[2]व्यावृत्त्यैकाधिकरणत्वे सति तद्व्यावृत्तिबुद्धिजनकविशिष्टज्ञानावच्छेदकं विशेषणमिति, तद्व्यधिकरणत्वे सतीदृशमुपलक्षणमिति च पर्यवस्यति । अत्राप्यधिकरणं देशकालोभयरूपं विवक्षितम् । तेन यत्राऽऽश्रये यत्कालीना व्यावृत्तिः प्रत्याय्या तत्कालीनतदधिकरणवृत्ति विशेषणम्, अन्यदुपलक्षणम् । एवं काककालीनगृहव्यावृत्तिपरे प्रयोगे काको विशेषणमेव, सामान्यतो गृहव्यावृत्तिपरे तूपलक्षणमेव स इति निष्कर्षः ॥

१६२ । बुद्धिस्थमन्यदप्याह—समस्तेत्यादिना । विद्यमानयोरिति, पृथगिति शेषः ; अन्यथाऽविद्यमानयोः संबन्धस्यैवाभावेन विद्यमानपदवैयर्थ्यप्रसङ्गात् । अविद्यमानयोरिति, अत्रापि पृथगिति शेषो द्रष्टव्यः ; अन्यथाऽविद्यमानयोः संबन्धानुपपत्तेरसंभवप्रसङ्गात् । ज्ञानात्मनोर्विषयविषयिभावं व्यावर्तयितुं 'माधाराधेये'ति ॥

१६३ । अपरं तु सकलं शास्त्रं सुबोधमित्यत्रोपलक्षितं शास्त्रं लक्षयति—[3]श्रेयःसाधनेति, मोक्षसाधनाभिधायकमित्यर्थः । साधनपदं च प्रयोजकमात्रपरम्* ॥

---

1. 'यौगिक०' A. 2. '-व्यावृत्त्यैका०' A. 3. 'निःश्रेयःसाधनेति' A.

* क्वचित्—'क्षणमात्रावस्थायि क्षणिकत्वम् । क्षणस्तु विभागानन्तराद्विभागप्रागभावसम्बन्धकर्मावच्छिन्नः कालः । प्रत्यक्षमर्थक्रियाभेदो वा क्षणिकत्वम् । श्रवणात्मकस्तु शब्दः संयोगाद् विभागाच्छब्दाज्जायते । तत्रोपान्त्यः शब्दः क्षणिकः । शब्दोऽम्बरगुणः । स्पर्शः पृथिव्यप्तेजोवायुगुणः । रूपं पृथिव्यप्तेजोगुणाः । सुखादय आत्मगुणाः । यत एवायुतसिद्धाः समवेतत्वेन वर्तन्ते । असम्बद्धयोर्विद्यमानत्वमयुतसिद्धिः । विद्यमानयोरसंबन्धो युतसिद्धिः'—इति मूलमधिकम् ।

मूलग्रन्थान्ते च— 'निष्कलिमुक्तामय उत्तमद्युतिः सदात्मवत्स्वच्छ एष हारः ।
सुवर्णसूत्रग्रथितो मनीषिणां मनोहरः कण्ठमलङ्करोतु ॥

यमनियमस्वाध्यायधारणासमाधिधोरणीमन्थरनयन-पाशुपताचार्य-श्रीभावविद्येश्वरविरचिता वाग्विद्याविलास-विचित्रवादिसार्थपरार्थचमत्कृत्याश्चर्यमयी पारावारन्यायवैशेषिकमहाशास्त्रसारसमुद्धरणशीलविरचिता सप्तपदार्थी समाप्ता'—इत्यधिकमुपलभ्यते ।

स्वग्रन्थस्य प्रचयमाशास्ते—सप्तद्वीपेति। यद्यप्यष्टौ धराधरा इति प्रसिद्धिस्तथाऽपि नाधिकतद्व्यावृत्तिर्विवक्षिता, किं त्वष्टान्तर्गतसप्तावस्थानकाले ग्रन्थप्रचयाविच्छेदः। सप्तपदं तु प्रासानुरोधेन। सप्तपदार्थीति। ग्रन्थस्य [1]सप्तपदार्थीभिन्नत्वेऽपि प्रतिपाद्यप्रतिपादकाभेद[2]-विवक्षया तद्व्यपदेश इति सकलमविकलङ्कम्॥

गुरुशार्ङ्गधरेण बोधबीजं यदनन्ते निदधे बुधास्तदीयम्।
इममङ्कुरमादरः फले चेन्न [3]विगृह्णीत पदार्थचन्द्रिकाख्यम्॥ इति।

श्रीमदशेषविद्यापारग[4]जगद्गुरुशेषानन्तविरचिता [5]सकलबालबोधिका सप्तपदार्थीटीका[5]* [6]पदार्थचन्द्रिकाख्या समाप्ता॥

---

1. '०पदार्थाभिन्नत्वेऽपि' A. 2. '-भेद०' B. 3. 'विगृह्णातु' A. 4. '०जगद्गुरु०' नास्ति A. 5. 'सकल······टीका' नास्ति A. 6. 'पदार्थचन्द्रिका' A.

श्रीगणेशाय नमः ॥

# बलभद्र-सन्दर्भः

## ( बलभद्र-कृता सप्तपदार्थी-टीका )

मत्वा ढुण्ढिपदद्वन्द्वं सर्वकामार्थसिद्धये ।
अनल्पमतिसंभूत्यै बलभद्रः समातनोत् ॥

प्रारिप्सितप्रतिबन्धकदुरितध्वंसकामो विशिष्टशिष्टाचारानुमितागमबोधितकर्त्तव्यताकं [1]मङ्गलं शिष्यान् शिक्षयितुं निबध्नाति—हेतव इति । जगतां कार्याणाम्, तथा चेश्वरसद्भावे प्रमाणं सूचितम् । यद् यत् कार्यं तत् तत् सकर्तृकमिति व्याप्तिरेव-कारेण सूचिता । ततश्च व्याप्येन कार्यत्वेन प्रयोज्यायां सकर्तृकत्वानुमितौ जगद्विषयकसकर्तृकबोधार्थं 'जगतामि'ति बहुवचनम् । एतच्छास्त्रसाध्यपरमपुरुषार्थसाधारणजनकतां दर्शयति—संसारार्णवेति । दुःखरूपसमुद्रनिवर्त्तकायेत्यर्थः । विश्वोत्पत्तिस्थानतामाह—प्रभव इति । विद्या च सर्वविद्याधिष्ठातृत्वेन, तत एव ग्रन्थनिर्वाहकं ज्ञानम् इच्छाविषयि कर्तृत्वमिति भावः । संसारे दृष्टस्य जनकतां विशेषरूपेण दर्शयति—शम्भवे इति । परमगुरुत्वं दर्शयति—गुरवे नम इति ॥

१ । पदार्थौ द्विविधः भावोऽभावश्चेति सामान्यत उद्देशं मनसि निधाय सामान्यलक्षणमाह—प्रमितीति । इदमुपरञ्जकं लक्षणम्, न तु व्यावर्त्तकम् ; व्यावृत्तिप्रतियोगिनो विरहात्, तदुपरक्तस्य तद्वैशिष्ट्यस्य भ्रमविषयत्वात् । तत्रातिव्याप्तिवारणाय 'प्रमिती'ति ॥

२ । अत्र वस्तूनां लक्षणत्वात् [2]सप्तैवेत्येव-कारो निश्चयार्थः, न तु व्यवच्छेदार्थः ; व्यवच्छेदप्रतियोगिनोऽभावात् ॥

३ । [3]नवैवेति । नवातिरेके प्रमिते सर्वत्र प्रमितस्य द्रव्यत्वनिषेध एव-कारार्थः ॥

1. 'मङ्गलञ्च विघ्नध्वंसद्वारकसमाप्तिफलकं कर्म, तच्च देवतानमस्कारादिरूपमेव । स्वतःसिद्धनिज्ञाभावस्थलेऽपि सामान्यतो गृहीतस्य विघ्नध्वंसद्वारकत्वस्यानपायात् नमस्कारादीनां तादृप्येणैव विघ्नध्वंसद्वारकत्वप्रतिपत्तेर्नाव्याप्तिरिति दिक्' इति वैशेषिकसूत्रोपस्कारे शङ्करमिश्राः ।

2. 'धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्' इति कणादसूत्रम् । तत्रोपस्कारः—

'अत्र च द्रव्यादिपदार्थानामुद्देश एव विभागः पर्यवसन्नः, स च न्यूनाधिकसंख्याव्यवच्छेदफलकत्वेन षडेव पदार्था इति नियमः पर्यवस्यति' ।

3. इदानीमपवर्गभागितया सर्वपदार्थाश्रयतया च प्रथमोद्दिष्टस्य द्रव्यपदार्थस्य विभागं विशेषोद्देशञ्च कुर्वन्नाह—तत्र द्रव्याणि पृथिव्यप्······नवैवेति ।

४। [1]चतुर्विंशतिरेवेति। अत्रापि प्रमिते गुणचयेऽभावात्मकलघुत्वादौ गुणत्वनिषेध एव-कारार्थः ॥

५। [2]पञ्चैवेति। इह गमनादयो भ्रमणान्तर्भूता न तु गमनप्रतियोगिकेतरभेदानुमितिजनकोपाध्यवच्छिन्नाः, एव-कारार्थश्च एतदन्तर्भूतकर्मत्वप्रतिषेधः। सर्वत्र न्यूनव्यवच्छेदार्थ एव-कारो बोध्यः ॥

६। सामान्यमिति। यद्यप्ययं न विभागः, किन्तु परमपरमित्येव, तथाऽपि स्वमतावष्टम्भेनैव ( परापरं चेतीति ? ) ॥

८। एक एवेति। स्वान्योन्याभावासमानाधिकरणपदार्थविभाजकोपाधिमत्त्वमित्यर्थः ॥

९। अभावस्त्वित्यति। यन्मतेऽभावो द्विविधः, संसर्गाभावोऽन्योन्याभावभेदात्; संसर्गाभावस्त्रिविधः, प्रागभावप्रध्वंसाभावात्यन्ताभावभेदाद् इति विभागः, तन्मतेऽभावव्याप्यं संसर्गाभावत्वं संसर्गाभावत्वव्याप्यं प्रागभावत्वादि। एतन्मते संसर्गाभावत्वं कस्यचिन्मते सामयिकाभावभेदोऽस्ति। उत्पत्तिविनाशशाली तुरीयसंसर्गाभाव इति केषाञ्चिन्मतम्। अन्योन्याभावोऽपि स्वरूप-भेद-पृथक्त्व-वैधर्म्यादिभेदाच्चतुर्विधः ॥

१३। अनारब्धं द्रव्यं येन स तथोक्तः ॥

१५। [3]कालस्त्वित्यति। उत्पत्त्याद्युपहितस्त्रिविधः ॥

१६। एकादशविधेति। यद्यप्युपाधिभेदेनापि दश [4]दिश इत्येव प्रसिद्धिस्तथाऽपि मतभेदेनार्थविभाग इति ॥

---

1. गुणत्वेन रूपेण गुणानां सर्वद्रव्याश्रितत्वं द्रव्याभिव्यङ्ग्यत्वं द्रव्याभिव्यञ्जकत्वञ्चेति द्रव्यानन्तरं गुणानामुद्देशं विभागञ्चाऽऽह—गुणास्तु रूपरस······चतुर्विंशतिरेवेति।

2. कर्मणां द्रव्यजन्यतया गुणजन्यतया च रूपवद्द्रव्यसमवायाच्च प्रत्यक्षत्वेति द्रव्यगुणाभिधानानन्तरं कर्मोद्देशविभागावाह—कर्माणि उत्क्षेपण······पञ्चैवेति।

'एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम्'—वै० सू० १-१-१७।

3. 'नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति'—वै० सू० २-२-९।

'नित्येष्वभावादनित्येषु भावादिति नित्येषु आकाशादिषु युगपज्जातः चिरं जातः क्षिप्रं जातः इदानीं जातः दिवा जातः रात्रौ जातः इत्यादिप्रत्ययस्याभावात्, अनित्येषु घटपटादिषु यौगपद्यादिप्रत्ययानां भावात्, अन्वयव्यतिरेकाभ्यां कारणं काल इत्यर्थः। न केवलं यौगपद्यादिप्रत्ययजनकत्वात् कालस्य सर्वोत्पत्तिमन्निमित्तकारणत्वम्, अपि तु पुष्पफलादीनां हैमन्तिक-वासन्तिक-प्रावृषेण्यादिसंज्ञाजनकत्वादप्येतदवसेयम्' इति शङ्करमिश्राः।

4. 'इत इदमिति यतस्तद् दिश्यं लिङ्गम्'—वै० सू० २-२-१०।

'इतोऽल्पतरसंयुक्तसंयोगाश्रयादिदं बहुतरसंयुक्तसंयोगाधिकरणं परम्, इतश्च संयुक्तसंयोगभूयस्त्वाधिकरणादिदं संयुक्तसंयोगाल्पीयस्त्वाधिकरणमपरमिति नियतदिग्देशयोः समानकालयोः पिण्डयोर्यतो द्रव्याद् भवति सा दिगित्यर्थः' प्रशस्तपादभाष्ये उपस्कारः।

२२। ननु चित्रं रूपं स्वीक्रियताम्, द्रव्यचाक्षुषत्वानुरोधेन, रसस्यापि चित्रत्वे मानाभावः ? न च रसस्य व्याप्यवृत्तित्वाद्धरीतक्यादौ रसप्रतीतिर्न स्यादिति वाच्यम्, अवयवैकार्थवृत्तित्व-सम्बन्धेन प्रतीत्युपपत्तेरिति चिन्त्यमेतत् ॥

२३। संख्येति। संख्या एकत्वद्वित्वादिभेदेन नानेति विभाग इति केचित्। परिमाणमिति। केचिदणुत्वमहत्त्वदीर्घत्वादिभेदाच्चतुर्विधमिति विभाग इति। ननु अणुमहत्त्वे दीर्घ एव स्वीक्रियेतां किमधिकस्वीकारेणेति चेन्न; तत्तद्भिन्नव्यवहारानुरोधेन तदुपाध्यव-च्छिन्नतत्तत्परिमाणस्वीकारात्। अणुत्वासमानाधिकरणं महत्त्वमिति। पृथक्त्वमिति। एकपृथक्त्वम् एकपृथक्त्ववृत्ति द्विपृथक्त्वाद्यनेकवृत्तीत्यर्थः। [1]संयोग इति। यद्यपि कर्मजो द्विविधः उभयकर्मजोऽन्यतरकर्मजश्चेति विभागः कर्तुं युज्यते, तथाऽप्येतन्मते उभयकर्मत्वेन कारणता; अतो न तादृशविभक्तविभाग इति ध्येयम्। कारणता चाविनश्यदवस्थकर्मत्वेनैव, लाघवात्। न च कर्मत्वेनैवाऽऽस्तामिति वाच्यम्, तथा सति हि जनितसंयोगेन तेन विनश्यदव-स्थेन संयोगो जन्येत। न च स्वरूपयोग्यताऽस्त्येव फलोपधानन्तु न भवति, कारणान्तराभावादिति वाच्यम्; दृष्टसकलकारणस्य विद्यमानत्वात्, अदृष्टविलम्बेन कार्यविलम्बस्याशक्यत्वात्। अदृष्ट-विलम्बेन कार्यविलम्बः क्वचिदेव। तत्रापि दृष्टान्तिकर्यविरह एव कल्प्यते। विभाग इति। तत्रापि पूर्ववन्न विभक्तविभाग इति ज्ञेयम् ॥

२४। वैशेषिकमते द्वयमेव प्रमाणं ततश्च प्रमा द्विविधैवेति मनसिकृत्याऽऽह—प्रत्यक्षमनु-मितिश्च। प्रत्यक्षप्रमाणविभागमाह—प्रत्यक्षमिति। यद्यपि स्वमते भगवान्न प्रमाणं तथाऽपि साम्प्रदायिकमतेनाऽऽह—ईश्वरश्चेति ॥

२७। यद्यपि प्रमापदेशाविषयाः पञ्च हेत्वाभासास्तथाऽपि मतभेदेनानैकान्तिकान्तर्भूता-ऽसाधारणरूपानध्यवसितत्वप्रदर्शनपुरःसरं विभागमाह—[2]असिद्धेति ॥

---

1. 'अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः' —वै० सू० ७-२-९ ।

'संयोगे संयुक्तप्रतीतिरबाधिता प्रमाणं कार्याणि च, अवयवसंयोगेषु द्रव्यम् अग्निसंयोगे पाकजा रूपादयः प्रचये परिमाणविशेषः भेर्याकाशसंयोगे शब्द इत्याद्यूह्यम्। न चाविरलोत्पत्तिरेव संयोगः, क्षणभङ्ग-परिणामयोर्निरासात् 'अप्राप्तिपूर्विका प्राप्तिः संयोगः' इत्युपस्कारः।

2. 'अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेशः'—वै० सू० ३-१-१५ ।

'अप्रसिद्ध इति अव्याप्तोऽगृहीतव्याप्तिको विपरीतव्याप्तिकश्च विरुद्धः, एतेन व्याप्यत्वासिद्धविरुद्धयोः संग्रहः; असन् इति पक्षेऽसन् अपक्षधर्म इत्यर्थः, स च क्वचित् स्वरूपविरहात् क्वचित् सन्दिग्धसिद्धसाध्यपक्षयो-रभावात् सिद्धसाधने; सन्दिग्ध इति पक्षे साध्यतदसत्त्वकोटिकसंशयजनकः, स च संशयः समानधर्मदर्शनात् क्वचिदसाधारणधर्मदर्शनात् क्वचित् पक्ष एव हेतोः साध्यतदभावसाहचर्यदर्शनात्; आद्यः साधारणानैकान्तिकः, द्वितीयस्त्वसाधारणानैकान्तिकः, तृतीयोऽनुपसंहारी' इति शङ्करमिश्राः।

२८। तर्केति। तर्क उत्कटकोटिकसंशयः, न तु मुख्यार्थस्तर्कशब्दस्य, विपर्ययान्तर्भूतत्वात् ॥

२९। सविकल्पकेति। ननु निर्विकल्पकं कथमप्रमान्तर्भूतम्? तस्य निःप्रकारकत्वादिति चेत्, न; प्रमात्वाभाववज्ज्ञानत्वस्य तल्लक्षणत्वादिति केचित्, तन्न; तदा प्रमायामप्रान्तर्भावापत्तेः। न च यत्र निर्विकल्पके प्रमात्वात्यन्ताभावो नास्ति तस्यैव प्रमायामन्तर्भाव इति वाच्यम्, क्वचित् प्रमात्वं निर्विकल्पकेऽस्ति क्वचिन्नास्तीति विनिगन्तुमशक्यत्वात्। तथा च यदि हि भ्रमभिन्नत्वसमानाधिकरणज्ञानत्वं प्रमालक्षणं तदा प्रमायामेवान्तर्भावः। यदि च तद्वति तत्प्रकारज्ञानत्वादिकं लक्षणं तदा प्रमाबहिर्भूतमेवेति ॥

३०। एवमिति। 'प्रमायामप्रमायां चान्तर्भावः' इत्यत्रानुषङ्गः ॥

३१। ऊहेति। नामान्तरेणोहशब्देनोक्तकोटिसंशयपरिग्रहः, न तु तर्कपरिग्रहः ॥

३२। 'दुःखमपीति। दुःखत्वमसाधारणदुःखकारणाधर्मप्रयोज्यमित्यर्थः। यद्वा, दुःखकारणमात्रप्रभवं दुःखं द्विविधं नरकरूपं सांसारिकञ्चेति विशेषः। इच्छेति। साध्यविषया स्वर्गादिविषयेत्यर्थः। साधनविषया चेति दर्शादिविषयेत्यर्थः। प्रयत्नेति। विहितं नारायणस्मरणादि, निषिद्धं ब्राह्मणनिन्दादि। एतदुभयभिन्न उदासीनो जलताडनादिस्तद्विषयक इत्यर्थः ॥

३३। गुरुत्वमिति। समाहारः समुदायस्तन्निरूप्यं धान्यादिगुरुत्वमित्यर्थः। व्यासज्यवृत्तित्वं निराचष्टे—एकावयवविनिष्ठञ्चेति। प्रत्येकं पर्याप्तमित्यर्थः। अन्यथा, अन्त्यावयविनि न वर्तत इति प्रतीत्यापत्तेः ॥

३५। स्नेहेति। स्वाभाविकः साक्षात्सम्बद्धो जलादौ, औपाधिकः परम्परासमवेतस्तैलादौ ॥

३७। प्रवर्त्तक इति, यागादिविषयप्रवृत्तिसाध्य इत्यर्थः। अत्र धर्मः फलावसानः कीर्तनादिना नाश्यश्चेति बोध्यम्। निवर्तक इति। कलञ्जभक्षणादिविषयनिवृत्तिसाध्य इत्यर्थः ॥

---

1. 'इष्टानिष्टकारणविशेषाद् विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः (वै० सू० १०-१-१) इति कणादः।

'अनुग्रहलक्षणं सुखं स्रगाद्यभिप्रेतविषयसान्निध्ये सति इष्टोपलब्धीन्द्रियार्थसन्निकर्षाद्धर्माद्यपेक्षादात्ममनसोः संयोगाद् यदनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत् सुखम्' इति प्रशस्तपादः। 'तदिदमतीतेषु स्रक्चन्दनादिषु स्मृतिजमनागतेषु सङ्कल्पजम्, गौतमीये सूत्रे सुखापरिगणनं वैराग्यार्थं सुखमपि दुःखत्वेन भावयतो वैराग्यं स्यादितदर्थमिति'—शङ्करमिश्राः। अतः 'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्' इति गौतमीये प्रमेयविभागसूत्रे सुखस्यानभिधानाद् दुःखाभिन्नमेव सुखमिति भ्रमो न कर्त्तव्यः।

३८। [1]'अवर्णात्मक इति। पर्युदासवृत्त्यात्मक इति, न तु वर्णात्मक इत्यर्थः॥

३९। अन्य इति। परमाण्वादिनिष्ठाः परिमाणादयो नित्या अनित्या घटादिनिष्ठा इत्यर्थः। बुद्धीच्छेति। वासुदेवनिष्ठा बुद्धीच्छादयो नित्या व्यापकाः, अस्मदादिनिष्ठा अव्यापका अनित्याश्चेत्यर्थः। अन्ये इति, रूपादयो व्याप्यवृत्तय इत्यर्थः॥

४३। अन्यैरधिकत्वेनाभिमतानां पुनरग्रहपरिहाराय स्वीकृतपदार्थेऽन्तर्भावं दर्शयति—मध्यत्वमित्यादिना ग्रन्थेन॥

५१। यद्यप्याकाशपरिमाणादिरूपनित्यानां कारणत्वं नास्तीत्यसम्भवस्तथाऽपि तद्व्यतिरिक्तानां नित्यानाम् इति सङ्कोचे स न कोऽपि दोषः। यद्वा, योगिज्ञानं विषयजन्यमिति मते तेषामपि कारणत्वं नास्त्येवेति बोध्यम्॥

५२। [2]तत्त्वमिति। यद्यपि सर्वस्यापि प्रमाविषयवृत्तिधर्मस्तत्त्वमिति तात्पर्यार्थः, न त्वभावप्रतियोगिनो व्यावर्तकस्य लक्ष्यत्वात्, अलक्ष्ये केवलान्वयिनि अतिव्याप्त्यलक्षणं प्रमाविषयवृत्तित्वविशेषणं व्यर्थं चेति चेत्, न; व्यतिरेकिधर्मस्तत्त्वमिति लक्षणस्याभिमतत्वात्॥

५४। तत्त्वज्ञानोत्पाद्येति। तत्त्वज्ञानोत्पाद्यो यो मिथ्याज्ञानस्य दुःखकारणस्य ध्वंसस्तेन सह समानाधिकरणो मिथ्याज्ञानकार्यस्य समस्तदुःखाभावः स मोक्ष इत्यर्थः। अथवा ‘सं’प्रतियोगि‘कास्त’शब्देन ध्वंसो गृहीतः, तस्य सम्यक्त्वं स्वसमानाधिकरणप्रतियोग्यसमानकालीनत्वम्, तच्च एतादृशध्वंसप्रतियोगित्वधर्मत्वम्; एवञ्च तत्त्वज्ञानोत्पाद्यो यश्चरमदुःखध्वंसः स मोक्ष इत्यर्थः। लक्षणं समानाधिकरणदुःखासमानकालीनभिन्नदुःखध्वंसत्वं ज्ञातव्यम्, अतो न वैयर्थ्यम्॥

५६। तत्रेति। अन्वयिन्यतिव्याप्तिवारणाय विशेष इति। को विशेष इत्याकाङ्क्षायामाह—केवलव्यतिरेकीति। तथा च केवलव्यतिरेकित्वमेव विशेष इत्यतो न वैयर्थ्यम्॥

५९। [3]गुणवदिति। यद्यपि घटादौ प्रथमक्षणे लक्षणमव्यापकं तथाऽपि गुणात्यन्ताभाव-

---

1. ‘श्रोत्रग्रहणो योऽर्थः स शब्दः’ इति कणादसूत्रम् ( वै० सू० २-२-२१ )। अत्रोपस्कारः—‘श्रोत्रं ग्रहणं ग्राहककरणं यस्य स श्रोत्रग्रहणः, अर्थ इति धर्मितार्थः, तथा च शब्दवृत्तिधर्मेषु श्रोत्रग्राह्येषु शब्दत्वतारत्वादिगुणत्वसत्तादिषु नातिव्याप्तिः। अर्थपदेन धर्मिपरेण जातिधर्मित्वमभिप्रेतम्। अतः स्फोटनामा शब्दसमवेतः शब्दो नास्तीति सूचितम्’।

2. तत्त्वज्ञानमात्मतत्त्वसाक्षात्कार इह विवक्षितस्तस्यैव सवासनमिथ्याज्ञानोन्मूलनक्षमत्वात्, ‘तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय’ इत्यत्र ‘द्वे ब्रह्मणी वेदितव्ये’ इत्यत्र च वेदनपदस्य साक्षात्कारपरत्वात्।

3. द्रव्यं गुणादिभ्यो भिन्नं गुणवत्त्वात्, यन्न गुणादिभ्यो भिद्यते तन्न गुणवत्, यथा गुणादीति। गुणवत्त्वं यद्यप्याद्यक्षणेऽवयविनि नास्ति तथाऽपि गुणात्यन्ताभावविरोधिमत्त्वं विवक्षितं गुणप्रागभावध्वंसयोरपि गुणात्यन्ताभावविरोधित्वात्।

विरोधिना गुणवत्प्राक्प्रध्वंसाभावाद् गुणात्यन्ताभाववत्त्वेनानुपातीकृत्य गुणात्यन्ताभाव-विरोधिमत्त्वमिति लक्षणमिति न कश्चिद्दोषः। समवायीति। अत्र समवायिकारणत्वयोग्यता विवक्षिता, अतो न प्रथमलक्षणाव्याप्तिः॥

६०। 'जातिमत्त्वे सतीति। अत्र चलनात्मकं कर्म, भिन्नत्वं समवायिकारणरहितत्वम्, द्रव्यभिन्नमिति बोध्यम्। जात्यादावतिव्याप्तिवारणाय सत्यन्तम्, द्रव्यकर्मणोरतिव्याप्तिवारणाय 'पर'ेति विशेषणम्॥

६१। आद्येति। आद्यसंयोगासमवायिकारणत्वमित्येकं लक्षणम्, अपरन्तु आद्यविभागा-समवायिकारणत्वं चेति ध्येयम्। संयोगजसंयोगविभागजविभागासमवायिकारणयोरतिव्याप्ति-वारणाय लक्षणद्वये आद्यपदद्वयम्, घटादावतिव्याप्तिवारणाय लक्षणयोरसमवायीति विशेषणम्। ननु संयोगविभागाजनके विनश्यदवस्थकर्मणि नासमवायिकारणता, कार्यान्तरं प्रति कार्यकाले सत एव तत्त्वात् इति चेन्न ; विनश्यदवस्थस्य कर्मणोऽभावाद् विनश्यदवस्थे कर्मणि नाव्याप्तिः। (भावे वा) तस्यापि संयोगविभागजनकस्वरूपयोग्यतावदविनश्यदवस्थकर्मगतजातिमत्त्वात् इति दिक्॥

६२। [1]नित्यमिति। व्यक्तिसमवेतं व्यक्तिवृत्तीत्यर्थः। आकाशादावतिव्याप्तिवारणाय 'व्यक्तिवृत्ती'ति ; तथाऽपि विशेषादावतिव्याप्तिः स्यात्तद्वारणाया'नेके'ति। अन्ते विशेषास्तत्तद्विशेष-वृत्तय एव नानेकवृत्तयः ; विशेषणत्वेन रूपेण सर्वेण तथा प्रत्येकावृत्तिधर्मो न समुदायवृत्तिरिति न्यायादिति भवत्यतिव्याप्तिवारणम्। तेन विशेषणेन समवायादावतिव्याप्तिवारणाय 'एक-' मिति, असद्वायमित्यर्थः। समवायादेः सम्बन्ध्यादिनिरूप्यत्वेन सद्वायत्वाद् अनेक-कपालावृत्ति-घटादिपदार्थेऽतिव्याप्तिवारणाय 'नित्यमि'ति। अन्ये तु अनेकसमवेतविशेषणेन विवक्षित-पदार्थान्तरेणैव समवायादावतिव्याप्तिवारणं तथा चैकमिति विशेषणं लक्षणान्तरं च निःसामान्य-वत्त्वे सति समवेतत्वं बोध्यमित्याहुः। अपरे तु घटत्वं नाना गोत्वं नाना इति स्वरूपकथनमिति प्रोचुः॥

६३। [2]विशेष इति। नायमुद्देशस्तस्य पूर्वोक्तत्वात्, किन्तु यावन्नित्यद्रव्यवृत्तित्वेन

1. 'द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्' इति कणादसूत्रे (वै० स० १-१-१६) 'अनपेक्ष इत्यानन्तरं 'गुण' इति पूरणीयम्, संयोगविभागेष्वनपेक्षः सन् कारणं यो न भवति स गुण इत्यर्थः। तेन 'संयोगविभागसमवायित्वासमवायिकारणत्वशून्यत्वं सामान्यसमानाधिकरणं गुणत्वव्यञ्जकं सामान्यवत्त्वं सति कर्मान्यत्वे च सतागुणवत्त्वमेव वा गुणलक्षणम्' इति शङ्करमिश्राः।

2. 'सामान्यं विशेष इति बुद्ध्यपेक्षम्' ( वै० स० २-२-३ ) इति कणादसूत्रम्। 'सामान्यं द्विविधं परमपरञ्च। तत्र परं सत्ता, अपरं सत्ताव्याप्यं द्रव्यत्वादि। तत्र सामान्यस्य तद्विशेषस्य च लक्षणं बुद्धिरेव। अनुवृत्तबुद्धिः सामान्यस्य, व्यावृत्तबुद्धिर्विशेषस्य' इत्युपस्कारः।

3. 'अन्त्यत्वान्नित्यो विशेषेभ्यः' ( वै० स० २-२-६ ) इति कणादोक्तं विशेषलक्षणम्। तत्र 'अन्तेऽव-साने भवन्तीत्यन्त्याः, यतो न व्यावर्तकान्तरमस्ती'त्याचार्याः। 'उत्पाद-विनाशयोरन्तेऽवसाने भवन्तीत्यन्त्याः नित्यद्रव्याणि तेषु भवन्तीत्यन्त्या विशेषाः' इति वृत्तिकृतः।

अनन्ता उक्ता ये विशेषास्तेषां जातिशून्यत्वे सति एकमात्रसमवेतत्वमिति लक्षणं बोध्यम् ॥

६४ । नित्य इति—आकाशादावतिव्याप्तिवारणाय सम्बन्धत्वभागः, संयोगेऽतिव्याप्तिवारणाय नित्यत्वभागः । तथाऽपीश्वरेच्छारूपे वाच्यवाचकलक्षणसम्बन्धेऽतिव्याप्तिरिति चेत् ? अत्र केचित् सम्बन्धशब्देन मुख्यसम्बन्धस्य गृहीतत्वादिति समाधानं प्रोचुः । तन्न ; मुख्यसम्बन्धस्य संयोगसमवायान्यतररूपतया आत्माश्रयात् । अन्ये तु सम्बन्धित्वं प्राप्तित्वमित्याहुः । तदपि न ; प्राप्तित्वस्यापि संयोगसमवाय एवाऽऽसन्नतया पूर्वदोषानुद्धारात् । वस्तुतस्तु जातिशून्यत्वे सति असमवेतभावत्वं [1]समवायत्वमित्यत्र तात्पर्यान्नोक्तदोष इत्यर्थः ॥

६५ । प्रतियोगीति । ननु प्रतियोगिशब्देन निरूपकमात्रग्रहणे संयोगादावतिव्याप्तिः, विरोधिग्रहणे च विरोधित्वस्य सहावस्थानाभावनियमरूपत्वेनात्माश्रयः, अन्योन्याभावेऽव्याप्तिश्च ? 'अभावविरहात्मत्वं वस्तुनः प्रतियोगिता' ( कुसुमाञ्जलि ३।२ ) इत्यवगतेन स्वाभावग्रहणेनाऽऽत्माश्रयाद्युद्धारोऽनुमत इति चेत्, न ; अभावत्वस्याखण्डोपाधितया सर्वस्य समञ्जसत्वात् ॥

६९ । अरूप इति । पृथिव्यादावतिव्याप्तिवारणायारूप इति । गगनादावतिव्याप्तिवारणाय स्पर्शवानिति, स्पर्शात्यन्ताभावविरोधिमानित्यर्थः ॥

७१ । आदित्यपरिवर्त्तनेति । आदित्यपरिवर्त्तनोत्पाद्यपरत्वासमवायिकारणाधारत्वे सति परत्वानधिकरणमित्येकं लक्षणम् ; अपरन्तु आदित्यपरिवर्त्तनोत्पाद्यापरत्वासमवायिकारणाधारत्वे सति अपरत्वानधिकरणमिति बोध्यम् । अतो न वैयर्थ्यम् । प्रथमलक्षणं गुणादावतिव्याप्तिवारणाय असमवायिकारणाधारत्वे सतीति विशेषणम्[2] ॥

---

1. 'अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इहेति प्रत्ययहेतुः स समवायः' इति । 'अनयोर्द्वयोरविद्यमानत्वमयुतसिद्धिः, इह कुण्डे दधि, इह कुण्डे बदराणीतिवत् इह तन्तुषु पटः, इह वीरणेषु कटः, इह द्रव्ये द्रव्यगुणकर्माणि, इह गवि गोत्वम्, इहाऽऽत्मनि ज्ञानम्, इहाऽऽकाशे शब्द इतीहबुद्धिरुत्पद्यमाना न विना सम्बन्धमुत्पत्तुमर्हति, तेनानुमीयतेऽस्ति कश्चित् सम्बन्धः ; न चासौ संयोग एव, अन्यतरकर्मादीनां तदुत्पादकानाम् अभावाद् विभागपर्यवसानाभावाच्च सम्बन्धिनामयुतसिद्धत्वाच्च नियताधिकरणतयैवोन्नेयत्वाद् अप्रत्यक्षत्वादेकत्वान्नित्यत्वाच्च' इति श्रीशङ्करमिश्राः ।

2. अतः परमादर्शे कश्चिदंशः सम्यक्तया नोपलभ्यते, यथा—'शब्दासमवायिकारणभेर्यादिसंयोगवत्याकाशेऽतिव्याप्तिवारणाय···पि घट उत्पद्येत कारणतावच्छेदकावच्छिन्नयत्किञ्चित्प्रागभावसत्त्वात् । न च वाच्यं घट एव प्रतिबन्धकः, तथा च प्रतिबन्धकाभाव एव कारणं घटरूपप्रतिबन्धकस्याकारणत्वात् प्रागभाव एव पर्यवसानात् । न चास्तु प्रागभाव एव कारणं किन्तु प्रतिबन्धकाभावत्वे तत्कारणतेति वाच्यम्, घटध्वंसादेरपि स्वरूपयोग्यत्वापत्तेः, प्रतिबन्धकाभावत्वेन च कारणत्वे अन्योन्याश्रयापत्तेः, प्रतिबन्धकत्वस्य कारणीभूताभावप्रतियोगित्वात् । न च पूर्वक्षण एव नास्तीति घटो नोत्पद्यते, तत्तत्क्षणत्वेन कारणत्वाभावात् क्रमिकधारावाहिकज्ञानोत्पत्तेरित्यत एवामन्यगत्या तत्तत्क्षणत्वेन कारणत्वस्वीकारात्' ।

९३। अत्राऽऽद्यत्वेन पतनं विशेषणीयम्, अतो न द्वितीयादिपतनासमवायिकारणे वेगविशेषेऽतिव्याप्तिः। यद्वा, जातिविशिष्टविशेषपतनासमवायिकारणं स न भवतीति नातिव्याप्तिः; असमवायिकारणन्तु सर्वस्य प्रथमद्वितीयादिपतनस्य जातिविशेषावच्छिन्नस्य गुरुत्वमेवेति कश्चित्॥

९४। द्रवत्वशून्य इति, द्रवत्वभिन्न इत्यर्थः। घटाद्यसाधारणकारणे दण्डादौ अतिव्याप्तिवारणाय संग्रहेति। कालादावतिव्याप्तिवारणायासाधारणत्वभागः। संग्रहप्रागभावेऽतिव्याप्तिवारणाय भावत्वे सतीति बोध्यम्। संग्रहः संयोगविशेषः॥

९५। [1]स्वोत्पन्नेति। स्वोत्पत्तेर्द्रव्यावस्थानस्यासाधारणापादको गुणः संस्कारः। तथा हि, स्वोत्पत्तेर्या दण्डस्था घटस्य ज्ञानविषयत्वरूपाऽवस्था सा भावनया सम्पन्ना भवति, तस्या ज्ञानजनकत्वात्। एवं वेगाद् या कर्मशालित्वावस्था सा वेगेनापाद्यते, तस्योत्तरकर्मजनकत्वात्। एवं स्थितस्थापकाद् या गुरुत्वावस्था साऽऽपाद्यते स्थितस्थापकेनेति। गुणपदं प्रागभावादावतिव्याप्तिवारणाय॥

९८। [2]श्रोत्रग्राह्य इति। शब्दप्रागभावादावतिव्याप्तिवारणाय गुणत्वभागः॥

९९। ऊर्ध्वदेशेति। अदृष्टादावतिव्याप्तिवारणाय कर्मेति। वक्ष्यमाणलक्षणद्वये वक्रत्व-ऋजुत्वे संयोगविशेषाविति बोध्यम्॥

१००। [3]व्यापकमात्रमिति, जात्यन्तराव्याप्यमित्यर्थः। व्याप्यमात्रमिति, जात्यन्तराव्यापकमित्यर्थः। तच्च घटत्वादिर्व्याप्यमित्यर्थः। व्यापकरूपं द्रव्यत्वादिः। जातौ व्याप्यत्वन्तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं जातिसामानाधिकरण्यम्॥

१०१। [4]अनादिरिति। आकाशादावतिव्याप्तिवारणाय सान्त इति; घटादावतिव्याप्ति-

---

1. 'वेगस्थितिस्थापकभावनाभेदात् संस्कारस्त्रिविध' इति न्यायसिद्धान्तमुक्तावली। 'अत्र केचित्, उत्तरसंयोगेनैव पूर्वकर्मनाशोत्तरकर्मणोः सम्भवात् तत्पूर्वकर्मनाशककर्मोत्पत्तिस्वीकारे प्रयोजनाभावादलं वेगेन, तस्माद् वेगेन गच्छतीति कर्मजनकतया प्रत्यक्षमेव वेगे प्रमाणमित्याहुः' इति मुक्तावलीटीकायां दिनकरभट्टः।

2. 'ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे, श्रोत्रे कथमुत्पत्तिः? आद्यशब्देन बहिर्दशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते, तेन चापरस्तद्व्यापकः, एवंक्रमेण श्रोत्रोत्पन्नो गृह्यते' इति न्यायसिद्धान्तमुक्तावली।

3. प्रतीयमानेषु पिण्डेषु सूत्रवदेकस्याऽऽकारस्यानुपलम्भात् सामान्यं नास्त्येवेति सौगताः। तदयुक्तम्, गृह्यमाणासु गोव्यक्तिष्वश्वादिविलक्षणतयैकस्य सामान्याकारस्य प्रतिभासात्। यथा हि कपिलनीलधवलगोर्वोरेकासरूपता दृश्यते, तथैवासौ वाजिव्यक्तिष्वपि दृश्येत; न चैवम्, तस्मात् सकलगोव्यक्त्यनुगतमश्वादिविलक्षणमेकं सामान्यमवश्यमङ्गीकर्तव्यमिति।

4. प्रतियोगिसमवायिकारणवृत्तिः (घटप्रागभावस्य प्रतियोगी घटः, तत्समवायिकारणं कपालद्वयं तत्र वृत्तिः)। प्रतियोगिजनकः 'भविष्यति' इति व्यवहारहेतुः प्रागभावः, प्रतियोगिजन्यः प्रतियोगिसमवायि-

वारणायानादिरिति । सादिरिति । आकाशादावतिव्याप्तिवारणाय सादिरिति ; घटादावतिव्याप्तिवारणायानन्त इति । संसर्गाभाव इति । गगनादावतिव्याप्तिवारणायाभाव इति ; अन्योन्याभावेऽतिव्याप्तिवारणाय संसर्गेति । प्रध्वंसेऽतिव्याप्तिवारणायाद्यविशेषणम् । तादात्म्येति । संसर्गाभावेऽतिव्याप्तिवारणाय तादात्म्येति । तादात्म्यात्यन्ताभावेऽतिव्याप्तिवारणाय तादात्म्यशब्देन प्रतियोगितावच्छेदकधर्मो संगृहीतस्तेन प्रतियोगितावच्छेदकारोपहेतुकत्वाविषयभावत्वमन्योन्याभावलक्षणं संसर्गस्यापि सामान्यप्रतियोगिरूपत्वाविषयाभावत्वं लक्षणं बोध्यमिति दिक् ॥

१०२ । प्रध्वंसेऽतिव्याप्तिवारणाय गगनादिसाधारणं नित्यत्वमाह—प्रध्वंसविरह इति, ध्वंसाप्रतियोगित्वमित्यर्थः ॥

१०३ । [1]निरवयव इति । निरवयवे गगनादौ अतिव्याप्तिवारणाय क्रियावानिति ॥

१०४ । द्रव्यसमवायिकारणमिति । घटादौ गुणादिसमवायिकारणेऽतिव्याप्तिवारणाय द्रव्येति ।

द्रव्यानारम्भकमिति । कपालादावतिव्याप्तिवारणाय द्रव्यानारम्भकमिति, द्रव्यारम्भणायोग्यमित्यर्थः । अन्यथा, नित्यद्रव्ये, कपालादावतिव्याप्तिः स्यात् । आरम्भकशब्देन समवायिकारणता निषिध्यते, न तु द्रव्यजनकतामात्रम् ; अन्यथा, द्रव्यनिमित्तकारणे दण्डादावति-

---

कारणवृत्तिः 'ध्वस्तः' इति व्यवहारहेतुः प्रध्वंसः । त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः, यथा—भूतले घटो नास्तीति । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः, यथा—घटः पटो न भवतीति । 'प्रतियोगितावच्छेदकारोप्यसंसर्गभेदादेकप्रतियोगिकयोरत्यन्ताभावान्योन्याभावयोर्बहुत्वम्' इत्यन्नंभट्टः ।

'केवलाधिकरणादेव 'नास्ति' इति व्यवहारोपपत्तौ अभावो न पदार्थान्तरम्' इति गुरवः । तन्न ; अभावानङ्गीकारे केवलस्य निर्वक्तुमशक्यत्वात् । 'अभावाभावो भाव एव, नातिरिक्तः, अनवस्थाप्रसङ्गात् । ध्वंसप्रागभावः प्रागभावध्वंसश्च प्रतियोग्येव' इति प्राञ्चः । 'अभावाभावोऽतिरिक्त एव, तृतीयाभावस्य प्रथमाभावरूपत्वात् नानवस्था' इति नवीनाः' । अयमाशयः—

अभावानामधिकरणात्मकत्वस्वीकारे गन्धाभावाधिकरणस्य जलस्य घ्राणेन्द्रियाग्राह्यत्वात्तस्याप्रत्यक्षत्वापत्तिः । यो गुणो यदिन्द्रियेण गृह्यते तन्निष्ठा जातिस्तदभावश्च तदिन्द्रियेण गृह्यते इति नियमाद् गन्धात्मको गुणो यथा घ्राणग्राह्यस्तथा तदभावोऽपि घ्राणग्राह्यः । अधिकरणात्मकत्वे गन्धाभावस्य जलात्मकतया तस्य च घ्राणेन्द्रियाग्राह्यत्वादप्रत्यक्षत्वापत्तिः । अतिरिक्तत्वस्वीकारे न कोऽपि दोषः ।

1. किं पुनः परमाणुसद्भावे प्रमाणम् ? उच्यते—जालसूर्यमरीचिस्थं सूक्ष्मतमं यद् रज उपलभ्यते तत् सावयवम्, चाक्षुषद्रव्यत्वात्, पटवत् । त्र्यणुकावयवोऽपि सावयवः, महदारम्भकत्वात्, तन्तुवत् । यो द्व्यणुकावयवः स परमाणुः । स च नित्यः, कार्यत्वेऽनवस्थाप्रसङ्गात् ; तथा मेरुसर्षपयोरपि समानपरिमाणापत्तेः, परिमाणकारणीभूताया अवयवसंख्याया उभयत्र तुल्यत्वात् ।

व्याप्तिः स्यात्। आकाशादावतिव्याप्तिवारणाय कार्येति। गुणादावतिव्याप्तिवारणायान्तिमद्रव्यपदम् ॥

१०६। अन्त्यावयवीति। घटादावतिव्याप्तिवारणाय [1]भोगाधिकरणमिति विशेषणम्। आत्मन्यतिव्याप्तिवारणाय अवयवित्वरूपविशेषणम्, चरणादावतिव्याप्तिवारणाय चेति ॥

१०७। स्वसमवेतेति। ईश्वरे भोगः स्यादत आह—स्वसमवेतेति। यदि क्वचित् सुखसाक्षात्कारो भोगः क्वचिद्दुःखसाक्षात्कारो भोगस्तदाऽननुगमः, उभयसाक्षात्कारश्च भोगस्तदाऽसम्भवः, न ह्येकदा विनश्यदवस्थोभयसाक्षात्कारः सम्भवति; अत्राव्याप्तित्वात् आह—अन्यतरेति। अन्यतरत्वं तदन्यान्यत्वम्, तेन नाननुगम इति भावः[2] ॥

१०९। साक्षात्कारीति—साक्षात्जातिरिति न वैयर्थ्यमिति बोध्यम् ॥

११४। विभागानुत्पाद्येति। विभागजविभागमादाय अनेकक्षणातिव्याप्तिवारणाय विभागानुत्पाद्येति, अन्योन्याभावमादाय प्रागभावेति। अनादिप्रागभावमादाय महति कालोपाधौ वत्सराद्यात्मकेऽतिव्याप्तिः स्यात्, तद्वारणाय कर्मेति। तथा च येन कर्मणा यो विभागो जन्यते तेन प्रागभावावच्छिन्नं तत्तत्कर्म क्षण इत्यर्थः। अतः कर्मान्तरे क्षणचतुष्टयात्मके नातिप्रसङ्गः ॥

११९। तच्चेति। प्रागभावप्रतियोगितादशायामतिप्रसङ्गवारणाय रहितान्तम्। ध्वंसप्रतियोगितादशायाम् अतिप्रसङ्गवारणाय उत्तरभागः। स्वकार्येति। विनश्यदवस्थदशायामपि स्वरूपप्रागभावघत्तया सम्बन्धवत्ता वर्त्तत इति नाव्याप्तिः; प्रागभावत्वदशायां ध्वंसदशायाञ्च नातिव्याप्तिः, स्वरूपाभावेन स्वकार्यप्रागभावेन स्वकार्यप्रागभावसम्बन्धाभावात् ॥

१२१। भावनेति। प्रत्यभिज्ञानेऽतिव्याप्तिवारणायासाधारणेति। असाधारणत्वमनुभवत्वसामग्र्यसध्रीचीनत्वप्रत्यभिज्ञानुभवसामग्रीसहितसंस्कारजन्यत्वमेवेति ॥

१२२। अज्ञायमानेति। अज्ञायमानं करणं चक्षुरादिस्तज्जन्यो यथार्थोऽनुभवः प्रत्यक्षप्रमेत्यर्थः ॥

१२३-१२४। प्रमायोगिनि यस्मिन् सति प्रमा भवत्येवेति नियमो नञ्द्वयार्थः। घटादावतिव्याप्तिवारणाय न-कारद्वयम् ॥

१२५। व्याप्तिश्चेति। उपाध्यभावविशिष्टं सामानाधिकरण्यं व्याप्तिः। अवशिष्टभागो न लक्षणभागो लक्षणवाक्यप्रविष्ट इति न वैयर्थ्यम्[3] ॥

---

1. 'भोगायतन'मिति मूल-पाठः।

2. अतः परमादर्शे कश्चिदंशः सम्यक्तया नोपलभ्यते, यथा—'न च विनश्यदवस्थचरमदुःखसाक्षात्कारमादाय योगिनोऽपि भोगित्वापत्तिः, एतदन्यतर इति विशेषितसाक्षात्कारमादाय योगिनो भोगित्वस्य लक्ष्यत्वात् तस्य च तत्राभावात् इतरभेदसाधनेऽखण्डाभावेन वैयर्थ्यम् इति बोध्यम्'।

3. अतः परमादर्शे कश्चिदंशः सम्यक्तया नोपलभ्यते, यथा—'आश्रयोपाधिशरीरप्रविष्टव्यापकत्वाव्यापकत्व

१२६। व्यापकत्वादिभागस्य लक्षणमध्यानिवेशपक्षे तु व्यापकत्वं व्याप्तिनिरूपकव्याप्ति-मत्त्वम्, अत आत्माश्रय इत्यस्वरसादाह—व्यापकं साध्यमित्यादि। ननु तथाऽप्यात्माश्रय इति चेत्? न; साध्यसिद्धिकर्मत्वलिङ्गत्वं साधनत्वमित्यर्थात्॥

१२७। साधने...अतिव्याप्तिवारणाय साध्यव्यापकत्वभागः, प्रमेयत्वादावतिव्याप्तिवारणाय साधनाव्यापकत्वभागः॥

१२८। केवलान्वयीति। केवलमन्वयसहचारनिश्चयेन यत्र व्याप्तिर्गृह्यते स केवलान्वयीति लक्षणम्। अन्यथा, तदुपरञ्जकधूमोऽपि कदाचित् केवलान्वयीति बोध्यम्॥

१२९। एवं केवलव्यतिरेकसहचारनिश्चयेन यत्र व्याप्तिर्गृह्यते स केवलव्यतिरेकीति बोध्यम्॥

१३०। धूमो दशाविशेषे केवलव्यतिरेकी। कदाचित् पृथिवीत्वादेरन्वयव्यतिरेकित्वमित्यत्र-धातव्यम्। अयं ग्रन्थस्तूपरञ्जकाभिप्रायः॥

१३१। अर्थरूपत्वमिति, शब्दाप्रयोज्यज्ञानविषयत्वमित्यर्थः। शब्दरूपत्वमिति, शब्दप्रयोज्यज्ञानविषयत्वमित्यर्थः। शब्दस्येति, अनुमानविषयत्वेनेत्यर्थः। यद्वा, अनुमानं भावव्युत्पत्त्याऽनुमितिस्तद्विषयेणेत्यर्थः, शक्तिमत्पदस्यानुमितिविषयत्वात्, इदं पदमत्रार्थे शक्त-मित्यनुमितेराकारात्। तथा च यथा पदमनुमितिविषयं तथा तदर्थोऽपीति भावः। अविनाभावेति, व्याप्तिगर्भितत्वेनेत्यर्थः। यदाकाङ्क्षादिमत्पदं तज् ज्ञानविशेषपूर्वकमिति व्याप्तेरुपजीव्यत्वादिति भावः॥

१३३। तत्रेति। साध्यपक्षसंसर्गबोधकं वाक्यं प्रतिज्ञेत्यर्थः। लिङ्गस्येति। हेतुपक्ष-सम्बन्धबोधकं वाक्यं हेतुरित्यर्थः। परामर्शत्वेति। व्याप्तिपक्षधर्मताप्रतिपादकं वचनमुपनय इत्यर्थः। लिङ्गेति। हेतूपरागेण साध्यवत्तानिश्चायकं वाक्यं निगमनमित्यर्थः॥

१३४। लिङ्गत्वेनानिश्चितत्वमित्यविशिष्टपक्षधर्मत्वं तेनानिश्चितो हेतुत्वाभिमतोऽसिद्ध इत्यर्थः। इदन्तु लक्षणं व्याप्यत्वादित्रये गच्छति। तथा हि व्याप्तिर्यत्र न निश्चीयते, आश्रयो यत्र नावगम्यते तत्र सर्वत्र व्याप्तिविशिष्टपक्षधर्मत्वेनानिश्चितत्वमनुगतमस्ति। अपि च, यत्र ज्ञेया-सिद्धिर्यत्र ज्ञानासिद्धिस्तत्र सर्वत्र एवं रूपमस्तीति संक्षेपः। विरुद्धत्वमिति। हेतावसाध्याभाव-व्याप्तत्वं वैशेषिकमते लक्षणमूह्यम्। साधारणानैकान्तिकं लक्षयति—'पक्षादित्रयेति। अत्र विपक्षस्य वृत्तित्वमेतावन्मात्रं लक्षणम्, इतरथा वैयर्थ्यापत्तेः। असाधारणरूपमनध्यवसित-

---

तद्वत्त्वात्यन्ताभाव अखण्ड उपाधिः। तत्त्वात्यन्ताभावः संसर्गाभावविशेषत्वं तत्र प्रतियोग्यारोपघटितकधीविषया-भावत्वं विघटितं नियमाच्च व्याप्तिरिति नात्माश्रयादिः'।

'1. 'पक्षादित्रयवृत्तित्वमनैकान्तिकत्वम्' इति बलभद्र-सम्मतो मूल-पाठः।

माह—पक्षमात्रेति । पक्षमात्रसम्बन्धित्वमेतावन्मात्रं लक्षणवाक्यमाकलनीयम् । 'पक्षमात्रेति मात्रपदेन विद्यमानसपक्षव्यावृत्तत्वं बोध्यते । अयञ्च दशाविशेषे हेत्वाभास इति बोध्यम् ॥

१३६ । अनिष्टेति । अनिष्टस्य वह्न्यभावव्यापकधूमाभावादेः प्रसञ्जनमित्यर्थः ॥

१३७ । तुल्यत्वेनेति । वह्न्यभावादिधूमाभावयोः व्याप्यव्यापकभावापन्नत्वेन वह्न्यभाववचनधूमाभावादिवचनं प्रसञ्जनमित्यर्थः । वह्न्यभावो धूमाभावव्याप्य इति व्याप्तिज्ञानेन जनितो य आहार्यारोपो धूमाभावव्याप्यो वह्न्यभावव्याप्यः स्यादेवमाकारस्तेन जनितो य आपाद्याहार्यारोपः मानसत्वादिना भूतो धूमाभाववान् स्यादेवमाकारस्तर्क इति फलितोऽर्थः ॥

१३८ । निद्रेति, स्वप्नवहनाडिसंयोगोऽभिमतस्तत्सहायेनान्तःकरणेन मनसा जनितं ज्ञानं स्वप्न इत्यर्थः । निरिन्द्रियेति, निरिन्द्रियप्रदेशः स्वप्नवहनाडी । तेन क्लेशेनावस्थानं संयोगो निरिन्द्रिय इत्यर्थः । योगजादृष्टाननुगृहीतमनसो निरिन्द्रियप्रदेशेऽवस्थानं निद्रेत्यर्थः । योगजादृष्टानुगृहीतमनसो निरिन्द्रियप्रदेशावस्थाने निद्रात्वं मा भूदिति योगजेति ॥

१३९ । वस्तुस्वरूपेति, वैशिष्ट्यावहमित्यर्थः । 'वैशिष्ट्यस्य ग्रहणमिति वैशिष्ट्यविषयं ज्ञानमित्यर्थः । अतीतेति, सत्तारूपा या अतीतावस्था तद्विशिष्टं यद्वस्तु तस्येदंताविशिष्टेन सह यद्भेदावगाहि ज्ञानं तत् प्रत्यभिज्ञानमित्यर्थः ॥

१४० । उत्कटकोटिकसंशयं व्यक्तीकरोति—अनालिङ्गितेति । अनालिङ्गितत्वं तुल्यतया कोटौ ज्ञानगोचरविरहः, न तु कोट्यन्तरास्मरणम्, ज्ञानस्यासंशयत्वापत्तेः ॥

१४१ । प्रयत्नोत्पाद्येति । यत्नजन्यं यत् सुखादि तज्जन्यं यत् सुखं तत् सांसारिकमित्यर्थः । यद्यपि स्वर्गेऽपि सुखे यागादिगोचरयत्नाधीनत्वमस्ति, तथाऽपि स्वर्गे शरीराद्यवच्छेदेन स्वर्गजनमिर्वाहक यत्न इति भावः ॥

१४४ । अव्यापकत्वमिति । स्वाभावेन सादेश्यं समानदेशत्वं स्वप्रतियोगिकात्यन्ताभावसमानाधिकरणत्वमित्यर्थः ॥

१४५ । निर्बाधकमिति । जातिसङ्करादिदूषणरहितमित्यर्थः ॥

१४६ । आरोपितेति । आरोपितमीलत्वं रूपं यत्र एवंविधोऽभाव आलोकाभावः अन्धकार इत्यर्थः, न तु नीलं रूपं तम इति । यद्वा, यन्मते विशिष्टस्य तमस्त्वं तन्मते तद्गुणसंविज्ञानो बहुव्रीहिर्विधेयः । यन्मते नीलगुणमात्रं तन्मते 'सविशेषणे ही'ति न्यायो बोध्यः ॥

१४७ । ज्ञानसम्बन्धो ज्ञाततेति । ज्ञाततामन्यथासिद्धयति—ज्ञानसम्बन्ध इति । तथा च, विषयविषयिभाव एव सम्बन्धो ज्ञातविषयः, किं ज्ञाततयेति । तत्त्वज्ञानेनेति, तत्त्वज्ञानं प्रमा, तेनानयमेन सामस्त्येन वाऽवच्छेद्यत्वं यत् प्रमाविशेषरूपं तत् प्रमेयत्वरूपमित्यर्थः ॥

1. 'विशिष्टस्य ग्रहणम्' इति मूल-पाठः ।

१४८। गुणादिषु संख्याप्रतिभासनमन्यथयति--गुणादिषु चेत्यादिना ॥

१५१। कार्यायोगेति। यतः कार्यं द्वितीये क्षणे भवत्येव सा सामग्रीत्यर्थः। न च घटादिक्षणे रूपं भवत्येवेति घटमात्रस्यापि सामग्रीरूपत्वापत्तिरिति वाच्यम्; न हि घटमात्राद् द्वितीये क्षणे रूपादि जायतेऽपि तु सकलकारणसमवधानात्। यादृक् समवधानं स्वाव्यवहितोत्तर-क्षणकार्ये प्रयोजकं तत् सामग्रीत्यर्थः ॥

१५७। अन्योन्याभावस्येति। इदन्तु प्रमादपतितम्[1] ॥

१५८। वैशेषिकमते समवायस्यातीन्द्रियत्वान्न घटोऽयमित्यादिसविकल्पकत्वाय वैशिष्ट्यं भासते, तदाह—वैशिष्ट्यमिति ॥

१५९। समानाधिकरणमिति। इदं काकेन देवदत्तगृहम् इत्यादावुपलक्षणेऽतिप्रसक्तं बोध्यम् ॥

१६१। जातीति। उपलक्षणमेतत्। धर्मसम्बन्धोऽधिकरणत्वमिति बोध्यम् ॥

१६३। साधनेति। साधनं तत्त्वज्ञानं [2]निःश्रेयसमपवर्गादिः, तदभिधायकं शास्त्र-मित्यर्थः ॥ इति ॥

श्रीवासुदेवपरायण-श्रीमत्त्रिपाठि-विष्णुदासतनूजन्मसाधवीसूनु-

बलभद्र-कृतसन्दर्भः समाप्तः ॥

श्रीकृष्णार्पणमस्तु ॥

---

1. अतः परमादर्शे 'नन्वन्योन्याभावस्य नाशे…' इत्यादि कश्चिदंशो नास्तीति प्रतिभाति।
2. 'साधननिःश्रेयसाभिधायकं शास्त्रम्' इति बलभद्र-सम्मतो मूल-पाठः।

तर्कवागीशनाम्ना यः प्रथितोऽवनिमण्डले।
सुधीभिर्माधवश्चन्द्रो वाक्चिर्वंशप्रभाकरः ॥
टिप्पनी तस्य पुत्रेण वितेतियं सतां मुदे।
शेषानन्तस्य टीकायां बलभद्रस्य च क्रमात् ॥

* ॐ श्रीगुरवे समर्पणमस्तु ॐ *

# सटीक-सप्तपदार्थीगत-विशेषशब्दानां सूची